श्रीरामाचार्यविरचिता

# श्रुतिसिद्धान्ततत्त्वरत्नप्रकाशिका







सम्पादकः

**डा. प्रह्लादाचार्यः जोशि**

न्याय-वेदान्तप्राध्यापकः

श्रीजयतीर्थविद्यापीठम्, बेङ्गलूरु



Poornaprajna Samshodhana Trust

Poornaprajna Vidyapeetha, Katriguppa Main Road,
Bengaluru - 560028

2021

श्रीविश्वेशतीर्थग्रन्थमाला – ४२

# श्रीरामाचार्यविरचिता

# श्रुतिसिद्धान्ततत्वरत्नप्रकाशिका

ISBN : 978-93-81275-51-1

सम्पादकः **डा. प्रह्लादाचार्यः जोशि**

प्रकाशनम् **पूर्णप्रज्ञसंशोधनट्रस्ट्**
(बेङ्गलूरुनगरस्थकर्नाटकसंस्कृतविश्वविद्यालयेन
'संशोधनकेन्द्रम्' इति सम्मानितम्)
पूर्णप्रज्ञविद्यापीठम्, श्रीविश्वेशतीर्थस्वामीजिमार्गः
कत्तरिगुप्पामुख्यमार्गः, बेङ्गलूरु - २८

**पुटानि** : lvii + 290 (344)

**प्रथममुद्रणम्** : २०२१

**मूल्यम्** : रु. २००.००

**मुद्रणालयः** : वागर्थ, बेङ्गलूरु

# Srutisiddhāntatatva-ratnaprakaśikā

## of Sri Rāmācārya


*Edited by*
**Dr. Prahladacharya Joshi**



Published by:
**Poornaprajna Samshodhana Trust**
**(Rcognised as 'Samshodhana Kendram' (Research Institute)**
**by Karnataka Sanskrit University, Bengaluru)**
Poornaprajna Vidyapeetha, Bengaluru - 560028

2021

Sri Vishveshatirtha Granthamala - 42

**Srutisiddhāntatatva-ratnaprakaśikā**

**of SriRāmācārya**

**ISBN : 978-93-81275-51-1**

Edited by : **Dr. Prahladacharya Joshi**

Published by : **Poornaprajna Samshodhana Trust**
**(Rcognised as 'Samshodhana Kendram' (Research Institute) by Karnataka Sanskrit University, Bengaluru)**
Poornaprajna Vidyapitha,
Katriguppa Main Road, Bengaluru- 28

First Edition : 2021

Pages : lvii + 290 (344)

Price : Rs. 200-00

Printed by : Vagartha, Bangalore

# अनुग्रहसन्देशः

विद्वद्धौरेयैः श्रीरामाचार्यैः विरचितं 'श्रुतिसिद्धान्ततत्त्वरत्न-प्रकाशिका'नामकं ग्रन्थरत्नमवलोक्यातीव हृष्टा वयम् ।

न्यायामृतग्रन्थरत्नप्रबन्धॄणां श्रीमद्व्यासतीर्थश्रीमच्चरणानां वादपद्धतिम् अनुसृत्यायं ग्रन्थप्रवरः प्रणीत इति ग्रन्थाध्येतॄणां विदुषां नातिरोहितम् ।

न्यायामृतग्रन्थ इवात्रापि चत्वारो परिच्छेदाः विद्यन्ते । न्यायामृते प्रथमपरिच्छेदे मिथ्यात्वानुमाननिरासः विस्तरेण विहितो दृश्यते । अत्र त्वयं विषयः द्वितीयपरिच्छेदे निरूपितः। अस्मिन् ग्रन्थे प्रथमप्रकरण एव भेदसमर्थनम्, तस्य धर्मिस्वरूप-त्वोपवर्णनम् इत्यादिकं विस्तरेणोप-वर्णितं दृश्यते ।

भामत्युक्तविषयादिनिरासः, द्वितीयाभावोपलक्षितात्मनः शास्त्रवेद्यत्वनिरासश्च कृतः । पञ्चविधो भेदः प्रमाणमूल इति समर्थ्य भेदश्रुतेरननुवादकत्वं प्रसाधितम् । बिम्बप्रतिबिम्ब-योरभेदमपाकृत्य भेद एव समर्थितः ।

द्वितीयपरिच्छेदे विस्तरेण मिथ्यात्वानुमानमपाकृतम् । श्रुत्यादिभिः विश्वसत्यत्वं प्रसाधितम् । असतः साधकत्व-निराकरणपुरस्सरं प्रतिकर्मव्यवस्थाभङ्गः विस्तरेणोपवर्णितः । 'नेह नाना', 'एकमेव' इत्यादिश्रुत्यर्थः सुष्ठूपवर्णितः । आश्रयविषया-भावेन अद्वैतनयेऽज्ञानानुपपत्तिः समर्थिता ।

तृतीयपरिच्छेदे विवरणोक्तनियमविधित्वभङ्गः, परोक्त-श्रवणादिविधिभङ्गः, शब्दापरोक्षत्ववादभङ्ग इत्येवमादिविषयाः सुष्ठु निरूपिताः ।

चतुर्थपरिच्छेदे मुक्तावानन्दतारतम्यं प्रसाधितम् । परमते पुमर्थत्वानुपपत्तिः सुष्ठूपपादिता ।

यद्यपि ग्रन्थस्यास्य निबन्धारः श्रीरामाचार्याः कस्य विनेयाः, कं देशमध्यवसन् इत्यादिविषये न बहु विजानीमः । तथाऽपि बहुत्र अद्वैतसिद्धिग्रन्थगतविषयानुवादपुरस्सरं तरङ्गिण्याद्यनुक्त-दोषोद्भावनेन षोडशशतकपरवर्तिन इति विभावयितुं शक्यते । कोटिक्रमेण लघुवाक्यैरलघुभावाविष्कारोऽत्र विहितः ।

रामाचार्यकृते प्रबन्धे भामत्युक्तविषयविमर्शः शास्त्रारम्भ-समर्थनमित्यादयः बहवो विषयाः न्यायामृतानुक्ताः दृश्यन्ते ।

ग्रन्थरत्नस्यास्य शोधकं श्रीमत्सत्यात्मतीर्थविनेयं विद्वत्तल्लजं प्रह्लादजोशीमहाभागं सामोदमभिनन्दामहे । एकामेव मातृ-कामवलम्ब्य ग्रन्थशोधनमतीव प्रयासदायकम् । अयं च शास्त्राभिज्ञः सम्यगेव शोधकार्यं श्रद्धया व्यधात् । अतोऽस्म-त्साधुवादानर्हति । अस्मात् श्रीकृष्णः शास्त्रपाठप्रवचन-ग्रन्थशोधनसेवां सदा स्वीकरोत्विति प्रार्थयामहे ।

ग्रन्थस्यास्य प्रकाशनार्थं समुचितवित्तं समर्पितवते, बेङ्गलूरु-नगरस्थनारायणहृदयालये हृदयरोगनिवारकविभागे लौकिकीं वृत्तिमनुतिष्ठन्नपि न्यायामृतादिग्रन्थाध्ययनेन तत्त्वप्रकाशिकादि-ग्रन्थपाठनेन च स्वजीवनं भगवत्प्रियं विहितवते, अध्ययन-

विद्वज्जनसम्पोषणकर्मणि बद्धादराय श्री के.पि. वेङ्कटेशाचार्याय अस्मदाराध्यः श्रीकृष्णः आयुरारोग्यभाग्याद्यभिवर्धनेन शं तनोत्विति सम्प्रार्थयामहे ।

**श्रीश्रीविश्वप्रसन्नतीर्थश्रीपादाः**

श्रीपेजावर-अधोक्षजमठः,

उडुपि

# निदेशकवचांसि

विद्वद्धौरेयैः श्रीरामाचार्यैः विरचितं 'श्रुतिसिद्धान्ततत्त्वरत्नप्रकाशिका'-नामकं ग्रन्थरत्नं विदुषां करकमलयोः समर्पयितुं मोमुद्यते नश्चेतः । विश्वविख्यातानां श्रीमद्व्यासराजगुरुसार्वभौमानां ग्रन्थरत्नान्युपजीव्य प्रवृत्तोऽयं ग्रन्थः । अद्वैतसिद्ध्युक्तदोषाणामलग्नताऽत्र प्रतिप्रकरणम् आविष्कृता । अत्रापि न्यायामृत इव चत्वारि प्रकरणानि विद्यन्ते । आदौ तत्त्ववादिनां मत एव अनुबन्धचतुष्टयस्य युक्तत्वम्, मायावादिनयेऽनुबन्धचतुष्टयस्यानुपपन्नत्वं च निपुणतरं प्रपञ्चितम् । विष्णुप्रसादस्यैव मोक्षसाधनत्वं सम्यग् प्रतिपादितम् । एवं भेदस्य धर्मिस्वरूपत्वं तस्य प्रमाणसिद्धत्वं, भेदपञ्चकस्यापि प्रमाणसिद्धत्वं सम्यगेव प्रतिपादितम् ।

द्वितीयपरिच्छेदे मिथ्यात्वसाधकहेतूनां दृश्यत्व-परिच्छिन्नत्व-अंशित्वादीनां साध्यसाधनाक्षमत्वं स्फुटमुपपादितम् । आपाततोऽभेदप्रतिपादकतया प्रतीयमानानां वेदादीनां भेदप्रतिपादकत्वं निरूपितम् । असतः साधकत्वमपाकृत्य विश्वसत्यत्वं प्रतिपादितम् ।

तृतीयपरिच्छेदे श्रवणादिसाधननिरूपणप्रस्तावे विवरणोक्तप्रक्रिया पराकृता । मुक्तावानन्दतारतम्यम् अवश्यमङ्गीकार्यमेवेति समर्थितम् ।

एवंविधस्य ग्रन्थरत्नस्य शोधनकार्यम् एकामेव मातृकामवलम्ब्य कृतं विद्वत्तल्लजेन जोशीत्युपाह्वप्रह्लादाचार्येण । अयं च विद्वद्धौरेयः

जात्या नैयायिकोऽपि वेदान्ते कृतभूरिपरिश्रमः श्रीमदुत्तरादि-मठाधीशानां श्रीमत्सत्यात्मतीर्थश्रीमच्चरणानामन्तेवासी । जयतीर्थविद्यापीठे न्याय-वेदान्तग्रन्थान् पाठयन् कालक्षेपं विधास्यति । महता यत्नेन प्रतिभया च ग्रन्थरत्नमिदं तेन शोधितम् । अस्मद्गुरुचरणैः पेजावरमठाधीशैः कीर्तिशेषैः श्रीमद्विश्वेशतीर्थश्रीमच्चरणैः सुधापरीक्षावसरे विद्वानिति प्रशंसितः समेषां विदुषां प्रीत्यास्पदो विद्यते । अनेन चैतादृशग्रन्थशोधनकार्यं नितान्तं प्रवर्ततामिति भगवन्तं प्रार्थये ।

ग्रन्थस्यास्य प्रकाशनार्थं समुचितवित्तप्रदानेन शास्त्रसेवां कृतवान् बेङ्गलूरुनगरस्थनारायणहृदयालये हृदयरोगनिवारकविभागे कार्यनिरतः श्री के.पि. वेङ्कटेशाचार्यः । श्रीमत्सत्यध्यान-तीर्थश्रीमच्चरणानां प्रीत्यास्पद आसीद् अस्य पितामहः वासु-देवाचार्यः । अस्य पित्रोः यमुनाबाई-प्रह्लादाचार्यनामधेययोः पुण्यलाभार्थं ग्रन्थप्रकाशनमयं विहितवान् । वृत्त्या वैद्योऽपि भवरोगनिवारकं श्रीमध्वभगवत्पादाचार्यप्रणीतं शास्त्रं शृण्वन् पाठयंश्चायं कालं यापयतीति महतः प्रमोदस्य विषयः । अनेनेदृशी सेवा सदा प्रसरत्विति श्रीकृष्णं प्रार्थये ।

**डा. ए.वि. नागसम्पिगे**
निदेशकः

।। श्रीगुरुभ्यो नमः ।।

# उपोद्धातः

## वेदान्तदर्शनम्

अस्ति वेदान्तदर्शनं सर्वदर्शनमूर्धन्यम् । शारीरकमीमांसेत्येतयाऽपि समाख्ययेदं शास्त्रं सर्वविदितम् । सन्त्यस्योपजीव्या उपनिषद एव। वेदस्यान्तिमसिद्धान्तस्य निरूपकत्वादुपनिषदामिवास्यापि 'वेदान्त' इत्येषा संज्ञाऽन्वर्थतां भजते । औपनिषदानां वचनानां मिथः विरोधेनावभासमानानां विरोधपरिहाराय मीमांसया तत्त्वनिर्णयाय च भगवान् बादरायणो व्यासः 'ब्रह्मसूत्र'अपरनामकं दर्शनमिदं प्राणैषीत् । एतत् ब्रह्मसूत्रनामकं दर्शनमखिलवेदान्तसिद्धान्तानामाकरग्रन्थः । इमां मीमांसामेव मूलमवधार्य नैके आचार्याः स्वस्वसिद्धान्ताभिलषितं प्रापुः ।

शङ्कर - रामानुज - भास्कर - निम्बार्क - वल्लभ - श्रीकण्ठप्रभृतयः स्वसिद्धान्तं स्वमनीषोत्थं वेदव्याससम्मतमभिमन्यमानाः भाष्यादिप्रणयनद्वारा स्वशिष्यैः प्रसारयामासुः स्वयं च प्रसस्रुः ।

## माध्ववाङ्मयम्

द्वैत-अद्वैतशास्त्रयोरनादिकालतः प्रतिद्वन्द्विता प्रथिता जागर्ति च। सहजसिद्धा च । तत्र सिद्धान्तप्रतिष्ठापकानामाचार्याणां शोधबुद्धिः खण्डनमण्डनप्रणाली चाविरतं प्रसृता, विद्वन्मण्डलीषु वादादिषु च अधुनापि तत्त्वगवेषणाय परमोत्साहेन प्रवर्तमाना वरीवर्ति ।

प्रायः पञ्चमशतके वा ततः पूर्वं वा बौद्धमतं भारतेषु सर्वत्र प्रथितं प्रसृतं चासीत् । ततः शङ्कराचार्यैः बौद्धमतमामूलाग्रमुत्पाट्याद्वैतं

व्यवस्थापि । पश्चाच्च शङ्कराचार्यशिष्यवर्याः पद्मपादप्रभृतयश्चत्वारः अद्वैतशास्त्रं सर्वत्र प्रसारयामासुः। तदनन्तरकालीना अपि अद्वैत-मतानुयायिनः इदमेव तत्त्वमिति मन्यमानास्तत्त्वगवेषणे अनुबद्धा अपि असमर्था अभूवन् । पूर्वोक्ताचार्यपद्धतिमवलम्बमानाः उपनिषदामैदम्पर्यं व्यासमुनेर्हार्दं श्रुतिस्मृतीतिहासादीनां परमं तत्त्वं च न व्यजानन् । तत्त्वनिर्णयायैव प्रणीतानां बादरायणसूत्राणां निर्णायकत्वं नाध्यगमन् । ततोऽद्वैतमेव परमं तत्त्वमिति सर्वत्र श्रुतिसम्मतत्वेन व्याहरन्। तत्काले न केनाप्यद्वैतं खण्डितं मथितं च मूलं तत्त्वम् । नाप्युपनिषत्सु निगूढं परमं भगवत्तत्त्वं प्रकटीकृतम्।

मुख्यप्राणावतारभूताः श्रीमदानन्दतीर्थभगवत्पादा अद्वैतवादः प्रमाणरहितः प्रामाणबाधितश्चेति प्रकटीचक्रुः। पञ्च भेदान्, विष्णोः सर्वोत्तमत्वं सकलगुणपूर्णत्वं जगज्जन्मादिकारणत्वं च सयुक्ति सप्रमाणं व्यवस्थापयन् । श्रीमदानन्दतीर्थैरद्वैतवादस्यापातरमणीयता च प्रादर्शि । भेदवाद एवानादिसत्सम्प्रदायादागत उपनिषत्सु प्रतिपादित इति स्वीयसर्वमूलग्रन्थेषु प्रतिपादयामासुः श्रीमन् मध्वाचार्याः।

जगतः सत्यत्वं, विष्णोः सर्वोत्तमत्वं, भगवतः सकलगुणपूर्णत्वं, जीवेशयोः भेदं चानुभवबलेन परीक्ष्य प्रमाणानुसारेण च विवेचनं श्रीमदानन्दतीर्थीयभाष्ये परिजृम्भते । लौकिके विषये सर्व-प्रमाणेभ्योऽनुभवस्य प्राबल्यं, वैदिके च श्रुतेरेव प्राबल्यं सयुक्तिकं विमर्शयन्ति श्रीमदाचार्याः स्वीये भाष्ये ।

न कदाऽप्याचार्यैः स्वकपोलकल्पितं प्रमाणातीतमभाणि । यथा मधुकरः विविधेभ्यः कुसुमेभ्यः सारभूतं रसं सङ्गृह्य मधु विदधाति

एवमेवाचार्याः सारभूतं भगवतः गुणपूर्णत्वं सकलदोषविदूरत्वं विविधप्रमाणेभ्य उद्धृत्य प्राणिनां वितरन्ति । परमास्तिकशिखामणय आचार्याः स्वनिरूपितं प्रमेयं प्रमापयितुं सर्वसम्मतमनन्तं वेदराशिं प्रमाणयन्ति । अत एव आचार्यकृतीनां 'सर्वमूलं' इत्यन्वर्थसंज्ञा। सर्वः वेदराशिः स्वकृतेर्मूलं इति हि सर्वमूलम् ।।

## प्राचीनटीकाकाराः

माध्ववाङ्मये प्राचीनटीकाकारा इति प्रसिद्धाः श्रीपद्मनाभतीर्थाः श्रीनरहरितीर्थाः श्रीत्रिविक्रमपण्डिताचार्याः । एतैः श्रीमदानन्द-तीर्थभगवत्पादरचितभाष्यस्य टीका व्यरचि । एते श्रीकृष्णार्चनदीक्षिता अष्टौ मठाधीशाश्च श्रीमदानन्दतीर्थभगवत्पादानां साक्षाच्छिष्या आसन् ।

## श्रीमट्टीकाकृत्पादाः श्रीजयतीर्थश्रीमच्चरणाः

श्रीमट्टीकाकृत्पादा इत्येव प्रसिद्धाः श्रीमज्जयतीर्थश्रीमच्चरणाः (१३३५-१३८५) श्रीमदानन्दतीर्थभगवत्पादाचार्यभाष्यस्य विस्तृतामतिगभीरां मन्दानामपि सुबोधां विदुषामपि दुरवगाहां टीकां व्यरचयन्त । ते च मध्वाचार्यपीठाधिष्ठितेभ्यः मध्वाचार्यसाक्षात्शिष्येभ्यः श्रीमदक्षोभ्यतीर्थेभ्यः पारिव्राज्यं विद्यां चाध्यगमन् । श्रीमज्जयतीर्थाः मध्वचार्यकृतानामष्टादशग्रन्थानां टीकाः अरचयन्त, येन तेषां 'टीकाकृतः' इत्येव प्रसिद्धिः । सत्स्वप्यन्येषु प्राक्तनेषु सर्वमूलग्रन्थानां टीकाकारेषु आचार्यग्रन्थानां बहूनां श्रीजयतीर्थैः टीकानिर्माणात् समर्थतया इतरवादानां विमर्शनाच्च श्रीजयतीर्थानामेव टीकाकाराः इत्यन्वर्थकं नाम ।

आसु टीकासु श्रीजयतीर्थप्रणीतासु श्रीमन्न्यायसुधा अतिशेते यत्र न्याय-वैशेषिक-चार्वाक-जैन-बौद्ध-विज्ञानवादि-मायावादि-सांख्य-योग-भाट्ट-प्राभाकर-भास्कर-रामानुज-पाशुपतादिशास्त्राणां विशिष्टो विमर्शः जागर्ति । श्रीमध्वाचार्याणां हार्दं चाविष्करोति ।

श्रीमज्जयतीर्थैः स्वतन्त्रास्त्रयो ग्रन्थाः रचिताः ये च पद्यमाला प्रमाणपद्धतिः, वादावली चेति । तत्र वादावली चित्सुखाचार्यरचिततत्त्व-प्रदीपिकाग्रन्थस्य खण्डनात्मिका अद्वैतारण्यस्य दावावलीसदृशी परिजृम्भते। तत्र च मिथ्यात्वखण्डनं मिथ्यात्वसाधकदृश्यत्व-जडत्व-परिच्छिन्नत्वादिहेतूनां निराकरणम्, मिथ्यात्वानुमानस्य प्रत्यक्षानुमानश्रुतिस्मृतिबाधः अंशित्वानुमानखण्डनम्, मिथ्यात्वहेतूनां प्रतिकूलतर्कपराहतिः, सत्यत्वसाधकहेतूनां प्रतिकूलतर्कोद्धारः, नेहनानेत्यादिश्रुतीनामद्वैतपरत्वनिषेधः भेदपरत्वसमर्थनं, भेदबाधकश्रुत्यनुमानादीनां निरासः, भेदस्य प्रत्यक्षसिद्धत्वसमर्थनम्, भेदस्य धर्मिस्वरूपत्वनिर्वचनम्, साक्षिसमर्थनम्, प्रामाण्य-स्वतस्त्वादिविचारः, विशेषसमर्थनं च, इत्यादयो नैके विषयाः वादावलीग्रन्थे समायोजिताः। एतामेव वादावलीमवलम्ब्य श्री० यासतीर्थैः न्यायामृतं व्यरचि व्यस्तारि च अद्वैतवाददोषनिचयम् ।

## वादरङ्गाचार्याः श्रीव्यासतीर्थाः

श्रीमदानन्दतीर्थभगवत्पादास्तावत् श्रीमद्बादरायणसम्मतद्वैत-वेदान्तप्रतिष्ठापनाचार्या इत्येव विश्रुताः । मोक्षजनकतत्त्व-ज्ञानोत्पादकशास्त्रनिर्मातार इति च विततकीर्तयः ।

श्रीपद्मनाभतीर्थाः श्रीनरहरितीर्थाः त्रिविक्रमपण्डिताचार्या इत्यादयः 'प्राचीनटीकाकाराः' इत्येव प्रथां भेजिरे यतो हि श्रीमन्मध्वा-चार्यभाष्यस्य इदंप्रथमतया व्याख्यातत्वात् ।

श्रीमन्न्यायसुधादिदिव्यप्रबन्धप्रणयनेन श्रीमज्जयतीर्थपूज्यचरणाः 'टीकाचार्याः' इत्येव वेदान्तसाम्राज्ये विराजन्ते ।

श्रीमन्न्यायामृत - तर्कताण्डव - तात्पर्यचन्द्रिकादिग्रन्थप्रणेतारः सर्वतन्त्र-स्वतन्त्राः पदवाक्यप्रमाणपारावारपारीणाः श्रीव्यासराज-गुरुसार्वभौमास्तु 'वादरङ्गाचार्याः' इत्येव न्याय-वेदान्त-व्याकरण-वाक्य-प्रमाणादिशास्त्रादिप्रवीणैर्निर्मत्सरैः पण्डितैः संश्लाघ्यन्ते ।

द्वैतसिद्धान्तवाङ्मये मूलटीकाग्रन्थव्याख्यानत्वेन उपलभ्यमानेषु बहुषु ग्रन्थेषु व्याख्यानेषु प्रबन्धेषु च श्रीव्यासराजसार्वभौमविरचित-न्यायामृतादिवादग्रन्थाः आमूलाग्रं अतिगहनार्था इत्यत्र नास्ति सन्देह-लेशोऽपि । विषयेऽस्मिन् निरन्तरपाठप्रवचनासक्ताः वादकुशलाः नैकग्रन्थेषु चतुरा पण्डितप्रकाण्डा एव प्रमाणम् । व्यासतीर्थविरचितन्यायामृततात्पर्यचन्द्रिकातर्कताण्डवग्रन्थाध्ययनेन विना वेदान्तशास्त्रपाण्डित्यं को नाम लभेत । अन्यशास्त्राणा-मापातरमणीयतां वा को नाम प्रतिपद्येत। मतान्तरनिराकरणप्रावीण्यं चापि को नामाऽत्मसात्कुर्यात् । मध्ववाङ्मयव्याख्यातृभिः सर्वैरपि स्वाभिप्रेतार्थसमर्थनाय परमतनिराकरणाय च व्यासतीर्थवचांस्ये-वोदाह्रियन्त इत्यस्त्यस्य महामुनेरपारमहिमा । श्रीव्यासतीर्थानां शास्त्रपाण्डित्यं न केनापि विदुषा इयदिति परिमातुं शक्यम् । अत एव वङ्गदेशीयतार्किकशिरोमणिना पक्षधरमिश्रेण व्यासराजगुरु-वरेण्यानामनितरसाधारणपाण्डित्यमन्ववेक्ष्य विस्मितान्तःकरेणन निर्व्याजेन सानन्दं प्रास्तौषि–

यदधीतं तदधीतं यदनधीतं तदप्यधीतम् ।
पक्षधरविपक्षो नावैक्षि विना नवीनव्यासेन ।। इति ।।

तत्र व्यासत्रयनाम्ना विख्याताः वादग्रन्थाः न्यायामृतम् तात्पर्यचन्द्रिका तर्कताण्डवम् चेति विद्वन्मण्डलीषु इदानीमपि चर्चूर्यमाणाः दरीदृश्यते।

## न्यायामृतम्

श्रीव्यासतीर्थानां प्रथमा कृतिः न्यायामृताख्या स्वतन्त्रवादग्रन्थरूपा। श्रीव्यासतीर्थानामन्यासु कृतिषु न्यायामृतस्योल्लेखो दृश्यत इतीदं प्रथममिति विज्ञायते । चन्द्रिकायां (१प्रथमभागे-पु.४०) 'विस्तृतं चैतदन्यत्र' इत्युक्तम् । तत्र प्रकाशे श्रीराघवेन्द्रतीर्थश्रीमच्चरणैः 'न्यायामृते ज्ञाननिवर्त्यत्वान्यथानुपपत्तिभङ्गे इत्यर्थः' इति तस्यार्थो वर्णितः । अतः इदं न्यायामृतं चन्द्रिकातः पूर्वं रचितमिति निर्णीयते । तर्कताण्डवेऽपि (२भागे पु.४६) 'विस्तृतं चैतन्न्यायामृते' इति । अन्यत्र च (३भागे. पु.२१२) 'अत एव न्यायामृते तत्पदस्यैव गौणत्वमुक्तमस्माभिः' इति। तेन जानीमः न्यायामृतमेव व्यासतीर्थकृतिषु प्रथममिति ।

## न्यायामृतग्रन्थशैली

व्यासतीर्थाः विक्षिप्ततया स्थितानि सर्वाण्यद्वैतप्रस्थानान्यालोड्य तदीयसिद्धान्तप्रमाणप्रमेयानेकत्र सङ्कलय्य, विना साङ्कर्यं चानूद्य सविशेषं तेषां न्यायामृते विमर्शनमकार्षुः । न केनाप्याचार्यैरेतावतापि विक्षिप्ततयोक्तस्य सर्वस्यैकत्र सङ्कलनं विधाय नैकानां वादग्रन्थानाममूलाग्रं परिशील्य न्याय-वैशेषिक-भाट्ट-प्राभाकर-व्याकरणादिप्रणाल्या तत्रतत्रोक्तदिशा च तत्तदीयसिद्धान्ताभिमतयुक्तिजातेन च खण्डनं विमर्शनं च अकारि । भारतीयदर्शनेषु

एवमतिनिष्कृष्टया शैल्या खण्डनात्मकग्रन्थानां निर्मातृषु श्रीव्यासतीर्था एव आद्या अन्तिमाश्च । यद्यपि व्यासत्रयानन्तरं रचिता अपि केचन वादग्रन्थास्तथापि ते सर्वेऽपि व्यसत्रयच्छायारूपा एव। तदीययुक्तिभिरेव स्वसिद्धान्तं व्यवस्थापयन् । एतादृश्याऽसदृशप्रतिभया विलक्षणया शैल्या च न्यायामृतादिग्रन्थनिर्माणेन भारतीयदर्शनेष्वेवाद्वितीयं स्थानं श्रीव्यासतीर्थैरलाभि । न्यायामृतं चेदानीमपि द्वैताद्वैतवादगोष्ठीषु प्रधानपात्रं भजते । द्वैताद्वैतवादरूपे न्यायमृतप्रस्थाने चेदानीं यावत् खण्डनमण्डनरूपेण विंशत्यधिकाः प्रबन्धाः द्वैताद्वैतिभिश्च ग्रथिताः विलसन्ति ।

अद्वैतसिद्धिः –

न्यायामृतग्रन्थनिर्माणानन्तरमेव द्वैताद्वैतवादप्रस्थानप्रसङ्गेन तत्त्वविमर्शनकौतूहलकलितान्तरङ्गैर्मध्वमतावलम्बिभिरद्वैतमताश्रितैश्च विद्वद्भिः खण्डन-मण्डनात्मकाः ग्रन्थाः अकारिषन्तेत्ययं विषयः सुप्रसिद्ध एव । कानिचन व्याख्यानानि मूलाशयप्रकटनपराणि कानिचन अद्वैतसिद्ध्यादिग्रन्थखण्डनपराणि प्रद्योतन्ते । व्याख्यानेषु कानिचिदेव मुद्रितान्युपलभ्यन्ते । अमुद्रितानि व्याख्यानानि तत्रतत्र ग्रन्थेषु वा ग्रन्थागारेषु वा निर्दिष्टान्यत्रोदाह्रियन्ते ।

मधुसूदनसरस्वतीविरचिता न्यायामृतखण्डनात्मिका अद्वैतसिद्धिः। वङ्गालपुरवासिनः मधुसूदनसरस्वतयः पूर्वाश्रमे एव नवद्वीपवासिमथुरानाथसविधे न्यायमधीत्य वाराणसीं ययुः । तत्र च श्रीविश्वेश्वरसरस्वतीसविधे वेदान्तमधीत्य तेषां सकाशादेव तुर्याश्रमं भेजिरे । प्रायः एते व्यसतीर्थानामन्तकाले शोडशतमे शतके आसन् इति प्रथा । व्यासतीर्थानां वार्धक्ये एव एतैः न्यायामृतस्य खण्डनं

व्यधायि । प्रतिवाक्यमनूद्य एतैः न्यायामृतं खण्डितम् । द्वैतनये तदैव मधुसूदनसरस्वतीविरचिताद्वैतसिद्धिविमर्शनार्थं न्यायामृत-तरङ्गिणी-न्यायामृतकण्टकोद्धार-न्यायकल्पलता-न्यायामृतामोद टिप्पण्यः समुद्भूताः यत्र च न्यायामृतमण्डनं खण्डनं चाद्वैतसिद्धेर्वधायि।

## श्रुतिसिद्धान्ततत्त्वरत्नप्रकाशिका

न्यायामृतव्याख्यानव्याजेन अद्वैतसिद्धिखण्डनपराः नैके ग्रन्थाः तदनन्तरकाले प्रवृत्ताः । ते च न्यायामृततरङ्गिणी-न्यायामृतकण्टकोद्धारः न्यायकल्पलताप्रभृतयः पूर्वोदाहृताः । तत्र च सविस्तरमद्वैतसिद्धेः खण्डनं दरीदृश्यते । 'श्रुतिसिद्धान्ततत्त्वरत्नप्रकाशिका' नामिका श्रीरामाचार्यविरचिता कृतिरप्यद्वैतसिद्धिखण्डनपरा न्यायामृतसंक्षेपरूपा यस्यां कृतौ न्यायामृतोक्तविषयाः संक्षेपेण प्रकरणादिविभागेन च निरूपिताः । न्यायामृतगतानि क्लिष्टवाक्यानि सुदीर्घाणि च वाक्यानि संक्षिप्य सरळीकृत्य मन्दबोधाय श्रीरामाचार्यैः न्याया-मृतोक्तप्रकरणानि संगृहीतानि श्रुतिसिद्धन्ततत्त्वरत्नप्रकाशिकायाम् ।

## श्रीरामाचार्याणां देश-कालादिकम्

इमे श्रीरामाचार्याः स्वीयकृतौ कुत्रापि स्वगुरुनामादिकं वा स्वस्थानादिकं वा न निर्दिशन्ति । अत एतेषां कालदेशादिविमर्शने महदेव क्लेशोऽनुभूयते । 'रामाचार्यो महामध्वशास्त्रकाननकेसरी । करोति श्रुतिसिद्धान्ततत्त्वरत्नप्रकाशिकाम् ॥' इत्येव मङ्गलपद्ये दृश्यते। अन्तिममङ्गलेऽपि स्वीयविषये न किमपि निर्दिष्टमस्ति । श्रीव्यासराजानां कालः पण्डितानां बहूनां तथा मठपरम्परातः १४४७-१५३९ इति निर्धारितः । अत एतेषां कालः एकोन-चत्वारिंशदुत्तरपञ्चदशशतका(१५३९)नन्तरमेवेति निश्चेतुं शक्यते।

तत्र तत्र प्रकरणेषु तरङ्गिण्युक्तदोषोद्भावनं दृश्यते । अतस्तरङ्गिणी-रामाचार्याणां कालानन्तरमेव एतेषां काल इत्यपि वक्तुं शक्यते । एतैः एतदतिरिच्य अन्ये ग्रन्थाः रचिताः वा न वा इति निर्धारः नैव शक्यते कर्तुम् ।

## ग्रन्थवैशिष्ट्यम्

स्वनाम्नैव ज्ञायते यत् कृतिरियं वेदसिद्धान्ततत्त्वं प्रकाशयतीति। यथा सिद्धान्तकौमुद्याः लघुकौमुदी, यथा वा प्रमाणपद्धतेः छलारि शेषाचार्यकृतप्रमाणचिन्द्रिका संक्षेपरूपा तदर्थप्रकाशिनी तद्वदेव 'श्रुतिसिद्धान्ततत्त्वरत्नप्रकाशिका' अपि न्यायामृतसंक्षेपरूपा 'लघु-न्यायामृतम्' इति अन्वर्थनामिकेति वक्तुं पारयामो वयम् । न्यायामृतोक्तविषयं प्रथमत अनूद्य तदुपरि अद्वैतसिद्ध्युक्तदोषमनूद्य तद्विमर्श एतेषां कृतौ आन्तं दृश्यते । न्यायामृते विस्तारेण कृतान् विकल्पान् संक्षेपेणानूद्य न्यायामृतस्थः सर्वोऽपि प्रधानविषय एतैः संगृहीत इति विशेषः । अपि चाद्वैतसिद्धौ सुदीर्घवाक्येन वा सुदीर्घप्रबन्धेन वा यत्र न्यायामृतविषयो विमृष्टः स सर्वोऽपि विषयः द्वित्रैर्वाक्यैः सङ्गृह्यते खण्ड्यते च । तरङ्गिण्यादिष्वनुक्तदोषोऽप्यत्र प्रकटीकृतः । कोटिक्रमेण विचारणप्रणाल्यत्र ग्रन्थे प्रस्तूयते यया पण्डितानां छात्राणां चोत्तरोत्तरकोटिस्मरणेऽत्यन्तमुपकारिणी भवेत्।

न्यायामृतवदेवात्रापि परिच्छेदचतुष्टयं कृतम् । परन्तु प्रकरणानां साङ्कर्यमत्र ग्रन्थे दृश्यते । यतो हि न्यायामृते प्रथमत एव मिथ्यात्वखण्डनं दृश्यत्वहेतुखण्डनं इत्यादिविषयाः निबद्धाः । द्वितीयपरिच्छेदे च भेदसमर्थनं भेदखण्डनोद्धारादिकं च कृतम् । परन्तु अस्मिन् ग्रन्थे प्रथमत एव भेदविचारः प्रस्तूयते । द्वितीयपरिच्छेदे च मिथ्यात्वखण्डनं दृश्यत्वादिहेतुखण्डनं च क्रियते।

शास्त्रारम्भसमर्थनं भामत्युक्तविषयादिखण्डनं च न्यायामृतानुक्त-विषयः न्यायामृतच्छायया अत्र च ग्रन्थे प्रतिपादितः । प्रथमपरिच्छेदे च एकोनविंशतिप्रकरणानि (२९) निबद्धानि । द्वितीयपरिच्छेदे च षट्त्रिंशत्प्रकरणानि (३६), तृतीयपरिच्छेदे सप्त (७) प्रकरणानि, अन्तिमे चतुर्थपरिच्छेदे च पञ्च (४) प्रकरणानि उपनिबद्धानि येषु प्रकरणेषु न्यायामृतसंक्षेपोऽद्वैतसिद्धेः संक्षेपतो विमर्शनं च दृश्यते।

## सङ्ग्रहकौशलम्

१) न्यायामृते तावत् 'असतः साधकत्वे बाधकविवरणम्' 'असतः साधकत्वाभावे बाधकोद्धारः' इति प्रकरणद्वयेनोक्तविषयः एभिः आचार्यैः 'असतः साधकत्वभङ्गः' इत्येकस्मिन् प्रकरणे एव सङ्गृहीतः । नैव प्रकरणद्वयमेतैः कृतम् । 'असतः साधकत्वे बाधकविवरणम्' इत्यस्मिन् प्रकरणे श्रीव्यासतीर्थैः साधकत्वे किं तन्त्रं इति प्रश्नमुपादाय परमार्थसत्वस्यैव प्रयोजकत्वं वक्तव्यं नान्यस्य इति समर्थनाय सम्भाविताः केचन पक्षाः पराभ्युपगताश्च केचन पक्षाः विकल्पपूर्वं न्यायामृतेऽनूदिताः । ते च विकल्पाः– १. धीमात्रम्, २. अपरोक्षधीः ३. अपरोक्षसत्वधीः ४. त्रिचतुरकक्ष्यासु अबाधिता सत्वधीः ५. लोकप्रसिद्धिः ६. त्रिचतुरकक्ष्यास्वबाधिता वादिप्रतिवादिप्राश्निकानां सत्वधीः ७. यादृश्या तव सत्वसिद्धिस्तादृशी धीः ८. परप्रसिद्धं सत्वं ९. व्यावहारिकं सत्वं १०. आनन्दबोधोक्तं सतोऽपि साधकत्वे विप्रतिपत्तिः ११. सत्तात्रयं द्वयं वा १२. सत्त-याऽनुगतं सद्द्वयानुगतं वा सत्वसामान्यं १३. धर्मितुल्यं सत्वं १४. असद्विलक्षणत्वं १५. अप्रातिभासिकत्वं १६. अप्रातिभासिकसत्वं १७. असद्विलक्षणत्वे सति प्रातिभासिकवैलक्षण्यं १८. सल्लक्षणयोगित्वं

इति । सुदीर्घप्रकरणेन एते सर्वेऽपि विकल्पाः न्यायामृते विमृष्टाः। अन्ते च परमार्थसत्वस्यैव साधकत्वं वक्तव्यमिति समर्थितम् ।

एते सर्वे च पक्षाः नात्र ग्रन्थे उक्ताः । प्रधानतया ये पक्षाः सन्ति त एवात्र सङ्गृह्य विमृष्टाः । सत्वेन ज्ञातत्वं साधकत्वे तन्त्रं इति अद्वैतसिद्ध्युक्तपक्षमेव प्रथमतोऽनूद्य एतैर्विमर्शः कृतः । अपि च व्यावहारिकत्वं साधकत्वे तन्त्रमिति न्यायामृतोक्तपक्षोऽत्र ब्रह्मज्ञानेतराबाध्यत्वं व्यावहारिकत्वमिति परिष्कृत्य निराकृतः ।

२) किञ्च 'असतः साधकत्वाभावे बाधकोद्धारः' इति प्रकणोक्त-न्यायामृतविषयः एतैः ग्रन्थकारैः 'असतः साधकत्वभङ्गप्रकरणे' एव सङ्गृहीतः । अद्वैतसिद्धुक्तपक्षा अप्यत्र संक्षेपेण परामृष्टाः ।

३) एवमेव प्रतिकर्मव्यवस्थाभङ्गप्रकरणे न्यायामृते तावत् अद्वैताभिमताः बहवः पक्षाः तत्राप्यवान्तरपक्षाः वृत्तिस्वरूप-कथनपूर्वमनूदिताः । परमेभिः तत्सर्वं संक्षेपेण सङ्गृहीतम् । तथा ह्यत्र न्यायामृतम्– ''तत्र जीवचैतन्यमविद्योपाधिकं सत् सर्वगतमन्तःकरणोपाधिकं सत् परिच्छिन्नं चेति मतद्वयम् । तत्राऽद्ये विषयप्रकाशकं जीवचैतन्यं द्वितीये ब्रह्मचैतन्यम् ।।

सर्वगतत्वपक्षेऽपि जीवचैतन्यमविद्यानावृतमावृतं चेति मतद्वयम् । तत्राऽद्ये वृत्तिर्जीवचैतन्यस्य विषयोपरागार्था । द्वितीये त्वावरणाभिभवार्था ।।

परिच्छिन्नत्वपक्षे तु जीवचैतन्यस्य विषयप्रकाशकब्रह्मचैतन्याभेदा-भिव्यक्त्यर्था ।।

अनावृतत्त्वपक्षे हि अनावृतं सर्वगतमपि जीवचैतन्यं तत्तदाकारवृत्त्यैवोपरज्यते, न तु विषयैः, असङ्गत्वात् ।

एवं चानावृतत्वपक्षे तत्तदाकारवृत्तिद्वारा चैतन्यस्य च तत्तदुपरागे तत्तत्प्रकाशः ।।

आवृतत्वपक्षेऽपि तत्तदाकारवृत्त्या तत्तदवच्छिन्नचैतन्यावरणाभिभवे तत्तत्प्रकाशः ।।

परिच्छिन्नत्वपक्षेऽपि तत्तज्जीवावच्छेदकान्तःकरणीयतत्तद्विषयाकारवृत्त्या तत्तद्विषयावच्छिन्नब्रह्मचैतन्याभिव्यक्तौ तत्तत्प्रकाश इति नातिप्रसङ्गः ।।'' इति ।।

परमत्र ग्रन्थे एतैः श्रीरामाचार्यैः प्रधानभूताः विषयाः सङ्गृहीताः विमृष्टाश्च । तथा हि तद्वाक्यम्– ''यत्तु सर्वगतं जीवचैतन्यमावृतमनावृतं च । आद्यपक्षे वृत्त्यभिव्यक्तचैतन्यं विषयप्रकाशकम् । द्वितीये स्वतोऽसङ्गस्य वृत्त्या विषयसंबन्धः सम्पद्यते । अन्तःकरणावच्छिन्नो जीव इति पक्षे घटप्रकाशकाधिष्ठानचैतन्येन सह जीवस्याभेदं संपाद्य ततोऽधिष्ठानप्रकाशितेऽहं जानामीति प्रतीतेरिति ।''

४) एवमेवान्यत्रापि– न्यायामृते 'प्रत्यक्षस्य जात्या उपक्रमादिन्यायैश्च प्राबल्यं' 'प्रत्यक्षस्य उपजीव्यत्वेन प्राबल्यं' इति प्रकरणद्वयं प्रत्यक्षस्य प्राबल्यसमर्थनाय श्रीव्यासतीर्थैरुपनिबद्धम् । अत एवाद्वैतसिद्धावपि 'प्रत्यक्षबाधोद्धारः' 'प्रत्यक्षप्राबल्यभङ्गः' इति प्रकरणद्वयेन न्यायामृतोक्तविषयः विमृष्टः । न्यायामृताद्वैतसिद्ध्यनुसरद्भिः श्रीरामाचार्यैः तदुभयं प्रकरणं 'प्रत्यक्षस्य जात्या उपजीव्यत्वेन च प्राबल्यं' इत्येकस्मिन्नेव प्रकरणे तत्रत्यो विषयः सङ्गृहीतोऽद्वैतसिद्ध्युक्तपरिहारश्च विमृष्टः ।

**प्रकरणविभागः**

१) न्यायामृते अद्वैतसिद्धौ च द्वितीयपरिच्छेदस्थत्वेन परिगणितस्य 'अहमर्थस्यानात्मत्वभङ्गप्रकरणस्य' 'कर्तृत्वाध्यासभङ्गप्रकरणस्य' च प्रथमपरिच्छेदे एव अत्र ग्रन्थे निवेशः कृतः । 'मिथ्यात्वनिरुक्तिभङ्गः' 'दृश्यत्वादिहेतुभङ्गः' इत्यादीनि प्रकरणानि न्यायामृते प्रथमपरिच्छेदे एव दृश्यन्ते । परमत्र द्वितीयपरिच्छेदे तानि प्रकरणान्युपनिबद्धानि।

२) न्यायामृते भेदविषयः द्वितीयपरिच्छेदे निविष्टः । 'सामान्यतो भेदखण्डनोद्धारः' 'विशिष्य भेदखण्डनोद्धारः' 'विशेषसमर्थनम्' 'भेदपञ्चके प्रत्यक्षम्' 'जीवब्रह्मभेदे अनुमानानि' 'जीवानामन्योन्यभेदेऽनुमानानि' 'आत्मभेदे अनुकूलतर्काः' 'भेदपञ्चकेऽनुमानानि' 'भेदश्रुतेरनुवादकत्वभङ्गः' 'भेदश्रुतेर्व्यावहारिकभेदपरत्वभङ्गः' 'जीवेशभेदे शब्दान्तरादिभङ्गः' 'भेदश्रुतेः षड्विधतात्पर्यलिङ्गानि' इत्यादिद्वादशप्रकरणेषु भेदविचारः न्यायामृते द्वितीयपरिच्छेदे प्रस्तुतः । परमत्र श्रुतिसिद्धान्ततत्त्वरत्नप्रकाशिकायां 'भेदखण्डनोद्धारः' 'भेदपञ्चके प्रत्यक्षम्' 'भेदे अनुकूलतर्काः' 'भेदश्रुतेरनुवादकत्वभङ्गः' 'भेदः पारमार्थिकः' 'श्रुतेः पारमार्थिकभेदपरत्वम्' 'भेदे षड्विधतात्पर्यलिङ्गम्' इति सप्त प्रकरणेषु न्यायामृतोक्तप्रधानविषयाः प्रथमपरिच्छेदे एव सङ्गृहीताः । संक्षेपतोऽद्वैतसिद्धिविमर्शश्च कृतः।

३) ऐक्यस्वरूपप्रमाणखण्डनाय न्यायामृते द्वितीयपरिच्छेदे 'ऐक्यस्वरूपभङ्गः' 'ऐक्यश्रुतेरुपजीव्यबाधः' 'तत्त्वमस्यादिवाक्यार्थः' 'अहं ब्रह्मास्मीत्यादिश्रुत्यर्थः' 'ऐक्यानुमानभङ्गः' 'अंशित्वेनैक्यसिद्धिभङ्गः' 'बिम्बप्रतिबिम्बैक्यभङ्गः' इत्याहत्य सप्त प्रकरणानि योजितानि । अत्र ग्रन्थे च प्रथमपरिच्छेदे एव 'जीवैक्यभङ्गः' 'पराभिमतैक्यभङ्गः' 'ऐक्ये प्रमाणभङ्गः' 'आगमस्यैक्यपरत्वभङ्गः'

'ऐक्यानुमानभङ्गः' 'अंशित्वेनैक्यभङ्गः' 'जीवस्य प्रतिबिम्बत्वेनैक्यभङ्गः' इति सप्त प्रकरणेषु न्यायामृतोक्तविषयाः सङ्गृहीताः । न्यायामृते 'जीवैक्यभङ्गः' इति प्रकरणं नास्ति, परमत्र तत्प्रकरणं योजितमिति विशेषः । न्यायामृते 'तत्त्वमस्यादिवाक्यार्थः' 'अहं ब्रह्मास्मीत्यादिश्रुत्यर्थः' इति प्रकरणोक्तविषयः 'आगमस्यैक्यपरत्वभङ्गः' इत्येकेनैव प्रकरणेन सङ्गृहीत इत्यत्रास्ति विशेषः ।

एवमेव बहवो विषयाः श्रीरामाचार्यैः श्रुतिसिद्धान्ततत्त्वरत्नप्रकाशिकायां सङ्गृहीताः स्थलीपुलाकन्यायेनात्र केचन विषयाः प्रदर्शिताः ।।

## विषयविमर्शकौशलम्

१) न्यायामृते द्वितीयपरिच्छेदे 'तत्त्वमस्यादिवाक्यार्थः' इत्यस्मिन् प्रकरणे 'तत्त्वमसि' इति वाक्यं भेदपरमेवेति समर्थितम्। तत्रापि 'तत् त्वमसि' इति पदच्छेदं प्रथमतो विधाय तत् इति पदं सप्तस्वपि विभक्तिषु प्रयोक्तुं शक्यते इति सदृष्टान्तमुपपाद्य, 'अतत् त्वमसि' इत्यपि पदच्छेदं विधायेमानि नव दृष्टान्तवाक्यानि भेदपराणीति संक्षेपेण न्यायामृते समर्थितम् । अत्र ग्रन्थे तानि दृष्टान्तवाक्यानि सर्वाण्यपि भेदपराण्येवेति सदृष्टान्तं विवृतानि । तथा हि तद्वाक्यम्–

''यद्वा शब्दो नित्यः शब्दत्वात् घटवदित्यत्र यथा दृष्टान्तानुसारादनित्य इति पदच्छेदस्तथा भेदबोधकनवदृष्टान्तानुसारादतत्त्वमसीति पदच्छेदः । निर्मुक्तत्वपूर्णज्ञानानन्दत्वादिना नञा सादृश्यबोधनात् । तथा हि– यथा परिभ्रमणेन श्रान्तः सूत्रबद्धः पक्षी शङ्कुमेवाश्रयति । तथा जागरादौ परिभ्रमणेन श्रान्तो जीवः

सुषुप्तौ परे संश्रयतीत्याह– 'यथा शकुनिः सूत्रेण प्रबद्धः' इत्यादिना ।। १ ।।

ननु मत्तोऽन्यश्चेतनश्चेन्मया ज्ञायेत? तत्राह– यथा मधुकरैः सङ्गृहीता रसाः 'अयमाम्रस्य' 'अहं पनसस्य' इति स्वं भेदं न जानन्ति । तथा जीवे विद्यमानोऽप्यविवेकिभिर्न स्वभिन्नतया ज्ञायते परेश इति 'यथा सोम्य मधुकृतः' इत्यादिना ।।२।।

ननु रसैरचेतनैर्विद्यमानो भेदो मा ज्ञायि । मया चेतनेन कुतो न ज्ञायते तत्राह– यथा चेतनाभिरपि नदीभिः समुद्रे मिलिताभिः 'इयं गङ्गाऽहं यमुना' इति स्वभेदो न ज्ञायते तथा त्वयि स्थित ईशस्त्वया न ज्ञायत इति 'इमाः सोम्य' इत्यादिना ।।३।।

नन्वस्तु जीवे ईशो जीवस्य तदधीनत्वं कुतस्तत्राह– यथा वृक्षस्य विघातके विद्यमानेऽपीशानुग्रहात्सुखमवस्थानं तदभावे च विघातकाभावेऽपि शुष्कता तथा जीवस्य मानुषादिदेहेऽपीशाधीनत्वमिति 'यथा सोम्य महतो वृक्षस्य' इत्यादिना ।। ४ ।।

ननु सूक्ष्ममपि स्वस्वरूपं ज्ञायते तथेशोऽस्ति चेज्ज्ञायेतैव । तत्राह– यथा वटबीजे महान्वटो यच्छक्त्या सन्नपि नोपलभ्यते । एवं जीवान्तर्गतो हरिर्न दृश्यत इति 'न्यग्रोधफलं' इत्यादिना ।।५।।

ननु तद्धर्मे गृह्यमाणेऽपि स न गृह्यत इति कथं जानीयाम् । तत्राह– यथा जलप्रक्षिप्तलवणधर्मे क्षारत्वे गृह्यमाणे लवणं न गृह्यते तथा वटावस्थानहेतुसामर्थ्ये गृह्यमाणेऽपि स न गृह्यत इति 'लवणमुदकेऽवधाय' इत्यादिना ।।६।।

ननु तर्हीशस्याज्ञेयत्वात्तज्ज्ञानसाधने वैय्यर्थ्यम् । तत्राह– यथा चोरैः कश्चनपुरुषो बद्धाक्षो देशान्तरे नीत्वा मुक्तः पृष्ट्वापृष्ट्वा स्वदेशमायाति तथा दुर्ज्ञेयोऽपीशो गुरूपदेशादिना ज्ञायत इति 'यथा सोम्य पुरुषं' इत्यादिना ।।७।।

ननु वृक्षदेहे जीवस्य पराधीनत्वमुक्तं मानुषदेहे कथं तज्जानीयाम्। तत्राह– रोगी ग्रस्तव्यापारः पार्श्वस्थान्न वेद तथा सुषुप्तौ संपन्नो जीवस्तं न वेदेति 'पुरुषं सोम्योपतापिनं' इत्यादिना ।।८।।

ननु यो मत्तोऽन्य ईश इति जानाति यश्चाहमेव ब्रह्मेति जानाति तयोः कीदृशं फलम् । तत्राह– यथा कश्चन पुरुषो राजभटैरानीतश्चोरोऽयमिति यदा स चोरस्तदा दण्ड्यो यदा न चोरस्तदा न, तथा योऽहं ब्रह्मेति ज्ञानी परकीयब्रह्मत्वापहारकत्वात् दण्ड्यः, मद्भिन्नं ब्रह्मेति जानन्न दण्ड्य इति 'पुरुषं' इत्यादिना ।।९।।''

२) किञ्च– ग्रन्थेऽस्मिन् न्यायामृतेऽनुक्तं वेदादिशास्त्रस्य अनुबन्धचतुष्टयं स्वमतानुसारेणोपपाद्य परमते शास्त्रस्य विषयादिकं नोपपद्यते इति निरूपितम् । तथा हि– ''अल्पगुणवत्त्वेनानुभूयमानाज्जीवाद्वस्तुतो भिन्नः सदनन्तगुणः परमेश्वरश्शास्त्रस्य विषयः । निःशेषावद्यनिवृत्तिापूर्वकस्वस्वरूपाविर्भावरूपो मोक्षः प्रयोजनम् । वाच्यवाचकभावः सम्बन्धः ।'' इति ।

ततश्च श्रवणमननादिस्वरूपं प्रदर्श्य निदिध्यासनेन भगवदपरोक्षज्ञानमिति समर्थितम् । तथा भगवदापरोक्ष्यस्य प्रमात्मकत्वमपि समर्थितम् । तथा हि–

''अधिकारानन्तरं गुरुमुखाद्वाक्यार्थग्रहणरूपं श्रवणम् । ततो

युक्तिभिश्चिन्तनं मननम् । अथ विजातीयप्रत्यान्तरितसजातीय-प्रत्ययप्रवाहो ध्यानापरपर्यायो निदिध्यासनम् । ततो भगवदापरोक्ष्यम्। ततो भगवत्प्रसादोऽथ मोक्षः । अतिभावनया विधुरस्य मृतभार्याया आपरोक्ष्यवत् परोक्षस्वभावस्यापि ब्रह्मण आपरोक्ष्यं भवति ।।

न चातिभावनाजन्यत्वेन ब्रह्मज्ञानस्य भ्रमत्वापत्तिः । भ्रमत्वे विषय-बाधदोषजन्यत्वादेरेव प्रयोजकत्वेन भावनाजन्यत्वस्या-प्रयोजकत्वात् । ईश्वरध्यानजन्यापरोक्ष्यविषयेश्वरस्य बाधाभावात् । इदमेव प्रत्ययाभ्यासरूपं भावनाख्यं प्रसंख्यानशब्दवाच्यम् योगिन आहुः । न चास्य परमात्मसाक्षात्कारकारणत्वे प्रमाणाभावः । 'ततस्तु तं पश्येन्निष्कलं ध्यायमानः' इति श्रुतेरेव प्रमाणत्वात् । 'आप्रायणात्तत्रापि हि दृष्टं' इत्यधिकरणे 'विकल्पो विशिष्टफलत्वात्' इत्यधिकरणे च दहराद्यहंग्रहोपासकानां प्रसंख्यानादुपास्य-सगुणब्रह्मसाक्षात्काराङ्गीकाराच्च ।।

न च प्रसंख्यानस्य प्रमाकरणेष्वपरिगणनात्तज्जन्यो ब्रह्मसाक्षात्करः प्रमा न स्यात् । न च काकतालीयसंवादिवराटसंख्याविशेषाहार्य-ज्ञानवदर्थाबाधेन प्रमाणत्वोपपत्तिः । प्रमाणामूलकस्य प्रमाणत्वा-योगात्। आहार्यवृत्तेश्चोपासनावृत्तिवत् ज्ञानभिन्नमानसक्रियारूपतया इच्छादिवदबाधितार्थविषयकत्वेऽपि प्रमात्वानभ्युपगमादिति वाच्यम्। क्लृप्तप्रमाकरणामूलकत्वेऽपि तार्किकमते ईश्वरज्ञानवत्, तव मते ईश्वरमायावृत्तिवत् प्रमात्वोपपत्तेर्विषयाबाधतौल्यात् । अत एवोक्तं श्रीमता भाष्यकारानुयायिना– 'मार्गद्वयेऽपि प्रसंख्यानस्य विचारिता-दविचारिताद्वा वेदान्ताद्ब्रह्मात्मैक्यावगममूलकतया प्रमाणत्वेन प्रसंख्यानजन्यस्यापि ब्रह्मसाक्षात्कारस्य प्रमाणमूलकत्वात् प्रमात्वं' इति । उक्तं हि कल्पतरुकृता– 'वेदान्तवाक्यजज्ञानभावनाजापरोक्षधीः।

मूलप्रमाणदार्ढ्येन न भ्रमत्वं प्रपद्यते ।।' इति । न च प्रामाण्ये परतस्त्वापत्तिः । अपवादनिरासाय मूलशुद्ध्यनुरोधात् ।।'' इति ।।

एवं स्वमतानुसारेण शास्त्रस्य विषयादिकं प्रतिपाद्य परमते शास्त्रारम्भो न युज्यते इति न्यायामृते तत्रतत्रोक्ताः विषयाः एकीकृत्योपवर्णिताः । तत्रापि भामत्याद्युक्तविषयाद्युपपादनविमर्शः कृतः । तथा हि–

''अद्वैतिनां तु शास्त्रारम्भो व्यर्थ एव । विषयप्रयोजनाद्यभावात्।

यदुक्तं भामत्यां– 'यद्यपि जीव एव ब्रह्म । स चाहमिति ज्ञाने भासत एवेति सन्दिग्धत्वाभावान्न शास्त्रस्य विषयः । नाप्यविद्यानिवृत्तिः प्रयोजनम् । उक्तरीत्याऽऽत्मनि ज्ञायमानेऽपि तदनिवृत्तेः । तथापि वेदान्तवाक्यैर्ज्ञानानन्दैकरसाद्वितीयोदासीन स्वभावमात्मतत्त्व-मुपक्रमादिभिः प्रतिपाद्यते । प्रत्यक्षेण तु प्रादेशिकानेकविध-शोकदुःखादिप्रपञ्चोपप्लुतं गृह्यते । अत आरभ्यो विचारः । नच प्रत्यक्षविरोधादप्रामाण्यं श्रुतेः । प्रत्यक्षं हि संभावितदोषमपौरुषेयेण निर्दोषेणागमेन बाध्यते । तेन वेदान्तवेद्यः शुद्धो नाहं प्रत्यये भातीति विषयादिसिद्धिः' इति ।।

तन्न । निर्विशेषे भाताभातविभागस्यासंभवात् । अभासमानत्वेन देहात्मनोर्भेदस्य कर्तृत्वभोक्तृत्वाद्यभावस्य जीवब्रह्माभेदस्य द्वितीयमात्राभावस्य वा त्वदभिमतस्यात्मनो भिन्नत्वे सत्त्वे चाद्वैतहानेः । मृषात्वे तद्बोधकश्रुतेरप्रामाण्यापत्तेः । शरीराभेदादेः सत्यत्वापत्तेश्च । न चाभावो द्वितीयो मयाऽङ्गीक्रिते न भाव इति वाच्यम् । अभावत्वाधेयत्वाधारत्वादीनां भावानामपि सत्त्वापत्तेः। सप्रतियोगिकस्याभावस्य भावापेक्षयाऽतिशयेनाद्वैतविरोधित्वाच्च ।

द्वितीयमात्रनिषेधकस्याद्वितीयपदस्य भावनिषेधपरत्वसङ्कोचे स्वतन्त्राद्वैतनिषेधपरत्वेनैव सङ्कोचापत्तेः । अखण्डार्थेन वेदान्तेन ब्रह्माभावयोर्द्वयोरसिद्धेश्च । देहभेदादीनां भासमानात्माभिन्नत्वेऽभानासंभवात् । नच कल्पितभेदेनागृहीत इव भातीति वाच्यम् । तत्त्वतो गृह्यमाणेऽधिष्ठाने भेदकल्पनाया अगृहीतत्वारोपस्य चासंभवात् ।।'' इति ।।

३) अपि च– 'जीवस्य प्रतिबिम्बत्वेनैक्यभङ्गः' इत्यस्मिन् प्रकरणे जीवस्य ब्रह्मप्रतिबिम्बत्वेऽपि ब्रह्माभेदो न युज्यते इति न्यायामृतमनुसृत्य प्रतिपादितम् । न्यायामृतानुक्तो विषयस्तत्र श्रीरामाचार्यैः 'किञ्च' इत्यारभ्य प्रतिपादितः । बिम्बान्यूनसत्ताके हि उपाधौ प्रतिबिम्बनं भवति । नतु बिम्बन्यूनसत्ताके उपाधौ । अतः बिम्बन्यूनसत्ताके अविद्यादौ न जीवस्य प्रतिबिम्बनम् इति। तथैव आकाशस्य प्रतिबिम्बं नैव भवति प्रभामण्डलस्यैव प्रतिबिम्बनमित्यादिविषयः निरूपितः । तथा हि तद्वाक्यानि– ''किञ्च बिम्बान्यूनसत्ताके ह्युपाधौ प्रतिबम्बं लोके दृष्टम् । कथं ब्रह्मन्यूनसत्ताकाविद्यादौ प्रतिबिम्बम् । अन्यथा मरुमरीचिकाजलेऽपि सूर्यादिप्रतिबिम्बं स्यात् । न च दर्पणस्थनेत्रप्रतिफलितमुखादिस्थले व्यभिचारः । सोपाधिकारोपे दृष्टस्य स्वबाधकाबाध्योपाधिकत्वस्यात्रासत्वेन तन्नेत्रदेशावच्छेदेन तन्मुखप्रतिफलनमित्यङ्गीकार्यत्वात् । वस्तुतस्तु प्रतिबिम्बस्य मिथ्यात्वासंप्रतिपत्तेर्वृथैव त्वत्प्रलापः ।।

किञ्चैकदेशस्थितस्य देशान्तरस्थिते प्रतिबिम्बनम् न तूपाध्यन्तर्गतस्य । न चाकाशस्य जले कथं प्रतिबिम्बम् । स देशस्याकाशस्य जलात् बहिर्भागस्यैव प्रतिबिम्बनात् । न ह्यविद्याद्युपाधिर्ब्रह्मैकदेशस्था ।

किञ्च आकाशस्य प्रतिबिम्बमसिद्धम् । नक्षत्रादिप्रभामण्डलस्यैव जले प्रतिबिम्बनात् । अचाक्षुषाकाशप्रतिबिम्बस्य चाक्षुषत्वासंभवात् । अन्यथा वायुकालधर्माधर्मपिशाचादिप्रतिबिम्बस्यापि चाक्षुषतापत्तेः । 'रूपं रूपं प्रतिरूपो बभूव' 'एकधा बहुधा चैव दृश्यते जलचन्द्रवत्' इत्याद्यागमस्त्वन्तर्यामिपरः । रूपं रूपं जीवं जीवं प्रति तावद्रूपैराविर्भूतो बभूव, एकधा मूलरूपेण बहुधाऽन्तर्यामित्वादिनेत्यर्थः ।।'' इति ।।

एवमनेके विषयाः श्रुतिसिद्धान्ततत्त्वरत्नप्रकाशिकायां निरूपिताः केचनैव विषया अत्र स्थालीपुलाकन्यायेन उक्ताः ।

## उपसंहारः

तदिदमप्रकटितमपूर्वं च ग्रन्थरत्नं बहोः कालात् कोशागारे प्रसुप्तमिवासीत् । पूर्णप्रज्ञसंशोधनमन्दिरनिदेशकैः विद्वद्वरेण्यैः डा. नागसम्पिगे आनन्दतीर्थाचार्यैः मातृकेयं संशोधनाय प्रदत्ता । सा चेयं मातृकेदानीं संशोध्य प्राकाश्यं नीता ।

ग्रन्थसम्पादनं नाम मातृकासूपलभ्यमानानां ग्रन्थपाठानां शास्त्रशुद्धये सम्पादनेऽर्थनिर्णये च प्राधान्यं वहमानं पाठपरिष्कारविषयकं शास्त्रमेव । मातृकासूपलभ्यमानानां पाठानां, भाष्यटीकाटिप्पणीषूल्लिखितानां उद्धृतानां च पाठानां, तथा सङ्ग्रहग्रन्थानां, मूलग्रन्थेषूदाहृतानां पाठानां उद्धृतानां पूर्वाचार्यवचनानां च मूलगवेषणपूर्वं ग्रन्थकर्तृरचितसम्मतशुद्धपाठस्य निर्धारणाय क्रियमाणः प्रयत्न एव । प्रायः ग्रन्थकर्तृलिखिता मातृका नोपलभ्यत एव । मातृकान्तरासु विद्यमानानि पाठानि सङ्गृह्य तेन च टीकाटिप्पण्याद्यवलोकनपूर्वं मूलकृत्पाठः उन्नेयः । तत्रापि मातृकायां लिपिकृद्दोषेन प्रमादाद्वा

दोषाः सम्भाविता एव । मातृकासु पाठोऽस्तीत्येतावता स समीचीनः पाठ इति निर्धारयितुं न शक्यते । 'पुराणमित्येव न साधु सर्वं' इत्येव हि प्राचामाभाणकम् ।

तदेतत्सर्वमवलोक्यात्र ग्रन्थकाराभिप्रेतोऽविरुद्धश्च पाठः निर्धारणीय इति प्रयत्नः कृतः । तमेतं ग्रन्थं पाठशोधनपूर्वं सम्पादनमिदमिदानीं हरिगुर्वनुग्रहेणास्मत्पूर्वजानां पुण्यलेशेन च मम सम्प्राप्त इति महान् सन्तोषः । एकैव मातृकेयं ग्रन्थागारेषूपलब्धा नान्या मातृकोपलब्धा। उपलब्धेचेयं मातृका नातिस्थूलाक्षरैः लिखितापि तत्र तत्र त्रुटिता। कानिचित् पत्राण्यपि लुप्तानि । तत्र तत्र कंस()चिह्नेन संकेतिताः पङ्क्तयः मातृकायां दृश्यन्ते याः काश्चनपङ्क्तयः अन्विताः अनन्विताश्च। लिपिकारदोषोऽपि बहुषु स्थलेषु दृश्यते । तथापि न्यायामृताद्वैत-सिद्ध्यनुसारेण यथामति मातृकेयं गुर्वनुग्रहेण विदुषां साहाय्येन च संशोध्य सज्जनानां पुरत इदानीं प्रकटीक्रियत इति महदिदं प्रमोदस्थानम् । सर्वत्र च शीर्षकादिप्रदानपूर्वं विषयविभागोऽत्र कृतः। प्रथमत एव विषयानुक्रमणिका च कृता । उदहृतप्रमाणानां आकरश्च पादटिप्पण्यामत्र सूचितः ।

ग्रन्थसम्पादनावसरे तत्र तत्रानवधानेन वाऽज्ञानेन वा दोषाः समदृश्येरन् महान्तः कारुणिकाः क्षाम्यन्तु इति सप्रश्रयं निवेद्यते। तदेवं बहुश्रमेण सम्पादितमेतां निम्नटिप्पण्यादिविशेषांशोपबृंहितां 'श्रुतिसिद्धान्ततत्त्वरत्नप्रकाशिकां' दृष्ट्वा सन्तुष्यन्ति सज्जनाः, गणयन्ति च गुणान्, न गणयन्ति च दोषांश्चेति विश्वसिमि । प्रोत्साहिनः करुणाशीलाश्च किल महान्तः ।। इति शम् ।।

# भूयिष्ठां ते नम उक्तिं विधेम

'ओं कृतो स्मर कृतँ स्मर' इति उपनिषन्मूलिका आभाणिका 'कृतघ्नो मा भूत् कृतज्ञः स्यात्' इति । अतोऽत्र ये प्रत्यक्षतः परोक्षतश्च साहाय्यं कृतवन्तस्तेभ्यः सर्वेभ्योऽपि कृतज्ञतां निवेदयामि।

तत्रादौ अनन्तकल्याणगुणपरिपूर्णः समस्तदोषविदूरः भारतीरमण-मुख्यप्राणान्तर्गतसमस्तगुर्वन्तर्गतो मत्कुलस्वामी श्रीलक्ष्मीनृसिंहः मयि स्थित्वा मतिं प्रेरयित्वा अत्यायाससाध्यमिदं संशोधनकार्यं अकारयत् । **तस्मै श्रीलक्ष्मीनृसिंहाय नमांसि भूयांसि** ।

उपनिषदर्थं सज्जनेभ्यो विस्तारयिषुः श्रीमुख्यप्राणः मध्वाचार्यरूपेण भुव्यवतीर्य भाष्यं व्यरचयत् । येन च सकलजैवकर्माणि प्रेरितानि तस्मै सर्वकर्मप्रेरकाय **श्रीमुख्यप्राणाय नमांसि भूयांसि** ।

पदवाक्यपारावारपारीणानां कारुण्ये समुद्रं धिक्कुर्वाणानां अनवरतं सुधादिसच्छास्त्रपाठकानां नैकशिष्यसम्पत्तिमतां मम स्वरूपोद्धारकाणां **श्री श्री १००८ श्रीत्यप्रमोदतीर्थश्रीचरण**करकमलसञ्जातानां उत्तरादिमठाधीशानां **श्री श्री १००८ श्री सत्यात्मतीर्थश्रीमच्चरणानां चरणनलिनयोः साष्टाङ्गप्रणतयः** ।

सकलशास्त्रविशारदानां शमदमादिगुणादिसम्पत्तिमतां शिष्य-वात्सल्यादिगुणवतां अनवरतं श्रीमन्न्यायसुधापाठकानां पठित-पाठितचतुर्वेदानां पूर्णप्रज्ञविद्यापीठ पूर्णप्रज्ञसंशोधनामन्दिरादि-नानासंस्थाध्यक्षाणाम् अयोध्याश्रीराममन्दिरविश्वस्थमण्डलपदभाजां **श्री श्री १००८ श्री विश्वेशतीर्थ**करकमलसञ्जातानां पेजावरमठाधीशानां **श्री श्री १००८ श्री विश्वप्रसन्नतीर्थश्रीचरणनलिनयोः साष्टाङ्गप्रणतयः** ।

जयतीर्थविद्यापीठकुलपतिपदभाजां सुधाविशारदानां अनवरतं न्यायामृतादिग्रन्थपाठकानां विद्वत्कुलमणीनां मम गुरूणां **पं.पू. गुत्तलाचार्याणां (गुत्तल रङ्गाचार्याणां) चरणनलिनेषु भूयांसि नमांसि ।**

पूर्णप्रज्ञसंशोधनमन्दिरस्य निदेशकेभ्यः अन्यान्यशास्त्रेषु निष्णातेभ्यः नैकप्रशस्तिभाग्भः नैकग्रन्थसंशोधकेभ्यः विद्वज्जन-पक्षपातिभ्यः मातृकाप्रदानेन सूपकृतवद्भ्यः विद्वद्भ्यः **डा. ए.वि. नागसम्पिगे महोदयेभ्यः सादरप्रणतयः ।**

एतद्ग्रन्थमुद्रणाय वित्तसाहाय्यं डा. के पि वेङ्कटेशाचार्याः भक्तिश्रद्धया मातापित्रोः स्मरणार्थं कृतवन्तः । वृत्तिजीवने वैद्यकीयक्षेत्रे नारायणहृदयालये हृदयचिकित्साविभागे उन्नतस्थान-मलङ्कन्तोऽप्येते सज्जनाः शास्त्राभिज्ञाः स्वयं तत्त्वप्रकाशिकादि-ग्रन्थपाठकाश्चेति विशेषः । तेभ्योऽपि श्रेयःप्रार्थनापूर्वं धन्यवादान् निवेदयामि ।

मुद्रकेभ्यः वागर्थमुद्रणालयकार्यकर्तृभ्यः सर्वेभ्यः विशेषतः प्रसाद-महोदयेभ्यश्च कृतज्ञतां निवेदयामि ।

पुनरपि अस्मिन् संशोधनकर्मणि परोक्षतः अपरोक्षतश्च सूपकृतवद्भ्यः सर्वेभ्यः कृतज्ञतां निवेदयामि ।।

सुजनविधेयः

**प्रह्लादः जोशि**

# विषयानुक्रमणिना

# श्रीरामाचार्यविरचिता

# श्रुतिसिद्धान्ततत्त्वरत्नप्रकाशिका

सकलनिगमवाच्यो दुर्नयास्पृष्टधामा
विधिशिवसुरराजैः सेव्यमानो मुकुन्दः ।
सदमितगुणसिन्धुः सच्चिदानन्दमूर्तिः
स्फुरतु मम हयास्यो मानसे श्रीनिकेतः ॥१॥

श्रीव्यासं मरुदंशं च तान्त्रिकाणां गुरुं जयम् ।
कुमतागभिदवज्रं[1] व्यासतीर्थं नमाम्यहम् ॥२॥

रामाचार्यो महामध्वशास्त्रकाननकेसरी ।
करोति श्रुतिसिद्धान्ततत्त्वरत्नप्रकाशिकाम् ॥३॥

शमादिगुणसम्पन्नो माधवे भक्तिमान्नरः ।
इहामुत्र विरक्तोऽत्र ह्यधिकारी गुरुप्रियः ॥४॥

## १. शास्त्रारम्भसमर्थनम्[2]

### शास्त्रस्य विषयादिप्रतिपादनपूर्वं मोक्षोपायकथनम्

'शान्तो दान्तस्तितिक्षुरुपरत आत्मन्येवात्मानं पश्येत्'[3] 'तद्यथेह

---

१. 'कुमतागभिदं वज्रं' इति वा 'कुमतागभिदावज्रं' इति वा स्यादिति भाति
२. 'भेदखण्डनोद्धारः' इति प्रथमं प्रकरणं ग्रन्थे उल्लिखितम् । तथापि अध्येतॄणां सौकर्याय 'शास्त्रारम्भसमर्थनम्' इति प्रथमप्रकरणत्वेन निर्दिष्टम् ।
३. ब्र.सू.भा. १.१.३. इत्यत्रोदाहृता श्रुतिः ।

कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते'[१] 'परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायात्'[२] [३]'यस्य देवे परा भक्तिः यथा देवे तथा गुरौ । तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ।।' इत्यादि श्रुतेः अल्पगुणवत्त्वेनानुभूयमानाज्जीवाद्वस्तुतो भिन्नः सदनन्तगुणः परमेश्वरश्शास्त्रस्य विषयः । निःशेषावद्यनिवृत्तिपूर्वकस्वस्वरूपाविर्भावरूपो मोक्षः प्रयोजनम् । वाच्यवाचकभावः सम्बन्धः । अधिकारानन्तरं गुरुमुखाद्वाक्यार्थग्रहणरूपं श्रवणम् । ततो युक्तिभिश्चिन्तनं मननम् । अथ विजातीयप्रत्यान्तरितसजातीयप्रत्ययप्रवाहो ध्यानापरपर्यायो निदिध्यासनम् । ततो भगवदापरोक्ष्यम् । ततो भगवत्प्रसादोऽथ मोक्षः । अतिभावनया विधुरस्य मृतभार्याया आपरोक्ष्यवत् परोक्षस्वभावस्यापि ब्रह्मण आपरोक्ष्यं भवति ।।

### ब्रह्मज्ञानस्य भ्रमत्वनिराकरणम्

न चातिभावनाजन्यत्वेन ब्रह्मज्ञानस्य भ्रमत्वापत्तिः । भ्रमत्वे विषयबाधदोषजन्यत्वादेरेव प्रयोजकत्वेन भावनाजन्यत्वस्याप्रयोजकत्वात् । ईश्वरध्यानजन्यापरोक्ष्यविषयेश्वरस्य बाधाभावात् । इदमेव प्रत्ययाभ्यासरूपं भावनाख्यं प्रसंख्यानशब्दवाच्यम् योगिन आहुः । न चास्य परमात्मसाक्षात्कारकारणत्वे प्रमाणाभावः । 'ततस्तु तं पश्येन्निष्कलं ध्यायमानः'[४] इति श्रुतेरेव प्रमाणत्वात् ।

---

१. गी.भा. २.२४. इत्यत्रोदाहृता श्रुतिः ।
२. आथ.उ. १.२.१२.
३. ब्र.सू.भा. १.१.१ इत्यत्रोदाहृता श्रुतिः ।
४. आथ.उ. ५.८.

'आप्रायणात्तत्रापि हि दृष्टं'[१] इत्यधिकरणे 'विकल्पो विशिष्टफलत्वात्'[२] इत्यधिकरणे च दहराद्यहंग्रहोपासकानां प्रसंख्यानादुपास्यसगुणब्रह्म-साक्षात्काराङ्गीकाराच्च ।।

न च प्रसंख्यानस्य प्रमाकरणेष्वपरिगणनात्तज्जन्यो ब्रह्मसाक्षात्कारः प्रमा न स्यात् । न च काकतालीयसंवादिवराटसंख्याविशेषा-हार्यज्ञानवदर्थाबाधेन प्रमाणत्वोपपत्तिः । प्रमाणामूलकस्य प्रमाणत्वायोगात् । आहार्यवृत्तेश्चोपासनावृत्तिवत् ज्ञानभिन्न-मानसक्रियारूपतया इच्छादिवदबाधितार्थविषयकत्वेऽपि प्रमात्वानभ्युपगमादिति वाच्यम् । क्लृप्तप्रमाकरणामूलकत्वेऽपि तार्किकमते ईश्वरज्ञानवत्, तव मते ईश्वरमायावृत्तिवत् प्रमात्वोपपत्तेर्विषयाबाधतौल्यात् । अत एवोक्तं श्रीमता भाष्यकारानुयायिना– 'मार्गद्वयेऽपि प्रसंख्यानस्य विचारिताद-विचारिताद्वा वेदान्ताद्ब्रह्मात्मैक्यावगममूलकतया प्रमाणत्वेन प्रसंख्यानजन्यस्यापि ब्रह्मसाक्षात्कारस्य प्रमाणमूलकत्वात् प्रमात्वं' इति' । उक्तं हि कल्पतरुकृता– 'वेदान्तवाक्यजज्ञानभावनाजापरोक्षधीः मूलप्रमाणदार्ढ्येन न भ्रमत्वं प्रपद्यते' इति । न च प्रमाण्ये परतस्त्वापत्तिः । अपवादनिरासाय मूलशुद्ध्यनुरोधात् ।।

प्रमाणोदाहरणपूर्वकं भगवत्प्रसादस्य मोक्षहेतुत्वसमर्थनम्

नच 'दृष्ट्वैव तं मुच्यते'[३] इति ज्ञानादेव मोक्षश्रवणात्किं मध्ये प्रसादेनेति वाच्यम् । 'शङ्खः पाण्डुर एव' इतिवदेवकारेणायोग-व्यवच्छेदबोधनात् । नच प्रसादस्य मोक्षहेतुत्वे मानाभावः ।

१. ब्र.सू. ४.१.१२.

२. ब्र.सू. ३.३.६१.

३. ब्र.सू.भा. ३.३.४९ इत्यत्रोदाहृता कौशिकश्रुतिः ।

'नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन । यमेवैष वृणुते तेन लभ्यः'[१] 'यस्य प्रसादात्परमार्तिरूपाद-स्मात्संसारान्मुच्यते नापरेण'[२] इत्यादिश्रुतेः, 'मत्प्रसादादवाप्नोति शाश्वतं पदमव्ययम्'[३] इत्यादिस्मृतेश्च मानत्वात् ।।

मोक्षहेतुर्महाप्रसादश्च ज्ञानादेव । 'प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः'[४] इत्यादिस्मृतेः । नित्यस्यापीश्वरेच्छादिरूपस्य प्रसादस्य वेदान्तवासितमनोजन्यस्वयोग्याशेषभगवद्विशेषापरोक्ष वृत्तिप्रागभावध्वंसवति जीवे संबन्धो जायते । यथा चाद्वैतिनां वृत्तिश्चिदुपरागार्थेति मते व्यापकस्यापि चैतन्यस्य घटाद्याकारवृत्तिसंबद्धे संबन्धो जायते नान्यत्र, यथा च तार्किकमते व्यापकस्यापि गोत्वादेः सास्नादिमत्येव संबन्धो नान्यत्र तद्वात् । वृत्तिप्रागभावध्वंसश्च वृत्तितद्ध्वंसान्यतररूपः । अतो मोक्षहेतुरीश्वरप्रसादस्तद्धेतुरीशापरोक्ष्यं तद्धेतुर्विचारस्तदर्थं शास्त्रारम्भः कार्यः ।।

भामत्युक्तशास्त्रविषयाद्यनुवादः

अद्वैतिनां तु शास्त्रारम्भो व्यर्थ एव । विषयप्रयोजनाद्यभावात् ।

यदुक्तं भामत्यां– 'यद्यपि जीव एव ब्रह्म । स चाहमति ज्ञाने भासत एवेति सन्दिग्धत्वाभावान्न शास्त्रस्य विषयः । नाप्यविद्यानिवृत्तिः प्रयोजनम् । उक्तरीत्याऽऽत्मनि ज्ञायमानेऽपि तदनिवृत्तेः । तथापि वेदान्तवाक्यैर्ज्ञानानन्दैकरसाद्वितीयोदासीन स्वभावमात्मतत्त्व-

---

१. आथ.उ. ४.३.

२. वि.त.वि. उदाहृता नारायणश्रुतिः ।

३. भ.गी. १८-५६

४. भ.गी. ७.१७.

मुपक्रमादिभिः प्रतिपाद्यते । प्रत्यक्षेण तु प्रादेशिकानेकविध-शोकदुःखादिप्रपञ्चोपप्लुतं गृह्यते । अत आरभ्यो विचारः । नच प्रत्यक्षविरोधादप्रामाण्यं श्रुतेः । प्रत्यक्षं हि संभावितदोषमपौरुषेयेण निर्दोषेणागमेन बाध्यते । तेन वेदान्तवेद्यः शुद्धो नाहं प्रत्यये भातीति विषयादिसिद्धिः' इति ।।

भामत्युक्तशास्त्रविषयादिनिरासः

तन्न । निर्विशेषे भाताभातविभागस्यासंभवात् । अभासमानत्वेन देहात्मनोर्भेदस्य कर्तृत्वभोक्तृत्वाद्यभावस्य जीवब्रह्माभेदस्य द्वितीय-मात्राभावस्य वा त्वदभिमतस्यात्मनो भिन्नत्वे सत्वे चाद्वैतहानेः । मृषात्वे तद्बोधकश्रुतेरप्रामाण्यापत्तेः । शरीराभेदादेः सत्यत्वापत्तेश्च । न चाभावो द्वितीयो मयाऽङ्गीक्रिते न भाव इति वाच्यम् । अभा वत्वाधेयत्वाधारत्वादीनां भावानामपि सत्त्वापत्तेः । सप्रतियोगि-कस्याभावस्य भावापेक्षयाऽतिशयेनाद्वैतविरोधित्वाच्च । द्वितीयमात्र-निषेधकस्याद्वितीयपदस्य भावनिषेधपरत्वसङ्कोचे स्वतन्त्रद्वैतनिषेधप रत्वेनैव[१] सङ्कोचापत्तेः । अखण्डार्थेन वेदान्तेन ब्रह्माभावयोर्द्वयोरसिद्धेश्च । देहभेदादीनां भासमानात्माभिन्नत्वेऽभानासंभवात् । नच कल्पित-भेदेनागृहीत इव भातीति वाच्यम् । तत्त्वतो गृह्यमाणेऽधिष्ठाने भेदकल्पनाया अगृहीतत्वारोपस्य चासंभवात् ।।

द्वितीयाभावोपलक्षितात्मनः शास्त्रवेद्यत्वनिरासः

नच मिथ्याभूतेन द्वितीयाभावादिनोपलक्षित आत्मा शास्त्रवेद्यः । स च सत्य इति वाच्यम् । स्वप्रकाशत्वेन नित्यसिद्धात्माव-बोधार्थमुपलक्षणोक्त्योगात् । गृहे काकोत्थाप्योत्तृणत्वादिवत्

१. 'द्वितीयनिषेधपरत्वेनैव' इति स्यादिति भाति ।

तदुत्थाप्यधर्मस्य ब्रह्मण्यसत्त्वेन धर्मान्तरमुत्थाप्य व्यावर्तकत्वरूपोपलक्षणत्वासंभवाच्च । द्वितीयाभावाद्यधिकरणतया अविद्याधिष्ठानतया तत्साक्षितया च भासमानचिदन्यस्योपलक्ष्यस्याभावेन द्वितीयाभावादेरुपलक्षणत्वायोगाच्च । स्वप्रकाशस्याप्यविद्यावशादभानाङ्गीकारे जगदान्ध्यापत्तेः । 'तमेव भान्तमनुभाति सर्वं'[१] इत्यादिश्रुतिं व्याकुर्वता त्वया जगद्भानस्य ब्रह्मप्रकाशात्मत्वाङ्गीकारात् शुद्धस्यैव ब्रह्मणो व्यावहारिकप्रपञ्चाधिष्ठानत्वाङ्गीकारेण तद्भानं विनाऽध्यस्तस्य विश्वस्य भानायोगाच्च ।

नच स्वरूपचितः प्रकाशेऽपि तस्या अज्ञानाविरोधित्वात् विरोधिन्याश्च वृत्तेरभावेनाविद्यावृतत्वात्सन्दिग्धत्वमिति युक्तम् । स्वरूपचितोऽज्ञानाविरोधित्वे तद्वेद्ये दुःखादावज्ञानप्रसङ्गात् । दुःखाद्याकारवृत्त्यङ्गीकारे चैतन्यस्य ज्ञानत्वे मानाभावापत्तेः । सुखादेः क्षणमज्ञातत्वापत्तेश्च ।

न चाहं प्रत्यये विशिष्टमेव भाति न शुद्धमिति वाच्यम् । विशिष्टभाने विशेष्यभानावश्यकत्वेनात्मनोऽसन्दिग्धत्वेन विषयत्वासंभवात् ।।

ननु यथा षड्जादयो गान्धर्वशास्त्राभ्यासात् प्रगविस्फुरन्तस्तद्रूपेणानुल्लिखिता न श्रोत्रेण व्यज्यन्ते । व्यज्यन्ते तु शास्त्रवासितेन तेन । एवं वेदान्तवाक्यजन्यब्रह्मैक्याकारवासितान्तःकरणेन तद्भावाभिव्यक्तिर्न प्रागिति चेन्न । तत्र प्रागस्फुरतः पश्चाच्च स्फुरतः षड्जत्वादिजातिविशेषस्येव प्रकृते तस्याभावात् ।।

---

१. आथ.उ. ४.१३ काठ.उ. २.२.१५

एतेन यथा गान्धर्वशास्त्राभ्यासात् प्राक् भासमानेऽपि षड्जादौ कल्पिताया अभासमानतायाः सत्वान्न षड्जाद्यभिव्यक्तिः । तच्छास्त्रजन्यया तु श्रवणवृत्त्या कल्पिताभासमानतानिवृत्त्या षड्जाद्यभिव्यक्तिस्तथा स्वप्रकाशतया भासमानेऽपि ब्रह्मणि कल्पिताभासमानतया न प्राक् तद्भावाभिव्यक्तिः । वेदान्तवाक्य-जन्यब्रह्मात्मैक्याकारवासितान्तःकरणेन कल्पिताभासमानतानिवृत्त्या ब्रह्मभावाभिव्यक्तिरिति निरस्तम् । षड्जादावभासमानताकल्पना-निमित्ताज्ञानविषयस्य जातिविशेषस्य सत्वेन भासमानेऽप्यभासमान-ताकल्पनोपपत्तेः । (प्रकृते तु तादृक्कल्पनानिमित्ताज्ञानविषयस्य जातिविशेषस्य सत्वेन भासमानेऽप्यभासमानताकल्पनोपपत्तेः ।)[१] प्रकृते तु तादृक्कल्पनानिमित्ताज्ञानविषयस्य विशेषस्य जात्यादि-धर्मस्यासंभवेन न भासमनेऽपि ब्रह्मणि अभासमानताकल्पनोपपत्तिः। स्वरूपस्यैवाज्ञानविषयत्वे भासमानत्वप्रथमकोटेरेवासंभवात् । जगदान्ध्यापत्तेश्चेति दिक् ।।

।। इति शास्त्रारम्भसमर्थनम् ।।

## २. भेदखण्डनोद्धारः

### अद्वैतशास्त्रस्य प्रयोजनाभावकथनम्

अत एव प्रयोजनमप्यसंभवि । न च कण्ठस्थस्य प्राप्तस्य विस्मृतस्य मणेरुपदेशवन्नित्यप्राप्तस्वरूपोपदेशः सार्थक इति वाच्यम्। मण्युपदेशस्य हि सुखं दुःखाभावश्च फलम् । न च प्रकृते स्वरूप-भिन्नं प्राप्यं त्वन्मते किञ्चिदस्ति । स्वरूपात्मकस्य मोक्षस्य नित्य-प्राप्तत्वेन मुक्तीच्छाऽसंभवान्मुमुक्षुरधिकार्यपि तन्मते न संभवति ।।

१. पङ्क्तिसन्दर्भोऽयं मातृकायां कुण्डलीकृतः ।

### जीवेश्वरभेदे आगमप्रत्यक्षयोरभिधानम्

ननु जीवभिन्ने शास्त्रविषयत्वेन भवदभिमते सदनन्तगुणपूर्णे ब्रह्मणि मानाभाव इति चेन्न । 'तद्विजिज्ञासस्व तद्ब्रह्म'[१] इति जिज्ञास्यस्य गुणपूर्तिं वदन् ब्रह्मशब्द एव ह्यल्पगुणत्वेनानुभूयमानात् जीवाद्भिन्ने परेशे मानम् ।

प्रत्यक्षमपि ईशप्रतियोगिकजीवानुयोगिकभेदे मानम् । 'नाहमीश्वरो न सर्वज्ञः' इत्यनुभवात् । योग्यधर्मावच्छिन्नप्रतियोगिताकयोग्याधिकरणकान्योन्याभावो हि योग्यः । अस्ति चेश्वरत्वं जगदुत्पत्त्याद्यनकूलकृत्यादिमत्त्वं प्रतियोगितावच्छेदकमधिकरणं जीवस्तदुभयं च योग्यं ।।

### भेदः अधिकरणस्वरूपो न वेत्यादिपूर्वपक्षानुवादः

ननु भेदः किमधिकरणस्वरूपस्तद्भिन्नो वा । नाद्यः । सापेक्षस्य भेदस्य निरपेक्षेणाधिकरणेनैक्यासंभवात् । नान्त्यः । भेदभेदोऽपि भिन्नः तद्भेदोऽपि भिन्न इत्यनवस्थापत्तेः । कुम्भस्य स्तम्भाद्भेदे प्रतीते प्रतियोगित्वेन ज्ञानम् । तद्ज्ञाने च स्तंभस्य कुम्भाद्भेदधीरित्यन्योन्याश्रयाद्यापत्तेश्चेति चेन्न ।

### भेदस्याधिकरणस्वरूपत्वेऽनवस्थापरिहारः

भूतलत्वादिना निरपेक्षत्वेन भेदत्वेन सापेक्षत्वेन चाधिकरणात्मत्वे क्षतेरभावात् । न च [२]भेदत्वभेदमादायानवस्था । तद्भेदस्याप्यधिकरणरूपत्वात् । न चैवं भेदत्वमादायानवस्थापत्तिः । भूतलादौ

---

१. तैत्त.उ. ३.१

२. 'भेदभेदं' इति स्यादिति भाति ।

घटत्वावच्छिन्ननिरूपितमेकं भेदत्वत्वावच्छिन्ननिरूपितं चैकं भेदत्वमित्यनवस्थाभावात् । भूतलनिष्ठघटनिरूपितभेदत्वस्य स्वनिरूपितभेदत्वाभिन्नत्वेनाप्युपपत्तेश्च । समवायवन्निरूपकभेदेऽपि भेदत्वस्य भिन्नत्वाभावात् ॥

### भेदस्याधिकरणानात्मकत्वपक्षेऽपि अनवस्थान्योन्याश्रययोः परिहारः

भेदस्य भिन्नत्वेऽपि हि न क्षतिः । अनवस्थायाः प्रामाणिकत्वेनादोषात् । भेदप्रत्यक्षे प्रतियोगितावच्छेदकस्तम्भत्वादिप्रकारकज्ञानस्यैव हेतुत्वेनान्योन्याश्रयासंभवात् । न हि भेदप्रत्यक्षे भेदाश्रयाद्भिन्नत्वेन प्रतियोगिज्ञानं हेतुः । अन्यथा जीवस्य ब्रह्मैक्यप्रतीतौ ब्रह्मणो जीवैक्यधीरित्यैक्येऽप्यन्योन्याश्रयः स्यात् ॥

### अन्योन्याश्रयस्य उत्पत्तिज्ञप्त्यप्रतिबन्धकत्वसमर्थनम्

किञ्च अन्योन्याश्रय उत्पत्तौ ज्ञप्तौ वा बाधकः । नाद्यः । भेदस्यानादित्वात् । न द्वितीयः । भेदप्रतीतेस्तवाप्यावश्यकत्वात् । अन्यथा भेदभ्रमनिरासाय श्रवणाद्ययोगात् । भेदाप्रतीतौ बहुयत्नैस्तन्निरासायोगाच्च । स्वपरपक्षदूषणभूषणादेर्भेदाप्रतीतौ बहुविप्लवापत्तेश्च । स्वरूपं धर्मो वेति विकल्पायोगाच्च । ब्रह्मण्यनृतजडपरिच्छन्नभेदस्यासिद्ध्यापत्तेश्च । दूषणस्य भूषणत्वं परपक्षस्य च स्वपक्षत्वं स्यात् । साधनचतुष्टयान्तर्गतनित्यानित्यवस्तुविवेकस्यासिद्धिः स्यात् ।

### भेदबाधकधियः भेदविषयकत्वसमर्थनपूर्वमबाधकत्वसमर्थनम्

किञ्च भेदबाधकं भेदमेव विषयीकरोत्युताभेदम् यद्वा यत्किञ्चित्। निर्विषयकज्ञानासंभवात् । नाद्यः । भेदावगाहिनो भेदाबाधकत्वात्।

प्रत्युत भेदसाधकत्वाच्च । द्वितीये तदन्यस्तद्विरोधीतदभावो वा नञर्थो वाच्यः । पक्षत्रयेऽपि दुष्परिहारो भेदः । तदन्यत्वे तद्विरुद्धतदभावत्वायोगात् । भेदाभावग्राहिणाऽपि स्वस्मात्प्रतियोगिनश्च भिन्नतयैव स्वविषयस्य ग्राह्यत्वाच्च । औदासीन्येन प्रवृत्तस्येदमिति ज्ञानवदबाधकत्वात् । अत एव न तृतीयः ।।

किञ्च 'नायं भेदः' इति वा 'नास्त्यत्र भेदः' इति वा 'अन्यदेव भेदात्मना प्रत्यभात्' इति वा बाधकज्ञानेन भवितव्यम् । नेदं रजतमित्यादिवत् । तदेतत्सर्वथा भेदावगाहीति कथं तद्भेदमात्र-बाधकम् ।।

एवं च भेदाद्भिन्नतया स्वार्थे बाधधीर्गाहते न वा ? आद्ये भेदः स्थितः । अन्त्ये तु न सा स्याद्भेदबाधिका । अतः क्लृप्तविषयत्वा-न्नान्योन्याश्रयतादेरुत्थानम् । उत्थितस्य च भवेदाभासत्वम् ।।

### अनिर्वाच्यभेदाङ्गीकारे दोषकथनम्

नच मयाऽनिर्वाच्यो भेदोऽङ्गीक्रियते । तत्र स्वरूपान्तर्भाव-बहिर्भावाभ्यां सदसत्वाभ्यां वा अन्येनापि धर्मेण वाऽनिर्वाच्यत्व-मनुकूलमेवेति वाच्यम् । तर्कबाध्यत्वमात्रेणानिर्वाच्यत्वे ऐक्यस्यापि तत्प्रसङ्गात् । न चैक्यं ब्रह्मस्वरूपमेव । तद्बाधे शून्यत्वापत्तिः । भेदस्याप्यधिकरणात्मकत्वेन तन्मात्रबाधे शून्यतायास्तुल्यत्वात् । स्वरूपस्याज्ञानाद्यधिष्ठानतया सदैव भानादुपदेशवैय्यर्थ्यात् । स्वरूपज्ञानस्य भेदादिज्ञानाविरोधित्वाच्च । न हि भूतलमिति धीर्घटवत्त्वस्य घटवद्भेदस्य वा धियो विरोधिनी ।।

किञ्च ब्रह्मण्यनृतादिभेदो ब्रह्मज्ञानाबाध्यो वाच्यः । [१]...न्या च नात्मकघटादौ (शून्यानात्मकघटादौ) शून्यादितः स्वज्ञानाबाध्यभेददर्शनात् । न च ब्रह्मणः स्वेतरसर्वाधिष्ठानत्वादनृतादिभेदस्तद्धीबाध्य एव । घटस्यानधिष्ठानत्वान्न तद्धीर्भेदबाधिकेति वाच्यम् । यत्र तादात्म्येन यदध्यस्तं तत्प्रतियोगिकभेदं प्रति तस्याधिष्ठानताया व्याहतत्वात् । न हि शुक्त्यध्यस्तरूप्यप्रतियोगिकभेदं प्रति शुक्तिरधिष्ठानम् ।।

ब्रह्मनिष्ठानृतादिभेदस्य सत्यत्वसमर्थनम्

किञ्चैवं ब्रह्मणि अनृतभेदस्य तत्त्वतो निषेधे तत्र तत्तादात्म्यापत्तिः। न च घटे कल्पितघटान्तरभेदभ्रस्थले तत्तात्म्यादर्शनमिति वाच्यम्। (घटे कल्पितघटान्तरभेदभ्रमस्थले तादात्म्यमकल्पितम्) कल्पितघटप्रतियोगिकभेदस्य वास्तवघटे वास्तवत्वात् । एकस्मिन् भेदमात्रस्य कल्पने त्वभेदस्यैव वास्तवत्वात् । भेदाभावे गुरुशिष्यादिव्यवस्थानुपपत्तेश्चेति । न च तात्त्विकभेदाभावेऽपि कल्पितभेदेन गुरु-शिष्यस्वपक्षपरपक्षदूषणभूषणसत्यानृतादिव्यवस्थोपपत्तिरिति वाच्यम् । कल्पितेन भेदेनाकल्पिताभेदकार्यप्रतिबन्धासंभवात् । न च कल्पितयाऽविद्यया स्वप्रकाशरूपब्रह्मकार्यं कल्पितकान्तया विश्लेषकार्यमिव प्रतिबध्यत इति वाच्यम् । परमार्थसतः कल्पितकान्ताज्ञानस्यैव विश्लेषकार्यप्रतिबन्धकत्वात् ।

किञ्च व्यावहारिकसत्वार्थं त्वयाऽप्यन्योन्याश्रयादिकमुद्धरणीयम् । परस्परसापेक्षेण व्यवहारस्याप्यभावात् । न हि व्यावहारिकमृदः स्वजन्यघटसापेक्षत्वम् । न च ममाविद्यासामर्थ्येनैव । निरासात्।।

---

१. अत्र पङ्क्तिः त्रुटिता ।

### अविद्यादिनिवृत्तिनिष्ठसापेक्षत्वस्य आविद्यकत्वमिति मतखण्डनम्

यत्तु अविद्यादिद्वितीयनिवृत्यत्यन्ताभावजीवब्रह्मैक्यादेः सापेक्षस्य निरपेक्षब्रह्मात्मकत्वं यथा तथा सापेक्षभेदस्य निरपेक्षघटादि-रूपत्वमित्ययुक्तम् । अविद्यानिवृत्त्यादेः सापेक्षत्वस्याविद्यकतया तात्विकनिरपेक्षत्वाविरोधित्वादिति ।

तन्न । निवृत्त्यादिनिष्ठसापेक्षत्वस्य बाधकाभावेनाविद्यकत्वे मानाभावात् । न हि निवृत्त्यादिकं प्राक् सापेक्षमिदानीं नेति बाधधीः कदाप्यस्ति । न वा बाधं विनाऽन्यदाविद्यकत्वे मानमस्ति । अन्यथा त्वदभिमतं ब्रह्माप्यसत् श्रुत्युक्तसत्वं च तस्याविद्यकमिति स्यात् ।

किञ्च अविद्यानिवृत्तिद्वितीयात्यन्ताभावादिनिष्ठसापेक्षत्वस्य आविद्यकत्वेऽविद्यानिवृत्तिद्वितीयाभावादेर्व्याघातः । एतस्यैव द्वितीयत्वात्। अविद्यात्वाच्च । अविद्यानिवृत्तिद्वितीयाभावादेर्ब्रह्माभिन्नत्वे ब्रह्मस्फुरणे तस्यापि स्फुरणात् तद्विरोधिप्रपञ्चस्फुरणानुपपत्तेश्च । न हि रजताभावाभिन्नशुक्तिस्फुरणे रजतस्फुरणम् । न च तद्गृहीतुर्भा-न्तित्वम् । न च भ्रमकाले प्रपञ्चाभावब्रह्मणोर्न तत्त्वेन स्फुरणं किन्तु इदन्त्वेनेति वाच्यम् । तत्त्वेदंत्वयोर्भासमानब्रह्माभिन्नत्वे भानासंभवादिति कृतबुद्धयो विदांकुर्वन्तु ।।

किञ्च यत्र यदध्यस्तं तत्र तद्विरोधि तज्ज्ञानाबाध्यम् । यथा शुक्तावरूप्यत्वम् । यत्र यदैक्यं वाऽध्यस्तं तत्र तद्भेदस्तज्ज्ञानाबाध्यः। यथा दूरस्थवनस्पत्योर्भेदः । यत्र यदध्यस्तं तद्विरोधि तात्विकम् । यथा ब्रह्मण्यनृतत्वस्याध्यस्तत्वे सत्यत्वं तात्विकमति व्याप्तेः जीवेशाद्यैक्यस्याध्यस्तत्वे भेदस्तात्विकोऽनध्यस्तत्वे तु

ऐक्यप्रतियोगिकभेद एव तात्त्विकः स्यात् । तथा चाद्वैतभङ्गः स्यात्[१]। न चैक्यस्य ब्रह्मभेदो नाङ्गीक्रियत इति वाच्यम् । ऐक्यस्य निरपेक्षब्रह्माभिन्नत्वे तत्त्वंपदार्थपराणां 'सत्यं ज्ञानमनन्तं' 'विज्ञानघनः' इत्यादीनामैक्यपरमहावाक्यैकवाक्यत्वाभावेन वैय्यर्थ्यापत्तेः । न चैक्यस्य स्वरूपप्रकाशब्रह्माभिन्नतया स्थितिप्रतीत्यादौ निरपेक्षत्वेऽपि लक्षितार्थभेदभ्रमनिवर्तकवृत्तिजनने पदार्थसापेक्षतया स्वरूपपरवाक्यानामेकवाक्यतायाः सत्वात्, भेदरूपप्रतियोगिसापेक्षत्वेन तत्र सापेक्षत्वव्यवहार इति वाच्यम् । निर्विशषब्रह्माभिन्नैक्यस्य कुत्रापि सापेक्षत्वासंभवात् । अभावसादृश्यादेः सप्रतियोगिकत्ववदैक्ये सापेक्षतायाः स्वाभाविकत्वात् ।।

अभावत्वसापेक्षत्वयोः मायिकत्वेन विरोधाभाव इति मतखण्डनम्

एतेन मन्मतेऽविद्यानिवृत्यद्वैतयोः सापेक्षयोरपि ब्रह्मैक्यमेवास्तु। तत्राभावत्वसापेक्षत्वादेर्मायिकत्वेन विरोधाभावात् । तव तु सापेक्षत्वनिरपेक्षत्वयोस्तात्त्विकत्वेन विरोधस्य दुष्परिहारत्वादिति निरस्तम् । त्वदभिमताद्वैतश्रुतिबोध्यस्याभावत्वादेः कल्पितत्वायोगात्। श्रुतेरप्रामाण्यापत्त्याऽद्वैतनिवृत्यादेरसिद्ध्यापतत्तेः । ज्ञानस्य ज्ञानत्वेन दण्डादेः कारणत्वेनाभावसादृश्येच्छादेस्तत्त्वेन सापेक्षत्वेऽपि प्रमेयत्वदण्डत्वादिना निरपेक्षत्ववत् भेदत्वेन सापेक्षत्वेऽपि घटत्वादिना निरपेक्षत्वोपपत्तेश्च । न ह्यस्माभिरेकरूपेणोभयमङ्गीक्रियते ।।

---

१.. (अनध्यस्तत्वे त्विति ।। सत्यत्वे त्वित्यर्थः । ऐक्यप्रतियोगिकभेदस्तात्त्विकः स्यादिति ।। ब्रह्मणि ऐक्यस्य भेदः पारमार्थिकः स्यादित्यर्थः । तथा चाद्वैतहानिः । ऐक्यब्रह्मणोरुभयोरपि सत्यत्वादिति भावः ।)पङ्क्तिसन्दर्भोऽयं 'अनध्यस्तत्वे तु' इत्यादिपङ्क्तेरर्थत्वेन मातृकायां लिखितः ।

### अविद्यादिनिवृत्तिनिष्ठसापेक्षत्वस्य आविद्यकत्वमिति मतखण्डनम्

यत्तु अविद्यादिद्वितीयनिवृत्यत्यन्ताभावजीवब्रह्मैक्यादेः सापेक्षस्य निरपेक्षब्रह्मात्मकत्वं यथा तथा सापेक्षभेदस्य निरपेक्षघटादि-रूपत्वमित्ययुक्तम् । अविद्यानिवृत्त्यादेः सापेक्षत्वस्याविद्यकतया तात्विकनिरपेक्षत्वाविरोधित्वादिति ।

तन्न । निवृत्त्यादिनिष्ठसापेक्षत्वस्य बाधकाभावेनाविद्यकत्वे मानाभावात् । न हि निवृत्त्यादिकं प्राक् सापेक्षमिदानीं नेति बाधधीः कदाप्यस्ति । न वा बाधं विनाऽन्यदाविद्यकत्वे मानमस्ति । अन्यथा त्वदभिमतं ब्रह्माप्यसत् श्रुत्युक्तसत्वं च तस्याविद्यकमिति स्यात् ।

किञ्च अविद्यानिवृत्तिद्वितीयात्यन्ताभावादिनिष्ठसापेक्षत्वस्य आविद्यकत्वेऽविद्यानिवृत्तिद्वितीयाभावादेर्व्याघातः । एतस्यैव द्वितीयत्वात्। अविद्यात्वाच्च । अविद्यानिवृत्तिद्वितीयाभावादेर्ब्रह्माभिन्नत्वे ब्रह्मस्फुरणे तस्यापि स्फुरणात् तद्विरोधिप्रपञ्चस्फुरणानुपपत्तेश्च । न हि रजताभावाभिन्नशुक्तिस्फुरणे रजतस्फुरणम् । न च तद्गृहीतुर्भा-न्तित्वम् । न च भ्रमकाले प्रपञ्चाभावब्रह्मणोर्न तत्त्वेन स्फुरणं किन्तु इदन्त्वेनेति वाच्यम् । तत्त्वेदंत्वयोर्भासमानब्रह्माभिन्नत्वे भानासंभवादिति कृतबुद्धयो विदांकुर्वन्तु ।।

किञ्च यत्र यदध्यस्तं तत्र तद्विरोधि तज्ज्ञानाबाध्यम् । यथा शुक्तावरूप्यत्वम् । यत्र यदैक्यं वाऽध्यस्तं तत्र तद्भेदस्तज्ज्ञानाबाध्यः। यथा दूरस्थवनस्पत्योर्भेदः । यत्र यदध्यस्तं तद्विरोधि तात्विकम् । यथा ब्रह्मण्यनृतत्वस्याध्यस्तत्वे सत्यत्वं तात्विकमति व्याप्तेः जीवेशाद्यैक्यस्याध्यस्तत्वे भेदस्तात्विकोऽनध्यस्तत्वे तु

ऐक्यप्रतियोगिकभेद एव तात्त्विकः स्यात् । तथा चाद्वैतभङ्गः स्यात्[१]। न चैक्यस्य ब्रह्मभेदो नाङ्गीक्रियत इति वाच्यम् । ऐक्यस्य निरपेक्षब्रह्माभिन्नत्वे तत्त्वंपदार्थपराणां 'सत्यं ज्ञानमनन्तं' 'विज्ञानघनः' इत्यादीनामैक्यपरमहावाक्यैकवाक्यत्वाभावेन वैय्यर्थ्यापत्तेः । न चैक्यस्य स्वरूपप्रकाशब्रह्माभिन्नतया स्थितिप्रतीत्यादौ निरपेक्षत्वेऽपि लक्षितार्थभेदभ्रमनिवर्तकवृत्तिजनने पदार्थसापेक्षतया स्वरूपपरवाक्यानामेकवाक्यतायाः सत्वात्, भेदरूपप्रतियोगिसापेक्षत्वेन तत्र सापेक्षत्वव्यवहार इति वाच्यम् । निर्विशषब्रह्माभिन्नैक्यस्य कुत्रापि सापेक्षत्वासंभवात् । अभावसादृश्यादेः सप्रतियोगिकत्ववदैक्ये सापेक्षतायाः स्वाभाविकत्वात् ।।

अभावत्वसापेक्षत्वयोः मायिकत्वेन विरोधाभाव इति मतखण्डनम्

एतेन मन्मतेऽविद्यानिवृत्यद्वैतयोः सापेक्षयोरपि ब्रह्मैक्यमेवास्तु। तत्राभावत्वसापेक्षत्वादेर्मायिकत्वेन विरोधाभावात् । तव तु सापेक्षत्वनिरपेक्षत्वयोस्तात्त्विकत्वेन विरोधस्य दुष्परिहारत्वादिति निरस्तम् । त्वदभिमताद्वैतश्रुतिबोध्यस्याभावत्वादेः कल्पितत्वायोगात्। श्रुतेरप्रामाण्यापत्त्याऽद्वैतनिवृत्त्यादेरसिद्ध्यापतत्तेः । ज्ञानस्य ज्ञानत्वेन दण्डादेः कारणत्वेनाभावसादृश्येच्छादेस्तत्त्वेन सापेक्षत्वेऽपि प्रमेयत्वदण्डत्वादिना निरपेक्षत्ववत् भेदत्वेन सापेक्षत्वेऽपि घटत्वादिना निरपेक्षत्वोपपत्तेश्च । न ह्यस्माभिरेकरूपेणोभयमङ्गीक्रियते।।

---

१.. (अनध्यस्तत्वे त्विति ।। सत्यत्वे त्वित्यर्थः । ऐक्यप्रतियोगिकभेदस्तात्त्विकः स्यादिति ।। ब्रह्मणि ऐक्यस्य भेदः पारमार्थिकः स्यादित्यर्थः । तथा चाद्वैतहानिः । ऐक्यब्रह्मणोरुभयोरपि सत्यत्वादिति भावः ।)पङ्क्तिसन्दर्भोऽयं 'अनध्यस्तत्वे तु' इत्यादिपङ्क्तेरर्थत्वेन मातृकायां लिखितः ।

भेदस्याधिकरणात्मकत्वेऽपि संशयैकतरपरिशेषाभावयोः समर्थनम्

न च भेदस्याधिकरणरूपत्वे संशयानुपपत्तिः । धर्मिज्ञाने भेदाज्ञानाभावात् तदज्ञाने संशयहेतोर्धर्मिज्ञानस्याभावादिति वाच्यम्। भेदत्वेन ज्ञानेऽपि घटत्वदण्डत्वादिनाऽज्ञानात् संशयोपपत्तेः । चैतन्ये स्वप्रकाशे सदा भासमाने तदभिन्नस्य जीवस्य जीवैक्यद्वितीयाभावानवच्छिन्नानन्दादेरप्रकाशस्य निर्विशेषवादेऽनुपपत्तेः । न चैक्यादीनां स्वप्रकाशब्रह्माभिन्नत्वेऽपि तस्याज्ञानतत्कार्यविप्रतिपत्त्यादीन् प्रत्यविरोधितया तद्गोचरवृत्तिरेव तद्विरोधनीति वाच्यम् । अज्ञानाद्यधिष्ठानस्य शुद्धस्य वृत्तेरपि सत्वात् । तत्तदैन्द्रियकाधिष्ठानज्ञानं विना तत्तदिन्द्रियजन्याध्यस्तज्ञानासंभवात् । उक्तं हि विवरणे– 'घटोऽस्तीत्यादावस्तित्वशब्दितब्रह्मसत्तायां प्रतिपन्नस्य घटादेर्घटो नास्तीत्यादिप्रत्यक्षेण तस्यामेवाभावावगाहनम्' इति । प्रत्यगर्थवदेव वृत्त्यभावेऽपि स्वतो भासमाने विप्रतिपत्त्याद्ययोगाच्च ।।

[१]यत्तु भेदस्याधिकरणात्मत्वे घटभेदयोरेकतरपरिशेषापत्तिर्घट इति भेद इति विलक्षणव्यवहारो न स्यादिति, तत्र घटत्वभेदत्वादीनां निमित्तानां भेदादेकतरपरिशेषाभावविलक्षणव्यवहाराद्युपपत्तेः ।।

भेदत्वस्याखण्डोपाधित्वकथनम्

ननु भेदत्वं निर्वक्तुमशक्यम् । तद्धि न तावज्जातिः । सामान्यादिसाधारणत्वात् । नापि तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकाभावत्वादिरूप उपाधिः । तादात्म्यस्याभेदरूपत्वेऽन्योन्याश्रयापत्तेः । तन्निष्ठासाधारणधर्मरूपत्वे तदवच्छिन्नप्रतियोगि-

———

१. 'यत्तु' इतीदं प्रघट्टकं 'भेदत्वादेरखण्डोपाधित्वात्' इत्यनन्तरं स्यादिति भाति ।

ताकात्यन्ताभावेऽतिव्याप्तेः । तस्यापि स्वरूपत्वेऽनुगत-व्यवहारानापत्तेरिति चेन्न । भेदत्वादेरखण्डोपाधित्वात् ॥

किञ्च निर्विशेषवादिमते 'सत्यं ज्ञानमनन्तं' इत्यादिविलक्षण-व्यवहारानुपपत्तिः । न च कल्पितधर्ममादाय विलक्षणव्यवहारोपपत्तिः। श्रुतिबोध्यानां कल्पितत्वासंभवात् । श्रुतेरखण्डार्थकत्वहानेश्च । न हि ब्रह्म सत्यज्ञानादिरूपं नेति बाधकमस्ति येन सत्यत्वादिकं कल्पितम् । न चारोपे बाधं विनाऽन्यन्मानमस्ति । न च श्रुतेस्तत्र तात्पर्याभावः । व्यावहारिकस्यापि सत्यत्वादेरसिद्ध्यापत्तेः । न हि 'यजमानः प्रस्तरः' इति वाक्यतात्पर्याविषयो यजमानप्रस्तरयोरभेदो व्यावहारिकः सिद्ध्यति ॥

### भेदस्य धर्मिस्वरूपत्वपक्षे अन्योन्याश्रयपरिहारः

ननु 'इदमस्माद्भिन्नं' इति वा 'अस्यामुष्माद्भेदः' इति वा धर्मिप्रतियोगिज्ञानमिति[1], 'घटपटौ भिन्नौ' इति घटपटविशेषणतया 'तयोर्भेदः' इति तद्विशेष्यतया वा ग्रहणेऽप्यन्योन्याश्रय एव । घटपटप्रतीतौ तद्विशेष्यत्वादिना भेदग्रहः । भेदग्रहे च द्वित्वा-वच्छिन्नघटपटप्रतीतिरिति चेन्न । व्यावहारिकभेदप्रतीतेस्त्वयाऽ-प्यङ्गीकारात् ॥

किञ्च 'अस्तीदं' 'न जानामि' 'सर्वं खल्विदं ब्रह्म'[2] इत्यादिषु साक्षिसिद्धकालविषयसर्वैः सह वस्त्वज्ञानाभेदानामिवेहापि साक्षिसिद्धेन प्रतियोगिना सहैव व्यावृत्तिप्रतीतेर्नान्योन्याश्रयः ॥

---

१. इदं पदमनपेक्षितमिति भाति ।

२. . छा.उ. ३.१४.२.

ननु विशिष्टज्ञानस्य विशेषणज्ञानाजन्यत्वेऽपि अभावज्ञानं प्रति प्रतियोगिज्ञानस्य हेतुत्वात् साक्षी च प्रमाणमनपेक्ष्य प्रतियोगिघटादिकं धर्मिभिन्नतया न गृह्णातीति कथं साक्षिसिद्धप्रतियोगिना भेदग्रहोपपत्तिरिति चेन्न । विशिष्टवैशिष्ट्यावगाहिबोधं प्रति विशेषणतावच्छेदकघटत्वप्रकारकनिर्णयस्यैव हेतुत्वात् । 'घटभेदः' इत्यादौ घटादिर्विशेषणम् । घटत्वादिर्विशेषणतावच्छेदकम् । तत्प्रकारकनिर्णयो हेतुर्न तु धर्मिभिन्नत्वादिप्रकारकः ।।

एतेन धर्मितावच्छेदकप्रतियोगितावच्छेदकयोर्भेदाज्ञाने प्रतियोगितावच्छेदकतया अभावनिरूपकत्वस्यैवासंभवः । अन्योन्यधर्मभेदज्ञाने च विशिष्य स्तंभात्कुम्भस्य भेदप्रतीतौ कुम्भात् स्तम्भस्य भेदधीरित्यन्योन्याश्रय इति निरस्तम् । तवापि 'इदमनेनाभिन्नं' 'अस्यामुष्मादभेदः' 'इमे अभिन्ने' 'एतयोरभेदः' इत्येवं हि जीवब्रह्मणोरैक्यप्रतीतिः स्यात् । तथा च धर्मिप्रतियोगिभावधीर्द्वित्वावच्छिन्नधीश्च भेदज्ञानाधीनेति तद्विरुद्धाभेदज्ञानानुपपत्तिः । न च काल्पनिकभेदज्ञानस्य धर्मिप्रतियोगिभावात् द्वित्वावच्छिन्नज्ञाननिर्वाहकस्य तात्त्विकाभेदज्ञानप्रतिबन्धकत्वं नास्तीति वाच्यम् । विषमसत्ताकाभेदज्ञानभेदज्ञानयोर्विरोधाभावेन भेदज्ञानस्यानुच्छेदापत्तेः। भेदमिथ्यात्वसिद्धौ बाधकाभावाज्जीवब्रह्मणोर्वास्तवमैक्यं सिद्ध्येत् । तत्सिद्धौ च भेदस्य मिथ्यात्वसिद्धिरित्यन्योन्याश्रयात् । न चाभेदज्ञाने न धर्मिप्रतियोगिज्ञानापेक्षा । तस्य निष्प्रतियोगिकवस्तुस्वरूपत्वात् । सप्रतियोगिकत्वव्यवहारस्तु निरूपकभेदस्य सप्रतियोगिकत्वेनेति वाच्यम् । निष्प्रतियोगिकस्यापि घटादेः स्वाभावाभावत्वेन भाने सप्रतियोगिकत्वात् । अन्यथा महावाक्यार्थाभेदप्रतियोगिसमर्पकसत्यादिवाक्यवैय्यर्थ्यापत्तेः । निरपेक्षवस्त्वभिन्नस्य

भेदस्य निरपेक्षत्वं सापेक्षत्वव्यवहारस्त्वभेदरूपप्रतियोगिसापेक्षत्वादित्यापत्तेश्च । ब्रह्मस्वरूपमात्रैक्यज्ञानस्य भेदज्ञानाद्यविरोधित्वापत्तेश्च ॥

ननु भेदः किं भन्ने वर्तते उताभिन्ने । आद्येऽऽत्माश्रयोऽन्योन्याश्रयो वा । द्वितीये विरोध इति चेन्न । अभेदोऽभिन्ने उत भिन्ने । आद्येऽऽत्माश्रयद्यापत्तेः । द्वितीये विरोधात् । एवमनिर्वाच्यत्वं तद्वति वर्तते तदभाववति वा । आद्येऽऽत्माश्रयाद्यापत्तेः । द्वितीये विरोधात् ।

न चाभेदस्य स्वरूपत्वेन तत्र तद्विकल्पानवकाशः । अनिर्वाच्यत्वादावस्य विकल्पस्यानिर्वाच्यत्वप्रयोजकस्य मदनुकूलत्वादिति वाच्यम् । भेदस्याप्यधिकरणरूपत्वात् । उक्तविकल्पप्रतिघातेन व्यावहारिकानिर्वाच्यत्वासिद्ध्यापत्तेः । अन्यथा मिथ्यात्वोपपादकतर्कहतत्ववतामीक्षणानन्तत्वादीनां प्रधानादावपि संभवेनेक्षत्याद्यधिकरणानामुच्छेदापत्तेः ॥

॥ इति भेदखण्डनोद्धारः ॥

## ३. अथ भेदपञ्चके प्रत्यक्षम्

जीवधर्मिकेश्वरप्रतियोगिकभेदस्य ईश्वरधर्मिकजीवप्रतियोगिकभेदस्य च प्रत्यक्षत्वसमर्थनम्

नन्वीश्वरस्याप्रत्यक्षत्वात्तत्प्रतियोगिकस्तद्धर्मिकभेदो न प्रत्यक्ष इति चेन्न । ईश्वरधर्मिकभेदस्य जीवाप्रत्यक्षत्वेऽपि स्वधर्मिकभेदो हि जीवप्रत्यक्षः । 'नाहं सर्वज्ञः' 'नाहमीश्वरः' इत्यनुभवात् । प्रतियोगिनः पिशाचस्यायोग्यत्वेऽपि 'स्तम्भः पिशाचो न' इति

तद्भेदस्य प्रत्यक्षत्वात् । अधिकरणस्य स्तंभादेः प्रतियोगितावच्छेदकस्य च पिशाचत्वस्य जातिरूपस्य योग्यत्वात् । जातिमात्रस्य प्रत्यक्षयोग्यत्वात् । व्यक्तेरयोग्यत्वात् पिशाचत्वस्य न प्रत्यक्षत्वम्[१] । यत्र प्रतियोगितावच्छेदकस्य सत्वमनुलब्धिविरोधि तत्र तदवच्छिन्न-प्रतियोगिताको भेदो योग्यः । प्रकृते च प्रतियोगितावच्छेदकमीश्वरत्वं सर्वविषयकज्ञानेच्छाकृतिमत्वम् । तच्च योग्यमेव । ईश-धर्मिकजीवभेदेऽपि 'तान्यहं वेद सर्वाणि न त्वं वेत्थ परंतप'[२] 'उत्तमः पुरुषस्त्वन्यः'[३] इत्यादितद्वचनानुमितप्रत्यक्षं मानम् ।।

'नाहं सर्वज्ञः' 'नाहमीश्वरः' इत्यादिप्रत्यक्षानां शुद्धविषयकत्वसमर्थनम्

ननूक्तानुभावस्यान्तःकरणाद्यवच्छिन्नचैतन्येऽविद्याद्यवच्छिन्न चैतन्यप्रतियोगिकभेदावगाहितया शुद्धचैतन्यधर्मिकनिर्दुःखादि-प्रतियोगिकभेदानवगाहित्वमिति चेन्न । 'योऽहमस्वाप्स्वं यस्य ममाज्ञानसंसारादि सोऽहं निर्दुःखो न' इति सुषुप्तिकालीनान्तःकरणा-नवच्छिन्नाभेदेनाज्ञानाद्याश्रयाभेदेन च प्रत्यभिज्ञायमाने शुद्धे भेदप्रतीतेः। संसाराधारस्य तदनाधाराद्भेद एव ह्यावयोर्विवादो न तु चैतन्यस्य चैतन्यान्तरात् । न चैतावताऽज्ञानावच्छिन्न एव भेदग्रहो नतु शुद्धे, नहि सुषुप्तिकालेऽन्तःकरणानवच्छिन्नत्ववदज्ञानानवच्छि न्नत्वमप्यस्तीति वाच्यम् । अज्ञानाकल्पितस्य शुद्धस्यैवाज्ञानाश्रयत्वात्। 'आश्रयत्वविषयत्वाभागिनी निर्विशेषचितिरेव केवला' इति त्वयोक्तेः।।

---

१. अत्र पङ्क्तिर्लुप्तेति भाति ।

२. भ.गी. ४.५.

३. भ.गी. १५.१७.

परस्परजीवयोः जडयोः जीवजडयोश्च भेदे प्रत्यक्षोदाहरणम्

'नाहं चैत्रः, नाहं मैत्रः' इति जीवभेदे प्रत्यक्षम् । न च साक्षिप्रत्यक्षं अध्यस्तसाधारणमिति न तेन तात्त्विकभेदसिद्धिः । साक्षिसिद्धे दुःखादौ सन्देहाद्यभावेन तस्य प्रमाणेषु [१]...ष्टत्वात् । न च जीवो न साक्षी तस्य कर्तृत्वात् । उदासीनद्रष्टा हि साक्षीति वाच्यम् । लोके विश्वासायौदासीन्यस्योपयोगेऽपि प्रकृते तदनुपयोगात्। विश्वासास्पदानां वादिनामपि युधिष्ठिरादीनां साक्षित्वप्रसिद्धेः। व्यवहर्तव्यदुःखादिभानाय व्यवहर्तुर्जीवस्यैव साक्षित्वौचित्यात् । 'घटो न ब्रह्म' 'घटो न पटः' 'नाहं घटः' इत्यादि पञ्चापि भेदाः प्रत्यक्षाः ।।

।। इति भेदपञ्चके प्रत्यक्षम् ।।

## ४. अथ भेदे अनुकूलतर्काः

विरुद्धधर्माधिकरणत्वहेतोरसिद्धिपरिहारपूर्वं भेदसाधकत्वाभिधानम्

जीवेश्वरौ स्वसमसत्ताकपरस्परभेदवन्तौ विरुद्धधर्माधिकरणत्वात् दहनतुहिनवत् । न च दुःखादेरन्तःकरणधर्मत्वेन स्वरूपासिद्धिः । यथा हि क्षेत्रवृक्षाद्युत्पन्नधनदण्डादिना पुरुषस्य धनित्वं दण्डित्वं च न क्षेत्रादेस्तथाऽन्तःकरणोत्पन्नदुःखादेरविद्यासहकृतस्वामित्वसम्बन्धेन जीवे विद्यमानत्वात् । अन्यथा दुःखादिबन्धोऽन्तःकरणे जीवे च मुक्तिरिति वैय्यधिकरण्यापत्तेः । न च निर्दुःखत्वसदुःखत्वयोरेवावच्छेदकभेदेनोपपत्त्या धर्मिभेदासाधकत्वमिति वाच्यम् । अवच्छेदकेन हि कृत्स्नं ब्रह्मावच्छिद्यत एकदेशो वा । आद्ये कृत्स्नस्य जीवत्वमीशत्वं

१. अत्र पङ्क्तिः त्रुटिता ।

वा स्यादिति न तेन भेदसिद्धिः । अन्त्ये सदेशत्वापत्तिः । नित्यस्य सार्वज्ञ्यस्याव्याप्यवृत्तित्वे मानाभावाच्च । 'अहमज्ञो दुःखी' इत्यज्ञानाश्रय एव दुःखित्वप्रतीतेस्तस्य चाज्ञानाकल्पितत्वेन शुद्धत्वात् ॥

सर्वज्ञत्वाभावहेतौ सर्वेति विशेषणस्य सार्थक्योपपादनपूर्वकं तेन भेदसाधनम्

जीवस्तत्त्वतो ब्रह्माभिन्नो न सर्वज्ञत्वाभावात् घटवत् । न च सर्वेति विशेषणमसिद्धिवारकत्वात् व्यर्थम् । केवलाभावापेक्षया विशिष्टाभावस्य भिन्नत्वेन वैय्यर्थ्याभावात् ॥

अधिष्ठानत्वहेतुना भेदस्य सत्यत्वसमर्थनम्

ब्रह्म जीवधर्मिकप्रतियोगिज्ञानाबाध्यभेदप्रतियोगि अधिष्ठानत्वात्। शुक्तिवत् । न च यत्किञ्चिदभावप्रतियोगिघटादिज्ञानाबध्य भेदप्रतियोगित्वेनात्मज्ञानाबाध्यभेदासिद्धिरिति वाच्यम् । यथा हि माता पूज्या इत्यत्र स्वमातैवायाति न तु पुत्रादिमाता । तथा पक्षे ब्रह्मप्रतियोगिको दृष्टान्ते शुक्तिप्रतियोगिकश्च भेद आयाति । ससंबन्धित्वात् ॥

दुःखाननुभवितृत्वहेतुना ब्रह्मधर्मिकजीवभेदसाधकानुमानकथनम्

ब्रह्म जीवाद्भिन्नं दुःखाननुभवितृत्वात् । घटवत् । न च सर्वानुभवितरि हेतोरसिद्धिः । स्वनिष्ठतयेश्वरेण दुःखाद्यननुभवितृत्वात्। न च दुःखादेरन्तःकरणनिष्ठत्वेन स्वनिष्ठतया जीवेऽननुभवितृत्वस्य व्यभिचारः । अस्मन्मतेऽन्तःकरणोत्पन्नस्यापि दुःखादेश्चैतन्यनिष्ठ-तयैवानुभावात् ।

ब्रह्म जीवप्रतियोगिकधर्मिसत्तासमानसत्ताकभेदवत् दुःखाननुभवितृत्वात् अभ्रान्तत्वात् असंसारित्वात् घटवत् ।।

जीवधर्मिकब्रह्मप्रतियोगिकभेदसाधकानुमानाभिधानम्

जीवो वा ब्रह्मप्रतियोगिकतादृशभेदवान् असर्वशक्तिकत्वात् व्यतिरेकेण ब्रह्मवत् । न चोपहितस्य पक्षत्वे तत्समसत्ताकभेदसिद्धौ सिद्धसाधनम् । शोधिततत्त्वंपदार्थस्य पक्षत्वात् । न च तस्य धर्मित्वासिद्धिः । धर्मित्वाभावं प्रति धर्मित्वाधर्मित्वाभ्यां व्याघातात्। न च ब्रह्मणः सर्वनिषेधस्वरूपत्वेनाव्याघातः । श्रुत्या निषेधविधानार्थं धर्मधर्मिभावस्यावश्यकत्वात् । न च धर्मिपदेन दृष्टान्तोक्तौ तत्समसत्ताकभेदे सिद्धसाधनम् । पक्षोक्तौ साध्याप्रसिद्धिरिति वाच्यम्। धर्मिशब्दस्यापि पित्रादिशब्दवत् ससम्बन्धिशब्दत्वेन यत्किञ्चिद्धर्मिसमसत्ताकतया सिद्धसाधनाद्यसंभवात् । धर्मिशब्दस्थाने समभिव्याहृतपरस्वपदप्रयोगे क्षतिविरहाच्च । न चानुमाने शब्दस्वभावोपन्यासानुपयोगः । परार्थानुमाने न्यायावयवार्थबोधने तस्योपयोगात् ।।

चेतनत्वपक्षकभेदसाधकानुमानाभिधानम्

चेतनत्वं जीवत्वावच्छिन्नप्रतियोगिताकधर्मिज्ञानाबाध्यभेदवद्वृत्ति सर्वचेतनवृत्तित्वात् । चेतनावृत्तिरहितत्वात् वा । वाच्यत्ववत् । न चान्त्यहेतोः जीवत्वे व्यभिचारः । तत्र जीवप्रतियोगिकधर्मिज्ञानाबाध्यभेदवद्वृत्तित्वस्यैव साध्यत्वात् । न च जडवृत्तित्वमुपाधिः । पक्षेतरतुल्यत्वात् । न च शुद्धं चैतन्यमनुमानागम्यं गम्यं तूपहितं तद्भेद इष्टापत्तिः । तत्र त्वदीये ऐक्यानुमानानुपन्यासापत्तेः। न च तस्य भेदे तात्त्विकभ्रमनिरासकत्वमात्रं फलम् । तद्धर्मिकैक्यबोधं विना तद्धर्मिकजीवादिप्रतियोगिकभेदस्य तात्त्विकत्वभ्रमनिरासासंभवात्।।

व्यभिचारादिशून्यत्वादन्यथानुपपत्तितः ।
सर्वशक्त्यल्पशक्त्यादेर्भेदे वै तत्त्वता दृढा ।।

यदि चैत[1].... वृत्तावप्युपधेयस्याकल्पिततया निवृत्त्ययोगान्मोक्षान्वयित्वं विशिष्टस्य शुद्धभिन्नतया त्वदभिमतस्य मृषात्वेन मोक्षान्वयासंभवात् । तस्य सत्यत्वे तत्र दृश्यत्वादेर्व्यभिचारापत्तेः। न च दुःखानुसन्धानस्योपहितनिष्ठत्वेऽप्यविद्यारूपो बन्धः शुद्धगतस्तत्रैव च मोक्ष इति तयोरे...वैय्यधिकरण्यम्[2] । अविद्यायाः दुःखाद्यनुभवद्वारैवानर्थत्वात् । यत्र दुःखानुसन्धानं स एव बद्धस्तस्यै मोक्षौचित्यात् । न चाविद्यावच्छिन्नद्वारा अवस्थात्रयातीते शुद्धेऽप्यनुसन्धानमिष्टम् । दुःखानुसन्धातुरवस्थात्रयातीत्वासंभवात् ।।

उपाधेः शुद्धगतत्वे दोषाभिधानम्

किञ्चोपाधेः शुद्धगतत्वे किमेकैकोपाध्यपगमो मुक्तिरुत सर्वोपाध्यपगमः । नाद्यः । सदा मुक्तिरेव नतु बन्ध इत्यापातात्। नान्त्यः । अधुना बन्ध एव न कस्यापि मुक्तिरित्यापातात् । न च येनोपाधिना यच्चैन्यस्य परिच्छिन्नत्वं तस्मिन् चैतन्ये तदुपाध्यपगम एव मोक्ष इति नानाजीववादे प्रथमकल्पो निर्दुष्टः । एकोपाधिमुक्तस्यापि शुद्धस्योपाध्यन्तरेणावच्छिन्नत्वेन मुक्तेरसंभवात् । न हि भग्नोपाधिचैतन्यमुपाध्यन्तरोपहिताद्भिन्नम् । न चैकजीववादे सर्वोपाध्यपगमो मोक्षः । शुकादिमुक्तिबोधकशास्त्रस्याप्रामाण्यापत्त्या तन्मतस्याप्रामाणिकत्वात् । दुःखाद्यनुसंधानस्याव्यवस्थापकत्वाच्च ।।

---

१. अत्र पङ्क्तिः लुप्ता ।
२. 'तयोर्न वैय्यधिकरण्यं' इति 'तयोरैकाधिकरण्यं' इति वा अत्र पङ्क्तिः स्यादिति भाति ।

एकदेशादिसम्बन्धादिविकल्पेन उपाधिखण्डनम्

किञ्च उपाधिरेकदेशेन संबध्यते कृत्स्नेन वा । आद्ये त्वन्मते स्वाभाविकांशाभावेनौपाधिकत्वं वाच्यम् । तथा चानवस्था । अन्त्ये न भेदकता । कृत्स्नस्यैकोपाधिनैव ग्रस्तत्वात् । मम गगनादावपि स्वाभाविकांशाभावे घटाद्युपाधिसंबन्धो न स्यादेव । न च सर्वविकल्पासहत्वेन मिथ्याभूतस्यैवोपाधेर्मिथ्याभेदप्रयोजकत्वम् । उत्तरास्फूर्तौ प्रधानसंवृत्त्योर्विकल्पाद्यसहत्वमिति सांख्यबौद्धाभ्यामपि वक्तव्यत्वेन तन्निरासासंभवात् । मृषाभूतस्यापि व्यावहारिकस्य त्वया व्यवस्थास्वीकारात् । अन्यथा जीवजडयोर्विश्वकर्तृत्वान्तर्यामित्वादिकं निरस्येश्वरे तत्समर्थयतस्तव समन्वयाध्यायस्योच्छेदः स्यात् । न हि तव वास्तवं कर्तृत्वमीशेऽस्तीति । अतो बद्धमुक्तदुःखाद्यनुसन्धानाननुसन्धानानुपपत्त्या चितां वास्तवभेदः सिद्धः ।।

।। इति भेदे अनुकूलतर्काः ।।

## ५. अथ जीवैक्यभङ्गः

जीवैक्यनिरासः

ननु स्याद्बद्धमुक्तादिव्यवस्थार्थं वास्तवो भेदो यदि जीवनानात्वं स्यात् । तदेव तु न, तस्यैकत्वात् । बन्धमोक्षगुरुशिष्यादिव्यवस्थायाः स्वप्नवद्यावदविद्यमुपपत्तिरिति चेन्न । तस्मिन्नेकस्मिन् सुप्ते सर्वजगदप्रतीत्यापतत्तेः । न च सर्वाभिमानी मुखो(ख्यो)[१] न सुप्तः। सृष्टिमारभ्याऽप्रळयमसुप्तत्वस्य जीवेऽसंभवात् ।।

---

१. 'चतुर्मुखः' 'मुख्यः' इति वा स्यादिति भाति ।

जीवब्रह्मैक्ये दोषकथनम्

किञ्च ब्रह्मण एव जीवत्वे तस्यैव बन्धमोक्षाविति तस्य नित्यमुक्तत्वश्रुतिविरोधः स्यात् । न च मुक्तेः स्वरूपत्वेन बन्धस्य चाविद्यकत्वेन तदविरोधः । न हि मृगतृष्णाकल्पितोदकेन स्वभावशुष्का मरुभूमिरार्द्रा भवतीति वाच्यम् । वास्तवबन्धस्य त्वन्मतेऽभावेन ब्रह्मज्ञानोच्छेत्तव्येन कल्पितबन्धेनास्पृष्टचैतन्यस्याभावेन नित्यमुक्तबोधकश्रुतिनिरर्थकत्वानुद्धारात् । बन्धस्य मायिकत्वे सर्वज्ञस्य तद्दर्शनासंभवेन तदुच्छेदायोपदेष्टृत्वासंभवात् । तमेव प्रति प्रत्यक्त्वपराक्त्वयोरयोगाच्च । न हि मैत्रं प्रति त्वमिति धीविषयस्य चैत्रस्य तमेव प्रत्यहमिति धीविषयत्वम् । न च भिन्नान्तःकरणा-भेदाध्यासेन तत्तदन्तःकरणमादाय प्रत्यक्त्वं पराक्त्वमहंत्वमित्यादि बुद्धिविषयत्वव्यवस्थोपपत्तिः । योगिनः कायव्यूहेनान्तःकरणतादात्म्या-रोपेऽप्यहमित्येव सर्वत्र प्रतीतेः । तदन्तःकरणस्यैकत्वे बाह्यकरणा-नामप्यैक्यापत्त्या कायव्यूहस्यैवाभावापत्तेः । निर्विशेषे स्वप्रकाशेऽ-न्तःकरणादितादात्म्यारोपासंभवाच्च । चैत्रस्य शुक्तिसाक्षात्कारेण रूप्यभ्रमनिवृत्तावन्येषामपि तन्निवृत्त्यापत्तेश्च । न चान्तःकरणाभेदेन व्यवस्थोपपत्तिः । अन्तःकरणस्य जीवानुपाधेर्भोगाद्यव्यवस्थापकत्वात् । अन्यथा योगिनः कायव्यूहे देहोऽपि भोगभेदकः स्यात् ।।

एकजीववादस्य श्रुतिबाध्यत्वकथनम्

किञ्च श्रुतिषु 'अविद्यायामन्तरे वर्तमानाः'[१] इत्यविद्यासम्बन्धः, (अविद्या) 'रमणीयचरणाः'[२] इत्यादौ कर्मसम्बन्धः, 'सति सम्पद्य

---

१. काठ.उ. १.२.५.

२. छा.उ. ५.३.७.

न विदुः'[१] इत्यादौ सुषुप्तिः, 'वेदान्तविज्ञानसुनिश्चितार्थाः'[२] इत्यादौ तत्त्वज्ञानं, 'परामृता परिमुच्यन्ति सर्वे'[३] इत्यादौ मुक्तिश्च चेतनधर्मः कथमनेकेषूच्येत । 'अनादिमायया सुप्तो यदा जीवः प्रबुध्यते'[४] इत्येकवचनं 'नीतिपरो राजा भवेत्' 'स्वर्गकामो यजेत' इत्यादिवज्जात्यभिप्रायेणोपपन्नम् । न च विभिन्नान्तःकरणाभेदारोपात् प्राप्तस्य बहुत्वस्यानुवादिका उक्तश्रुतयः । मुक्तिसुषुप्त्यादावन्तःकरणारोपाभावात् । न च जीवबहुत्वस्य प्राप्तत्वेन मुक्त्यंश एवाप्राप्तत्वपर्यवसानम् । स्वरूपात्मिकाया मुक्तेस्त्वन्मते नित्यप्राप्तत्वात् । 'बहवो ज्ञानतपसा पूता मद्भावमागताः'[५] 'इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः'[६] 'ये च मुक्ता भवन्तीह नरा भरत सत्तम । तेषं लक्षणमेतद्यत् श्वेतद्वीपनिवासिनाम् । ते तस्त्रैगुण्यहीनास्ते परमात्मानमञ्जसा । विशन्ति विप्रप्रवराः सांख्या भावगतैः सह ।।' इत्यादिस्मृतिभिर्मुक्तिप्राप्तेर्बहुकर्तृकत्वविधानात् ।।

### एकस्य जीवस्य कल्पकत्वे दोषाभिधानम्

किञ्चैकस्यैव जीवस्य सर्वकल्पकत्वे जीवस्य कारणत्वं निषिध्येश्वरकारणत्वबोधकैः श्रुत्यादिभिर्विरोधः स्यात् । सर्वज्ञत्वादि-बोधकश्रुतीनां निर्विषयत्वं स्यात् । जीवभिन्नेशाभावाज्जीवे सार्वज्ञ्यस्यानुभवबाधितत्वात् । न च समष्ट्यभिमानिनो जीवस्य

१.छा.उ. ६.३.६.
२.आथ. उ. ४.६.
३.आथ.उ. ४.६
४.माण्ड.उ. २.८.
५.भग.गी. ४.१०.
६.भग.गी. १४.२.

सार्वज्ञ्यादिकं स्वीक्रियते । लोके जीवत्वेन प्रसिद्धेषु सार्वज्ञ्यादेः प्रत्यक्षादिना बाधितत्वात् । प्रसिद्धभिन्नसर्वज्ञस्वीकारे त्वस्मदिष्टसिद्धेः। न चान्तःकरणाभेदाध्यासात्तदननुभवविपरीतानुभवयोरुपपत्तिः । सर्वज्ञस्याधिष्ठानतत्त्वं जानतस्तदध्यासासंभवात् । भ्रान्तिसार्वज्ञ्ययोरेकत्र व्याहतत्वाच्च । 'तान्यहं वेद सर्वाणि न त्वं वेत्थ परन्तप'[१] इति स्मृत्या जीवानभिमानिनः सार्वज्ञ्योक्तेः । 'आचार्यवान् पुरुषो वेद'[२] इति श्रुतेरुपदेशं विना जीवस्य तत्त्वज्ञानं ह्यनुपपन्नम् । उपदेष्टव्यादन्यस्य चैतन्यस्याभावात् । न च सत इवोपदेष्टुः कल्पितस्य उपदेष्टृत्वसंभवः । न ह्युपदेष्टृत्वं कल्पितमात्रस्य किन्तु तत्त्ववित्वेन कल्पितस्य । तथा चोपदेशात् प्राक् तत्त्वज्ञाने तदैव मोक्षापत्तिरुपदेशवैय्यर्थ्यं च । न च स्वप्नवदुपपत्तिः । स्वप्ने शब्दविशेषवक्तृत्वेनैव गुरुकल्पनात् । (प्रकृते तु गुरुशिष्ययोः कल्पितत्वस्यापि तत्त्वान्तर्गतत्वेन तत्त्वविदस्तज्ज्ञानावश्यकत्वात्)[३] तत्त्ववित्वेनैव गुरुकल्पनात् । तत्त्ववित्वेनाकल्पनाच्च । न चात्रापि वाक्यविशेषवक्तृत्वेनैव गुरुः कल्प्यते । 'यदेव भगवान् वेद तदेव मे ब्रूहि'[४] इत्यादिश्रुतेः । 'उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः'[५] इत्यादिस्मृतेश्च विरोधापत्तेः । न च सामान्यतो मोक्षोपयोगिज्ञान-विषयवित्वेनाज्ञाततत्त्ववित्वेन तत्त्वमस्यादिवाक्यवक्तृत्वेन वा कल्पितस्योपदेष्टृत्वं युक्तम् । अन्यथा तवापि मते तत्त्ववित्वेन प्रमित एवाचार्योऽनुसर्तव्य इति प्रथमत एव तत्त्वज्ञाने

---

१. भग.गी. ४.५.

२. छा.उ. ६.१४.२.

३. मातृकायां पङ्क्तिरियं कुण्डलीकृता ।

४. बृ.उ. ४.४.३.

५. भग.गी. ४.३४.

उपदेशवैय्यर्थ्यमिति वाच्यम् । सामान्यतो मोक्षोपयोगिज्ञानवत्वेन कल्पितस्य विशेषतो ज्ञानाभावेनोपदेष्टृत्वासंभवात् । अस्मन्मते सामान्यतो मोक्षोपयोगिज्ञानवत्वेन प्रमितस्य गुरोः शिष्याज्ञातस्य विशेषज्ञानवत्वस्य संभवेनोपदेष्टृत्वसंभवात् । शिष्येण गुरौ सार्वज्ञ्यारोपेऽपि गुरोर्वास्तवसार्वज्ञ्याभावेनोपदेशे प्रवृत्त्यनुपपत्तेश्च । मोक्षस्यापि स्वाप्नमोक्षवन्मृषात्वापत्तेश्च । शिष्यं स्वाज्ञानकल्पितं कल्पकं वा जानतो गुरोरुपदेशे प्रवृत्त्यनुपपत्तेश्च । स्वप्ने तु तथाऽज्ञानादुपदेशे प्रवृत्त्युपपत्तेः ।।

### कल्पको निश्चितो न वेति विकल्पपूर्वं एकजीववादखण्डनम्

किञ्च कल्पको निश्चिताद्वैतश्चेत् शास्त्रप्रणयनवैय्यर्थ्यम् । तदनिश्चये शास्त्रं प्रामामूलकं न स्यात् । न च शास्त्रस्य प्रमामूलकत्वाभावेऽप्यबाधितविषयकत्वेन प्रामाण्योपपत्तिः । पौरुषेयवाक्यस्य प्रमामूलकत्वाभावेऽबाधितार्थकत्वासंभवात् । सोऽमुक इति निश्चयाभावेन बह्वायाससाध्यमोक्षार्थप्रवृत्यनुपपत्तेश्च । न च शुद्धचित एकत्वेन वस्तुतो संसारित्वेऽप्यावरणविक्षेपशक्तिद्वयशालिस्वाश्रिताविद्यावशात् संसारित्वकल्पकत्वमोक्षार्थयतमानत्वाद्युपपत्तिः । निर्विशेषस्य स्वप्रकाशस्याज्ञानावरणासंभवात् । उपदेशकाभावेन मोक्षीययत्नासंभवाच्च ।।

### अनादिसंसारे कस्यचित् मुक्तिरभून्न वेति विकल्प्य एकजीववादखण्डनम्

किञ्च अनादिसंसारे कस्यचित्तत्वज्ञानं मोक्षश्चाभून्न वा । आद्ये जीवस्यैकत्वेनेदानीं संसारोपलब्धिर्न स्यात् । अन्त्ये संप्रदायाभावेन तत्त्वविज्ञानासंभवः । न च ज्ञानसामग्र्येव ज्ञानहेतुर्न सम्प्रदायः । संप्रदायस्यापि वेदतात्पर्यजन्यज्ञानसामग्र्यां निविष्टत्वात् । तत्त्ववित्वेन

श्रुत्यादिसिद्धानां शुकवामदेवादीनां त्वदभिमतगौडपादादीनां मुक्तिर्नाभून्मम तु कथं भविष्यतीति शङ्कया वेदान्तश्रवणादौ निःशङ्कप्रवृत्त्यनुपपत्तेश्च । न च शास्त्रप्रामाण्यदार्ढ्यात् प्रवृत्त्युपपत्तिः । श्रुतिप्रामाण्यादेव हि सिद्धो जीवभेदः पूर्वमपि केषाञ्चिन्मुक्तिश्च कुतो नाङ्गीक्रियते । श्रूयते हि 'यो यो देवानां प्रत्यबुध्यत स एव तदभवत् तथर्षीणां मनुष्याणां'[१] 'अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः'[२] 'नित्यो नित्यानां चेतनश्चेतनानां'[३] इति । स्मर्यते च 'बहवो ज्ञानतपसा पूता मद्भावमागताः'[४] 'इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः'[५] इति ।

न चोक्तवाक्यानि सार्वलौकिकभ्रमसिद्धभेदानुवादकानि । भ्रमगृहीतमात्रग्राहित्वेनात्यन्ताप्रामाण्यापत्तेः । बाधकाभावेन भेदधियो भ्रमत्वासंभवाच्च । त्वन्मते सर्वप्रत्यविषयब्रह्मभिन्नाभेदाद्यभावेनाभेदवाक्यानामेवानुवादकत्वाच्च ।

'अतीतानागताश्चैव यावन्तः सहिताः क्षणाः ।
ततोऽप्यनन्तगुणिताः जीवानां राशयः पृथक् ।।'[६]

---

१. बृ.उ. ३.५.४.
२. महा.ना.उ. १०.५
३. काठ.उ. २.२.१३.
४. भग.गी. ४.१०.
५. भग.गी. १४.२
६. वि.त.नि प्रथमपरिच्छेदोदाहृतस्कान्दवचनम् ।

इत्यादिस्मृत्यनुसारात् प्रतिक्षणमेकैकजीवमुक्तावपि न जीवानां समाप्त्या संसारसमाप्तिः । अतः प्रतिदेहं वास्तवजीवभेदेन बन्धमुक्तिस्वर्गनरकगुरुशिष्यत्वादिव्यवस्थोपपन्ना ।।

।। इति जीवैक्यभङ्गः ।।

## ६. अथ भेदश्रुतेरनुवादकत्वभङ्गः

### भेदे श्रुतिप्रमाणाभिधानम्

'ज्ञाज्ञौ द्वावजावीशानीशौ'[१] 'द्वा सुपर्णा सयुजा सखायौ'[२] 'तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति'[३] 'य आत्मनि तिष्ठन्नात्मानमन्तरो यमयति'[४] 'यो विज्ञाने तिष्ठन् विज्ञानमन्तरो यमयति'[५] इत्याद्याः श्रुतयो भेदे मानम् । न चात्र भेदबोधकशब्दाभावः। 'भेदव्यपदेशाच्चान्यः'[६] 'शारीरश्चोभयेऽपि हि भेदेनैनमधीते'[७] इत्यादिसूत्रैस्तच्छ्रुतीनां भेदपरतया व्याख्यातत्वात् । 'यदा पश्यत्यन्यमीशमस्य महिमानं'[८] इति 'पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनामृतत्त्वमेति' इत्यादिश्रुतिभिः भेदज्ञानस्य मोक्ष-हेतुत्वोक्तेः। 'अस्त्यन्यो भूतात्मा स वा एषोऽभिभूतः प्राकृतैर्गुणैरि-त्यथोभिभूतत्वात् संमूढः संमूढत्वादात्मस्थं प्रभुं भगवन्तं कारयितारं

१.
२. ऋ.सं. १.१६४.२०, आथ.उ. ५.१.
३. ऋ.सं. १.१६४.२०, आथ.उ. ५.१.
४. ब्र.सू.भा. १.२.२० इत्यत्रोदाहृता श्रुतिः ।
५. ब्र.सू.भा. १.२.२०. इत्यत्रोदाहृता श्रुतिः ।
६. ब्र.सू. १.१.२०
७. ब्र.सू. १.२.२०
८. आथ.उ. ५.२.

नापश्यत्' इति मैत्रायणीयश्रुत्या जीवेशभेदप्रतिपादनात् । 'स तत्र पर्येति जक्षन् क्रीडन् रममाणः'[१] 'सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता'[२] 'यदा पश्यः पश्यते रुग्मवर्णं कर्तारमीशं'[३] 'तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति'[४] इति श्रुतिभिः मोक्षेऽपि भेदप्रतिपादनात् ।।

### 'सोऽश्नुते सर्वान्' इति श्रुत्यर्थकथनम्

न च 'पुत्रेण सहागतः पिता' इत्यत्र आगमने पुत्रस्याप्रधानतयाऽन्वयवत् ब्रह्मणोऽपि सर्वकामभोगेऽप्रधानतयाऽन्वयः स्यादिति वाच्यम् । ब्रह्मणा हेतुना सह युगपत्सर्वान् कामान् प्राप्नोतीत्यर्थात् । यद्वा ब्रह्मणा चतुर्मुखेन सह तन्मुक्तिकाले मुक्तो भवतीत्यर्थात् । 'सह शाखया प्रस्तरं प्रहरति' इत्यत्र प्रस्तरेण सह प्रस्तरप्रहरणकालेऽप्रसिद्धकालांशारवां प्रहरतीति विभक्तिव्यत्ययेन सहशब्दस्य वार्तिके कालार्थकताया उक्तत्वात् ।।

### 'तयोरन्यः' इति श्रुतेः जीवेशपरत्वसमर्थनम्

ननु 'तयोरन्यः पिप्पलं स्वाद्वत्ति' इति सत्त्वं, अनश्नन्नन्योऽभिपश्यति ज्ञः । तावेतौ सत्वक्षेत्रज्ञौ तदेतत्सत्त्वं येन स्वप्नमभिपश्यति, अथ योऽयं शारीर उपद्रष्टा स क्षेत्रज्ञः' इति पैङ्गिरहस्यब्राह्मणेन बुद्धिजीवपरतयाऽयं मन्त्रो व्याख्यात इति चेन्न । सत्वशब्देन जीवस्य क्षेत्रज्ञशब्देन चेशस्योक्तेः । 'रजनीं घोरसत्वनिषेवितां महिषीं स

---

१. छा.उ.८.१२.२.
२. तैत्त.उ. २.२.
३. आथ.उ. ५.३.
४. आथ.उ. ५.३.

सत्वां' 'क्षेत्रज्ञं चापि मां विद्धि'[१] इत्यादिषु जीवेशयोस्तयोः प्रसिद्धत्वात् । धान्येन धनमितिवत् येनेत्याद्यभेदे तृतीया । शारीरे जीवे उपद्रष्टा उदासीनोऽन्तर्यामी परेशः ॥

### 'स तत्र पर्येति' इति श्रुतेः परममोक्षपरत्वसमर्थनम्

नच 'स तत्र पर्येति जक्षन् क्रीडन् रममाणः' इति श्रुत्युक्तोऽवान्तरमोक्षः । 'अस्माच्छरीरभेदात्समुत्थाय परंज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते'[२] इति स्वस्वरूपाविर्भावरूपपरममोक्षोक्तेः। 'नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्'[३] 'अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः'[४] इत्याद्याः श्रुतयः स्पष्टं भेदं वदन्ति ॥

### उदाहृतश्रुतीनां काल्पनिकभेदपरत्वानुवादकत्वनिराकरणम्

न च 'द्वौ चन्द्रौ' इत्यादिवत्कल्पितभेदेनोपपत्तिः । 'अजोऽन्यः' इत्यादेः मृषाभेदपरत्वेऽप्रामाण्यापत्तेः । एतच्छ्रुतिविरोधादेव त्वदभिमतश्रुतेरन्यपरत्वापत्तेश्च । न च प्रत्यक्षप्राप्तभेदानुवादित्वाद्भेदश्रुतिर्दुर्बला । वर्तमानमात्रग्राहिप्रत्यक्षागृहीतत्रैकालिकभेदपरत्वेन श्रुतेरननुवादकत्वात् । न चाजोऽन्य इत्यादौ त्रिकालाबाध्यत्वबोधकपदाभावः । वर्तमानादिकालोदासीनतया बोध्यमानभेदस्य श्रुतिप्रामाण्यवशात् त्रिकालाबाध्यत्वसिद्धेः । 'न त्वेवाहं जातु नासं न त्वं नेमे जनाधिपाः । न चैव न भविष्यामः सर्वे वयमतः

---

१. भग.गी. १३.३.

२. छा.उ. ८.१२.३.

३. काठ.उ. २.२.१३.

४. महा.ना.उ. १०.५

परम्।।' इति भेदव्याप्यबहुत्वस्य प्रत्यक्षायोग्यातीतादिकालसंबन्धोक्तेः। स्मृतेश्च श्रुतिव्याख्यारूपत्वात् ।।

किञ्च प्रत्यक्षस्य प्रामाण्ये तत एव भेदसिद्धिरस्तु श्रुतिर्नित्यानुवादः। अप्रामाण्ये च न स्यादेव श्रुतेरनुवादकत्वम् । न च ज्ञातज्ञापकत्वमनुवादकत्वे तन्त्रम् । नतु प्रमाणगृहीतग्राहित्वमिति वाच्यम्। अप्रमाणगृहीतमात्रग्राहित्वेन शुक्तिरूप्यबोधकवाक्यवत् श्रुतेरत्यन्ताप्रामाण्यापत्तेः । इष्टापत्तौ च तद्दृष्टान्तेन वेदमात्रस्य तत्त्वापत्तेः । अनुवादकत्वेऽपि तद्वति तत्प्रकारकत्वरूपयाथार्थ्यप्रमाण्याहानेश्च । न च शास्त्रवैय्यर्थ्यम् । यथा पिशाचभेदे प्रत्यक्षेऽपि पिशाचोऽप्रत्यक्षः तथेशभेदे प्रत्यक्षेऽपि ईशस्याप्रत्यक्षत्वेन तत्परशास्त्रस्य सार्थक्यात्।।

किञ्चौपनिषदस्य ब्रह्मणः शास्त्रातिरिक्तेनाप्रप्तेस्तद्धर्मिकस्य तत्प्रतियोगिकस्य वा भेदस्य न शास्त्रनिरपेक्षप्रत्यक्षादिना प्राप्तिः । ननु प्रतियोगिग्रहार्थं शास्त्रापेक्षत्वेऽपि स्वसमानविषयकप्रमाणपूर्वकत्वानियमेन प्रत्यक्षस्य भेदप्रमापकत्वेनानुवादकत्वोपपत्तिरिति चेन्न । स्वनिरपेक्षप्रमाणगृहीतग्राहित्वेनैव ह्यनुवादित्वम्। अन्यथा स्मृतिगृहीतार्थग्राहित्वेनानुवादकत्वापत्तेः । तथा च श्रुतिसापेक्षप्रत्यक्षगृहीतग्राहित्वेन श्रुतेरननुवादकत्वमिति ।।

।। इति भेदश्रुतेरनुवादकत्वभङ्गः ।।

## ७. अथ भेदः पारमार्थिकः

### श्रुतेः व्यावहारिकभेदपरत्वनिषेधः

नन्वनुवादकत्वाभवेऽपि व्यावहारिकभेदपरत्वेनैव श्रुत्युपपत्तिरिति चेन्न । श्रुतेरप्रामाण्यापत्तेः । न चार्थवादवाक्यवदुपपत्तिः ।

अर्थवादतात्पर्यविषयार्थस्य प्राशस्त्यादेरिव भेदवाक्यार्थस्याबाधितस्यासत्वात् । न चाभेदश्रुतिविरोधेन प्रतीयमानेऽर्थेऽप्रामाण्यमिष्टम् । अभेदश्रुतेरखण्डचिन्मात्रपरत्वेन भेदाविरोधित्वात्। न हि धर्मिमात्रबोधकं मानं तत्र धर्मवैशिष्ट्यविरोधि । न चावान्तरतात्पर्येण भेदाभावो महातात्पर्येण चाखाण्डं बाध्यतेऽवान्तरतात्पर्यमादाय विरोधोपपत्तिरिति वाच्यम् । अवान्तरतात्पर्यविषयस्य भेदाभावादेर्निषेधकाभावेन तात्त्विकत्वापत्तेः । महातात्पर्यजन्यबोधस्य सर्वाविरोधित्वात् । अवान्तरतात्पर्यजन्यबोधस्य व्याघातेन स्वविहतानिषेधत्वात् । न च भेदाद्यभावो ब्रह्मैव तज्ज्ञानस्य भेदाद्यविरोधित्वात् ।।

किञ्च–

'इदं ज्ञानामुपाश्रित्य मम साधार्म्यमागताः ।
सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च ।।'[१]

इत्यादिस्मृतौ सर्गाद्यभावोक्तेः ।

'न तत्र माया किमुतापरे हरेरनुव्रता यत्र सुरासुरार्चिताः ।
श्यामावदाताः शतपत्रलोचनाः पिशङ्गवस्त्रा सुरुचः सपेशसः ।।'[२]

इति स्मृतौ मायानिषेधाच्च । 'यो वेद निहितं गुहायां'[३] 'सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता'[४] इत्यत्र सर्वकामावाप्तेः शुद्धब्रह्मज्ञानफलत्वोक्तेश्च । त्वया विशुद्धब्रह्मविषयत्वेन स्वीकृतायाः

१. भग.गी. १४.२
२. भाग.पु. २.९.१०
३. तैत्त.उ. २.२
४. तैत्त.उ. २.२

भूमविद्यायाः फलोक्त्यवसरे 'तस्य सर्वेषु लोकेषु कामचारो भवति पञ्चधा सप्तधा'[१] इति भेदोक्तेः । 'परंज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते'[२] 'स तत्र पर्येति जक्षन् क्रीडन् रममाणः'[३] इत्यादौ स्वरूपाभिव्यक्त्युक्तेश्च । तथा 'विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति'[४] इत्यत्र कर्मक्षयोक्तेश्च । त्वन्मतेऽपि भेदभोगादिपरेषु फलाध्यायान्तपादस्थेषु 'जगद्व्यापारवर्जम्'[५] 'संकल्पादेव तच्छ्रुतेः'[६] 'भोगमात्रसाम्यलिङ्गाच्च'[७] इत्यादिसूत्रेषु प्रक्रान्तशुद्धविद्यायाः फलस्यैव वक्तव्यत्वाच्च । 'पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनामृतत्त्वमेति' इति भेदज्ञानान्मोक्षोक्तेश्च ।।

।। इति भेदः पारमार्थिकः ।।

## ८. अथ श्रुतेः पारमार्थिकभेदपरत्वम्

ननु सगुणोपासनया ब्रह्मलोकं गतस्यापि 'न च पुनरावर्तते'[८] इत्यादिश्रुत्या दैनन्दिनसर्गाद्यसंबन्धो बोध्यते इति चेन्न । संकोचे मानाभावात् । न च 'न तत्र माया'[९] इत्यनेन स्पर्धादिनिषेधः । मायाशब्दस्य स्पर्धायां लाक्षणिकत्वे मानाभावात् । न च 'यो

१. छा.उ. ७.३.९.
२. छा.उ. ८.३.४.
३. छा.उ. ८.१२.३.
४. आथ.उ. ५.३.
५. ब्र.सू. ४.४.१७
६. ब्र.सू. ४.४.८
७. ब्र.सू. ४.४.२२.
८. छा.उ. ८.६.१५.
९. भाग.पु. २.९.१०

वेद'[१] इति श्रुतिः सर्ववैषयिकसुखानां 'एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीन्ति'[२] इति श्रुत्या ब्रह्मानन्देऽन्तर्भावोक्तेस्तदभिप्रायेति न तद्बलात् नानाकामावाप्तेः शुद्धज्ञानफलत्वमिति वाच्यम् । अशब्दार्थत्वात् । वैषयिकाणां मृषाभूतानां ब्रह्मानन्देऽन्तर्भावासंभवाच्च । न च तस्य सर्वेष्वित्यादेर्निर्गुणविद्यास्तावकत्वेनाप्युपपत्तिः। निर्गुणविद्याया एवालीकत्वात् । न च परमसाम्यैक्यमेव । अपदार्थत्वात् स्वरूपभिन्नैक्यस्य तत्प्राप्तेश्च । तवालीकत्वाच्च । न च जुष्टमित्यत्रान्यपदेन देहादिभिन्नमिति न तेन जीवेशभेदसिद्धिः । 'योऽहं बाल्ये पितॄनन्वभूवं सोऽहं नप्तॄननुभवामि' इति देहात्मभेदस्य प्रत्यक्षत्वेन श्रुतेर्वैय्यर्थ्यापत्तेः । ईशपदास्वारस्याच्च ।।

।। इति श्रुतेः पारमार्थिकभेदपरत्वम् ।।

## ९. अथ भेदे षड्विधतात्पर्यलिङ्गम्

षड्विधतात्पर्यलिङ्गोपेतश्रुतिगम्यो भेदः परमार्थसन्नेव । तथा हि– अथर्वणे 'द्वा सुपर्णा'[३] इत्युपक्रमः 'परमं साम्यमुपैति'[४] इत्युपसंहारः। 'तयोरन्यः'[५] 'अनश्नन्नन्यः'[६] 'अन्यमीशं'[७] इत्यभ्यासः। शास्त्रैक-गम्येश्वरप्रतियोगिकस्य कालत्रयाबाध्यभेदस्य शास्त्रं विना

१. तैत्त.उ. २.२
२. बृ.उ. ६.३.३२.
३. आथ.उ. ५.१.
४. आथ.उ. ५.३.
५. आथ.उ. ५.१.
६. आथ.उ. ५.१.
७. आथ.उ. ५.२.

अप्राप्तेरपूर्वता । 'पुण्यपापे विधूय'[१] इति फलम् । 'अस्य महिमानमेति'[२] इति स्तुतिरूपोऽर्थवादः । 'अन्योऽनश्नन्' इत्युपपत्तिः ।।

### उपक्रमादीनां भेदपरत्वसमर्थनम्

अत्र 'भेदव्यपदेशात्' 'पृथगुपदेशात्' इत्यादिसूत्रैर्व्याख्यातो द्विशब्दो भेदपरस्तदाक्षेपको वा । द्वित्वसंख्यैवैक्यविरोधिनीति वा भवत्युपक्रमो भेदपरः । तद्भिन्नत्वे सति तद्भूयोधर्मवत्वं तत्सादृश्यम्। 'नायं सः किन्तु तत्सदृशः' 'नायं तत्सदृशः किन्तु स एव' इति सादृश्यैक्ययोरेकतरनिषेधेनान्यतरविधानात् । 'गगनं गगनाकारं' इत्यादि तु तत्सदृशवस्त्वन्तरनिषेधपरं गगनाद्येकदेशस्य तदेकदेशसादृश्यपरं वेत्युपसंहारोऽपि भेदपरः । अन्यमीशमित्यत्रेशतोऽन्यत्वं प्रति पश्यतीति प्रकृतो जीव एव प्रतियोगितया संबध्यत इत्यभ्यासोऽपि भेदपरः ।।

### मुण्डकस्याभेदपरत्वनिराकरणम्

नन्वाथर्वणे प्रथममुण्डके 'कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति'[३] इति शौनकप्रश्नानन्तरं 'द्वे विद्ये वेदितव्ये'[४] इति विद्याद्वयमवतार्यापरामुक्त्वा 'अथ परा यया तदक्षरमधिगम्यते'[५] 'यत्तदद्रेश्यमग्राह्यमगोत्रं'[६] इत्यादिपरविद्याविषयाक्षरप्रश्नोत्तरेण

१. आथ.उ. ५.३.
२. आथ.उ. ५.२.
३. आथ.उ.१.३.
४. आथ.उ. १.४.
५. आथ.उ. १.४.
६. आथ.उ. १-६.

अभेदस्यैवोपक्रम इति चेन्न । इन्द्राद्यवान्तरार्थपरत्वे ऋगाद्या एवापरविद्या उत्तमाक्षरपरत्वे तु ता एव परा इत्युक्तस्य सिद्धये तदर्थस्याक्षरस्य सर्वोत्तमत्वं प्रतिपादयितुं सर्वकारणत्वं ह्यक्षरस्योक्तं न त्वभेदः । साकल्येनादृश्यत्वादिकं 'अदृश्यत्वादिगुणको धर्मोक्तेः'[१] इति सूत्रात् ।।

न च द्वितीयमुंडके 'एष एवेदं विश्वं ब्रह्मैवेदं विश्वं वरिष्ठं'[२] इति मध्येऽभेदोक्तिः । 'सर्वं समाप्नोषि ततोऽसि सर्वः'[३] इत्यनुसारात् पुरुषस्य विश्वव्यापकत्वोक्तेः, सत्ये ब्रह्मणि यथाश्रुतानृतविश्वाभेदस्यासंभवात् । त्वयाऽनङ्गीकाराच्च । न च तृतीयमुण्डके 'ते च परेऽव्यये सर्व एकीभवन्ति'[४] 'स यो ह वैतत्परमं ब्रह्म वेद ब्रह्मैव भवति'[५] इत्यैक्यरूपफलेनोपसंहार इति वाच्यम् । अभूततद्भावार्थकच्विप्रत्ययेन त्वत्प्रतिकूलस्य प्रगविद्यमानस्य निर्मुक्तत्वादिना 'सायं गोष्टे गाव एकीभवन्ति' इत्यादिवदेकस्थानस्थत्वादिना कीटभृङ्गन्यायेन वा जीवेशभेदस्योक्तेः । अभेदे 'परमं ब्रह्म' इत्यसंगतेः ।।

### अन्तर्यामिब्राह्मणस्य भेदपरत्वे षड्विधतात्पर्यप्रदर्शनम्

किञ्चान्तर्यामिब्राह्मणेऽपि षड्विधतात्पर्यलिङ्गोपेतं वाक्यं भेदे प्रमाणम् । तथा हि– 'वेत्थ नु त्वं काप्यतमन्तर्यामिणं'[६]

---

१. ब्र.सू. १.२.२०
२. आथ.उ. २.१.१४
३. भग.गी. ११.४०
४. आथ.उ. ६.७.
५. आथ.उ. ६.९.
६. बृ.उ. ५.७.१.

इत्युपक्रमः। 'एष आत्मा अन्तर्यामि'[१] इत्युपसंहारः । 'एष त आत्मा' इत्याद्येकविंशतिकृत्वोभ्यासः । अन्तर्यामित्वस्याप्राप्ततयाऽपूर्वता । 'स वै ब्रह्मवित्'[२] इत्यादिफलम् । 'तच्चेत् त्वं याज्ञवल्क्य सूत्रमविद्वांस्तवान्तर्यामिणं ब्रह्मगवीरुदजसे मूर्धा ते विपतिष्यति'[३] इति निन्दारूपोऽर्थवादः । 'यस्य पृथिवी शरीरं यं पृथिवी न वेद'[४] इत्याद्युपपत्तिः ।।

### मैत्रेयीब्राह्मणस्याभेदपरत्वनिराकरणम्

ननु 'अनेन ह्येतत्सर्वं वेद'[५] इत्येकविज्ञानेन सर्वविज्ञानप्रतिज्ञापूर्वकं 'ब्रह्म वा इदमग्र आसीत् तदात्मानमेवावेत् अहं ब्रह्मास्मि इति । तस्मात्सर्वमभवत्'[६] इत्यभेदेनोपक्रम्य षष्ठाध्यायान्ते मैत्रेयीब्रह्मणे 'यत्र त्वस्य सर्वमात्मैवाभूत् तत्केन कं पश्येत्'[७] इत्याद्यभेदेनैवोपसंहार इति चेन्न । इन्द्रादिदेवानां ज्ञानाद्यत् फलं ब्रह्मज्ञानात् तत्तदधिकं च फलं भवतीत्येकविज्ञानश्रुत्यर्थात् । यत्र सुषुप्तौ ज्ञानज्ञेयादिकमात्मैव स्वयमेवाभूत् तत्केन साधनेन कं पश्येत् स्वेनैव स्वयमेव पश्येदित्यर्थः। तदानीं ज्ञानकारणचक्षुराद्यभावे यत्रेत्यादिश्रुतेस्तात्पर्यात्। अन्यथा 'शारीरश्चोभयेऽपि हि भेदेनैनमधीयते'[८] इत्यन्तर्यामिप्रकरणस्य भेदपरत्वं बोधयता सूत्रेण विरोधः । न च व्यावहारिकभेदपरं

१. बृ.उ. ५.७.३.
२. बृ.उ. ५.७.१.
३. बृ.उ. ५.७.१.
४. बृ.उ. ५.७.३
५. बृ.उ. ४.४.६
६. बृ.उ. ३.५.४.
७. बृ.उ. ६.५.१४
८. ब्र.सू. १.२.२०

सूत्रम्। एवं हि बौद्धोऽपि वेदव्याख्याता तच्छास्त्रं च वेदव्याख्यानं स्यात् । सोऽपि ब्रह्मसूत्राणि व्याख्यायान्ते स मिथ्यैवेषोऽर्थः वास्तवं तु शून्यमेव तत्त्वमिति भावानिव वदेत् । असद्वेत्यादिवाक्यं तस्य तात्त्विकं स्यात् ॥

॥ इति भेदे षड्विधतात्पर्यलिङ्गम् ॥

## १०. अथ पराभिमतैक्यभङ्गः

### ऐक्यस्य स्वरूपभिन्नाभिन्नत्वपक्षयोः दोषकथनम्

किञ्च ऐक्यं स्वरूपभिन्नं चेदद्वैतहानिः । मृषात्वे भेदस्य सत्यत्वं स्यात् । तत्त्वमसीत्यादेः सखण्डार्थकत्वं च स्यात् । स्वरूपात्मकत्वे शास्त्रवैय्यर्थ्यम् । अज्ञानाद्यधिष्ठानतया स्वरूपस्य सदाभावात् । ऐक्याभिन्ननिर्विशेषस्वरूपस्यावरणे जगदान्ध्यापत्तेः ॥

### अभेदवृत्त्यभेदत्वादिधर्माणां सत्वासत्वविकल्पेन दोषकथनम्

किञ्च अभेदे अभेदत्वपरमार्थिकत्वासद्वैलक्षण्यादीनि तत्त्वतः सन्ति न वा । आद्ये सद्वितीयत्वापत्तिः । द्वितीये भेदत्वहानिः । न चात्मस्वरूपाण्येव तानीति वाच्यम् । आत्मस्वरूपस्य सर्वैः स्वीकृतत्वेन त्वद्रीत्या नित्यसिद्धत्वेन च त्वच्छास्त्राविषयत्वात् । न च जीवावृत्तिधर्मानधिकरणत्वं तदिति वाच्यम् । जीवावृत्तिधर्मानधिकरणत्वस्य शून्येऽपि सत्वेन तस्यापि जीवाभिन्नत्वापत्तेः । न च शून्यं निःस्वरूपमात्मा तु सस्वरूप इति वाच्यम् । स्वरूपत्वादिधर्महीनस्यैक्यस्य सस्वरूपत्ववच्छून्यस्यापि सस्वरूपत्वसौलभ्यात् ॥

विशेषनिषेधस्य शेषाभ्यनुज्ञाफलकत्वं इति नियममवलम्ब्य दोषकथनम्

किञ्च तदवृत्तिधर्मनिषेधेन तद्वृत्तिधर्मविधानमेव । विशेषनिषेधस्य शेषाभ्यनुज्ञाफलकत्वात् । ननु विशेषनिषेधेऽपि न शेषाभ्यनुज्ञा । वायौ न नीलं रूपमित्यस्य रक्तं प्रत्यनभ्यनुज्ञात्वादिति चेन्न । विशेषनिषेधे शेषाभ्यनुज्ञा अन्यप्रकारासंभवे तस्य तथात्वनियमात्। वायौ नीरूपत्वरूपतृतीयप्रकारस्य सत्वात् । न हि ब्रह्मणि धर्मबोधकमानवद्वायौ रूपबोधकमानमस्ति ।।

वस्तुतस्तु जीवावृत्तिधर्मानधिकरणत्वं सर्वज्ञत्वादिविशिष्टे त्वदभिमते निर्धर्मके वा । नाद्यः । व्याघातात् । अल्पज्ञत्वेनानुभूतो यो जीवस्तदवृत्तिसर्वज्ञत्वादेस्तत्र सत्वात् । नान्त्यः । जीवभिन्नेऽपि निर्धर्मकत्वादेव तदवृत्तिधर्मानधिकरणत्वस्य ब्रह्मभिन्नस्योपलक्षणतया बोधे श्रुतेः सखण्डार्थकत्वापत्तेः । अबोधे ज्ञातमात्रज्ञापकत्वेन वैय्यर्थ्यात् । नित्यसिद्धस्य निर्विशेषस्य धर्मान्तरोत्थापनेन व्यावर्त्यत्वरूपोपलक्षितत्वायोगाच्च ।।

।। इति पराभिमतैक्यभङ्गः ।।

## ११. अथ ऐक्ये प्रमाणभङ्गः

विरुद्धाकारस्य अविवक्षया श्रुतिविरोधपरिहारक्रमखण्डनम्

किञ्च सार्वज्ञ्यासर्वज्ञ्यादिविशिष्टयोरैक्यमयोग्यतापराहतम् । ननु विरुद्धाकारस्याविवक्षया ब्रह्मानुभवाविषयत्वरूपस्त्यागो न त्वपलापः। स च चरमसाक्षात्कारसाध्यः । तथा च तत्तेदन्ते इवानपेते अपि सार्वज्ञ्यासर्वज्ञ्ये नाश्रयाभेदविरुद्धे इति चेन्न । तत्तेदन्तयोः कालभेदेनैकत्र सम्बन्धसंभवेन दृष्टान्तासिद्धेः । न हि तत्तेदन्ते

एकत्रैककालावच्छेदेन प्रतीयेते येन विरोधः स्यात् । न च सार्वज्ञ्यासर्वाज्ञादिकं कालभेदेनैकत्र वर्तते, येन 'सोऽयं देवदत्तः' इति दृष्टान्तः स्यात् । तत्तेदन्तयोः प्रत्यभिज्ञायामभाने तात्कालिकै-तत्कालिकपिण्डाभेदासिद्ध्यापत्त्या पिण्डस्य क्षणिकत्वापत्तेः ॥

'सोऽयं' इति प्रत्यभिज्ञाया अनुपपत्तिपरिहारः

एनेन तद्देशकालविशिष्टे एतद्देशकालवैशिष्ट्यं एतद्देशकालविशिष्टे तद्देशकालवैशिष्ट्यं वा विशिष्टयोरैक्यं वा सोऽयमिति वाक्येन प्रतिपाद्यम् । नाद्यः । तत्कालादेरिदानीं सत्वापत्तेः । न द्वितीयः । एतत्कालादेस्तदा सत्वापत्तेः । न तृतीयः । बाधादिति निरस्तम् ॥

पक्षत्रयस्यापि निर्दुष्टत्वात् । तथा हि– यदन्विततया ज्ञात एवेतरान्वयधीस्तत्र विशेषणम् । इदन्तान्विततया ज्ञात एव पिण्डे तत्तान्वयधीस्तत्तान्विततया ज्ञात एवेदन्तान्वयधीः सोऽयमित्येकस्मिन् पिण्डे भवतीति तत्तादिकं विशेषणम् । अत एव धीकाले विद्यमानस्यापि धर्मान्तरमुत्थाप्य व्यावर्तकस्य 'काकवद्गृहं' इत्यत्र काकस्य न विशेषणत्वम् । 'दण्ड्ययमासीत्' इत्यत्र दण्डस्य विशेषणत्वम् । काकोत्थापितोत्तृणत्वान्विततया ज्ञाते गृहे देवदत्तीयत्वान्वयधीर्न तु काकान्विततया ॥

'सोऽयं' इत्यादिप्रत्यभिज्ञायाः अखण्डार्थविषयकत्वनिरासः

किञ्च सोऽयमिति प्रत्यभिज्ञा नाखण्डार्थविषया तत्र प्रत्यक्षे शब्दवृत्तेर्लक्षणाया अभावात् । तत्तेदन्तोल्लेखित्वेन तत्र निष्प्रकार-कत्वस्यानुभवपराहतत्वात् । तदनुल्लेखे त्वभिज्ञातो वैलक्षण्यानुपपत्तेः। शाब्दप्रत्यभिज्ञापि नाखण्डार्था । स्वप्रत्यभिज्ञावगतस्यैव परं प्रति बोधनात् । न च प्रत्यक्षस्य लक्षणानपेक्षत्वेऽपि बाधादेव

स्वरूपमात्रविषयकत्वमिति वाच्यम् । विद्यमानतयेदन्ताया अतीततया तत्ताया अवगाहिनः प्रत्यक्षस्य विरोधलेशाभावात् ।।

किञ्च स्वप्रकाशस्वस्वरूपाभिन्नाभेदस्य नित्यसिद्धत्वेनोपदेशवैय्यर्थ्यात् । तदस्फुरणे बुभुत्सानुपपत्तेः भ्रमकालज्ञाताधिकाप्रतीतेर्महावाक्याद्भेदभ्रमनिवृत्यनापत्तेः । न च तदादिपदद्वयजन्यसार्वज्ञ्याद्युपलक्षितस्वरूपज्ञानमज्ञाननिवर्तकमिति वाच्यम् । स्वरूपभिन्नसार्वज्ञ्यादेरुपलक्षणतया भाने श्रुतेरखण्डार्थकत्वहानेरभाने भ्रमनिवर्तकत्वाभावात् ।।

### तत्त्वमसि इति वाक्यस्य धर्मिद्वयपरामर्शित्वेन भ्रमनिवर्तकत्वात् प्रामाण्यमिति अद्वैतसिद्ध्युक्तपक्षखण्डनम्

यत्तु तत्त्वमसीति वाक्यस्य सत्यादिवाक्यात् तत्पदाच्च प्रमेयावैलक्षण्येऽपि धर्मिद्वयपरामर्शित्वेन भ्रमनिवर्तकत्वात् प्रामाण्यमिति । तत्तुच्छम् । प्रमेयावैलक्षण्ये अज्ञातज्ञापकत्वरूपप्रामाण्यासंभवात् । धर्मद्वयावगाहित्वेन प्रमेयावैलक्षण्यस्य श्रुतेरखण्डार्थकत्वस्य चासिद्ध्यापत्तेः ।।

### उपजीव्यस्वरूपप्रदर्शनपूर्वमैक्यश्रुतेरुपजीव्यप्रत्यक्षविरोधाभिधानम्

किञ्च श्रुत्या प्रत्यक्षसिद्धजीवमनूद्य ब्रह्मत्वं बोध्यम् । श्रुतिसिद्धं ब्रह्मानूद्य तस्य जीवत्वं वा, उभयानुवादेनाभेदो वा विधेयः । उपजीव्यप्रत्यक्षादिविरोधात्पक्षत्रयस्यासंभवात् । न च प्रतियोग्यर्पकतयोपजीव्यमिदं रूप्यमिति नेदं रूप्यमित्यस्य बाधकं स्यादिति वाच्यम् । यत्प्रामाण्यं यत्प्रामाण्याधीनं तद्धि तस्योपजीव्यम् । न हि नेदमित्यस्य प्रामाण्यमिदं रूप्यमिति प्रामाण्याधीनम् ।

ब्रह्मादिरूपधर्मिज्ञानप्रामाण्याधीनमैक्यधीप्रामाण्यमिति भवति तदुपजीव्यम् ।।

ननु सार्वज्ञ्यादिविशिष्टं न तद्धर्मि किन्तु ब्रह्मस्वरूपमात्रम् । विशिष्टधर्मिज्ञानप्रामाण्यमैक्यज्ञानप्रामाण्ये नापेक्ष्यते । किन्तु स्वरूपज्ञानप्रामाण्यमात्रम् । अन्यथेदं रजतमित्यस्यापि धर्मिज्ञानत्वेनोपजीव्यतया निषेधज्ञानप्रामाण्ये रूप्यत्वविशिष्टेदंज्ञानप्रामाण्यमुपजीव्यं स्यादिति चेन्न । इदंत्वविशिष्टस्यैव धर्मित्वेन रजतत्ववैशिष्ट्यस्य धर्मित्वाप्रयोजकत्वात् ।।

किञ्च असाधारणसार्वज्ञ्यादिधर्मावच्छेदेन ब्रह्मणोऽनुद्देश्यत्वे साधारणधर्मेण स्वरूपेण वा उद्देश्यता वाच्या । तत्राद्ये इष्टापत्तिः । चित्वादिसाधारणधर्मेणैक्यस्यास्माभिरप्यङ्गीकारात् । द्वितीये जीवस्य ब्रह्मैक्यासिद्धिः । असाधारणब्रह्मस्वरूपाद्देशस्यासाधारणधर्मं विनाऽसंभवात् । न च सार्वज्ञ्यादिविशिष्टस्योद्देश्यत्वेऽपि नोपजीव्यविरोधो विशिष्टयोरैक्यानङ्गीकारात् । तत्त्वंपदलक्षितयोरैक्याङ्गीकाच्चेति वाच्यम् । उद्देश्यतावच्छेदकसार्वज्ञ्याद्यवच्छेदेन विधेयस्याभेदस्यासिद्धौ वाक्यवैय्यर्थ्यापत्तेः । न च चित्वेनैक्यस्येष्टत्वेऽपि तदाश्रयैक्यं न त्वदिष्टम् । आश्रयाणां सर्वज्ञत्वासर्वज्ञत्वतत्तद्व्यक्तित्वादिना भेदेऽपि चित्वेनाभेदेन वाक्यस्योपपत्त्याऽऽश्रयाणां तद्व्यक्तित्वादिनाऽभेदबोधकत्वात् । न हि प्रमेयाभिन्नं प्रमेयमभिधेयं चेत्यत्र सकलव्यक्त(क्ति)भेदः प्रतीयते ।।

।। इति ऐक्ये प्रमाणभङ्गः ।।

## १२. अथ आगमस्यैक्यपरत्वभङ्गः

### तत्त्वमसीत्यत्र विभक्तौ लक्षणायाः लघीयस्त्वप्रदर्शनम्

तत्त्वमसीत्यत्र पदद्वये प्रातिपदिकलक्षणापेक्षया पदैकदेशविभक्तौ लक्षणा लघीयसी । अस्तु वा तच्छब्दात् परत्र तृतीयादिविभक्तिः । 'सुपां सुलुक्...'[१] इत्यादिना प्रथमैकवचनादेशो वा लुग्वा । तथा च तेन त्वं तिष्ठसीति वा तत्सञ्जात इति वा तस्य त्वमिति वा तस्मिंस्त्वमिति वाऽर्थः । 'अनेन जीवेनात्मनाऽनुप्रभूतः पेपीयमानो मोदमानस्तिष्ठति'[२] 'सन्मूलाः सोम्येमाः सर्वाः प्रजाः'[३] 'ऐतदात्म्यमिदं सर्वं'[४] 'सदायतनाः सत्प्रतिष्ठाः'[५] इति वाक्यशेषात् ।

न च सर्वज्ञत्वादिविशेषणस्य त्यागेऽपि विशेष्यांशस्यात्यागात् जहदजहल्लक्षणा जहत्स्वार्थविभक्तिलक्षणापेक्षया ज्यायसीति वाच्यम् । जहदजहल्लक्षणायां हि वाच्यान्तर्गतत्वेन प्राग्धीस्थस्य बाधकात् त्यक्तस्य पुनः स्वीकारः । जहल्लक्षणायामधीस्थस्यात्यक्तस्यैव स्वीकारः । त्यक्तस्वीकाराद्वरमधीस्थस्वीकारः ॥

### अभेदे लक्षणाङ्गीकारे सखण्डार्थत्वापादनम्

किञ्च शाक्तबोधाविषयीकृतस्याभेदादेर्लाक्षणिकबोधे भानाङ्गीकारे श्रुतेः सखण्डार्थकत्वापत्तेः । तदनङ्गीकारे लक्षणावैय्यर्थ्यात् ॥

---

१. पा.सू. ७.१.३९
२. छा.उ. ६.११.१.
३. छा.उ. ६.८.६
४. छा.उ. ६.८.७.
५. छा.उ. ६.८.६.

### तत्त्वमसीत्यादौ विशेषणबाधे विशेष्यमात्रपर्यवसानमिति वदतां सिद्धिकाराणां मतखण्डनम्

यत्तु तत्त्वमसीत्यादौ लक्षणां विनैव वाक्यस्याखण्डव्यक्तिबोधकत्वं युक्तम् । विशिष्टव्यक्तिबोधकशब्दस्य विशेषणबाधे विशेष्यमात्रपर्यवसानस्य लक्षणां विनैव व्युत्पन्नत्वादिति । तत्तुच्छम् । प्रकृते विशेषणबाधकस्यालीकत्वात् । सर्वज्ञत्वाद्यनन्तगुणविशिष्ट-वाचकत त्पदादेर्विशेषणांशवाचकत्वे बाधकं हि भेदनिषेधकं गुणनिषेधकं द्वितीयमात्रनिषेधकं वा वाक्यं स्यात् । नैतद्युक्तम् । तेषामभेदादि-विशिष्टमिथ्यार्थपरत्वे (ऽ)प्रमाणत्वात् । लक्षणयाऽखण्ड-व्यक्तिपरत्वेऽबाधकत्वात् । न हि विशेषमात्रबोधकं विशिष्टबोधकं विरुणद्धि । अखण्डपरत्वे वैय्यर्थ्यस्यासकृदावेदितत्वाच्च ।।

### तत्त्वंपदयोरभेदबोधकत्वेऽभेदासिद्ध्यापादनम्

किञ्च तत्त्वंपदाभ्यामखण्डव्यक्तिद्वयबोधेऽपि तदभेदासिद्ध्या त्वदिष्टासिद्धेः । न च समानाधिकरणपदाभ्यामभेदसिद्धिः । एकधर्मिनिष्ठानेकप्रकाराबोधने पदानां सामानाधिकरण्यायोगात् ।।

### दृष्टान्तानुसारेण अतत्त्वमसीति पदच्छेदं विधाय नवानां दृष्टान्तवाक्यानां भेदपरत्वसमर्थनम्

यद्वा शब्दो नित्यः शब्दत्वात् घटवदित्यत्र यथा दृष्टान्तानुसारादनित्य इति पदच्छेदस्तथा भेदबोधकनवदृष्टान्तानुसारादतत्त्वमसीति पदच्छेदः। निर्मुक्तत्वपूर्णज्ञानानन्दत्वादिना नञा सादृश्यबोधनात् । तथा हि– यथा परिभ्रमणेन श्रान्तः सूत्रबद्धः पक्षी शङ्कुमेवाश्रयति। तथा जागरादौ परिभ्रमणेन श्रान्तो जीवः सुषुप्तौ परे संश्रयतीत्याह– 'यथा शकुनिः सूत्रेण प्रबद्धः' इत्यादिना ।।१।।

ननु मत्तोऽन्यश्चेतनश्चेन्मया ज्ञायेत? तत्राह– यथा मधुकरैः सङ्गृहीता रसाः 'अयमाम्रस्य' 'अहं पनसस्य' इति स्वं भेदं न जानन्ति । तथा जीवे विद्यामानोऽप्यविवेकिभिर्न स्वभिन्नतया ज्ञायते परेश इति 'यथा सोम्य मधुकृतः' इत्यादिना ।।२।।

ननु रसैरचेतनैर्विद्यमानो भेदो मा ज्ञायि । मया चेतनेन कुतो न ज्ञायते तत्राह– यथा चेतनाभिरपि नदीभिः समुद्रे मिलिताभिः 'इयं गङ्गाऽहं यमुना' इति स्वभेदो न ज्ञायते तथा त्वयि स्थित ईशस्त्वया न ज्ञायत इति 'इमाः सोम्य' इत्यादिना ।।३।।

नन्वस्तु जीवे ईशो जीवस्य तदधीनत्वं कुतस्तत्राह– यथा वृक्षस्य विद्याततिनि[1] विद्यमानेऽपीशानुग्रहात्सुखमवस्थानं तदभावे च विद्यातेकाभावेऽपि[2] शुष्कता तथा जीवस्य मानुषादिदेहेऽपीशाधीनत्वमिति 'यथा सोम्य महतो वृक्षस्य' इत्यादिना ।।४।।

ननु सूक्ष्ममपि स्वस्वरूपं ज्ञायते तथेशोऽस्ति चेज्ज्ञायेतैव । तत्राह– यथा वटबीजे महान्वटो यच्छक्त्या सन्नपि नोपलभ्यते । एवं जीवान्तर्गतो हरिर्न दृश्यत इति 'न्यग्रोधफलं' इत्यादिना ।।५।।

ननु तद्धर्मे गृह्यमाणेऽपि स न गृह्यत इति कथं जानीयाम् । तत्राह– यथा जलप्रक्षिप्तलवणधर्मे क्षारत्वे गृह्यमाणे लवणं न गृह्यते तथा वटावस्थानहेतुसामर्थ्ये गृह्यमाणेऽपि स न गृह्यत इति 'लवणमुदकेऽवधाय' इत्यादिना ।।६।।

ननु तर्हीशस्याज्ञेयत्वात्तज्ज्ञानसाधने वैय्यर्थ्यम् । तत्राह– यथा चोरैः कश्चनपुरुषो बद्धाक्षो देशान्तरे नीत्वा मुक्तः पृष्ट्वा पृष्ट्वा

१. 'विघातिनि' इति स्यादिति भाति ।

२. 'विघातकाभावेऽपि' इति स्यादिति भाति ।

स्वदेशमायाति तथा दुर्ज्ञेयोऽपीशो गुरूपदेशादिना ज्ञायत इति 'यथा सोम्य पुरुषं' इत्यादिना ।।७।।

ननु वृक्षदेहे जीवस्य पराधीनत्वमुक्तं मानुषदेहे कथं तज्जानीयाम्। तत्राह– रोगी ग्रस्तव्यापारः पार्श्वस्थान्न वेद तथा सुषुप्तौ संपन्नो जीवस्तं न वेदेति 'पुरुषं सोम्योपतापिनं' इत्यादिना ।।८।।

ननु यो मत्तोऽन्य ईश इति जानाति यश्चाहमेव ब्रह्मेति जानाति तयोः कीदृशं फलम् । तत्राह– यथा कश्चन पुरुषो राजभटैरानीतश्चोरोऽयमिति यदा स चोरस्तदा दण्ड्यो यदा न चोरस्तदा न, तथा योऽहं ब्रह्मेति ज्ञानी परकीयब्रह्मत्वापहारकत्वात् दण्ड्यः, मद्भिन्नं ब्रह्मेति जानन्न दण्ड्य इति 'पुरुषं' इत्यादिना ।।९।।

### 'अहं ब्रह्मास्मि' इति वाक्यस्याभेदपरत्वनिराकरणम्

ननु 'ब्रह्म वा इदमग्र आसीत्तदात्मानमेवावेत् अहं ब्रह्मास्मीति'[१] वाक्यमभेदपरमति चेन्न । अहमर्थस्यानात्मतया त्वदङ्गीकृतत्वेन हि यथाश्रुताभेदो ब्रह्मणि बाधितः । जीवस्यापि बृहद्गुणकत्वेन कीटस्य भृङ्गाभेदवत् ब्रह्माभेदोपपत्तेः। 'द्वे ब्रह्मणी वेदितव्ये[२]' इति श्रुतेः 'यो यो देवानां प्रत्यबुध्यत स एव तदभवत्तथर्षीणां तथा मनुष्याणां'[३] इत्युक्ततद्भवनमपि कीटभृङ्गन्यायेनोपपद्यते । 'अहं हरिः सर्वमिदं जनार्दनः' इति स्मृतेर्मयि हरिः सर्वस्मिन् जनार्दन इत्यर्थः । त्वदीयपदद्वयलक्षणापेक्षया विभक्तिलक्षणाया लघुत्वात् । 'योऽन्यां

---

१. बृ.उ. ३.५.४.

२. गी.ता. २.१९ इत्यत्रोदाहृतवचनम्

३. बृ.उ. ३.५.४.

देवतामुपास्ते अन्योऽसावन्योऽहमस्मीति न स वेद यथा पशुः'[१] इत्यस्य यो नारायणान्यां देवतामुपास्ते स देवानां पशुः जीविका, उपासनमाह– अन्योऽसावन्योऽस्मीत्यर्थं । हरिभक्तस्तु न तथा ।

'देवर्षिभूताप्तनृणां पितॄणां न किंकरो नायमृणी च राजन् ।
सर्वात्मना यः शरणं शरण्यं गतो मुकुन्दं परिहृत्य कृत्यम्'[२] ॥

इति स्मृतेः । 'स यो ह वै तत्परं ब्रह्म वेद ब्रह्मैव भवति'[३] इत्यत्र द्वितीयो ब्रह्मशब्दो जीवपरः । तस्य जातिजीवकमलासनाद्यनेकार्थत्वात् । 'द्वे ब्रह्मणी' इत्यादौ जीवे ब्रह्मशब्दयोगाच्च । तथा च यः परमं ब्रह्म वेद स जीव एव भवति नतु परमं ब्रह्मेत्यर्थः। अत एवाद्यब्रह्मशब्दः परमत्वेन विशेषितः । न च तादृशजीवस्वरूपं प्रागेव सिद्धम् । ब्रह्मैव भवतीत्यस्याविर्भूतबृंहितत्वरूपब्रह्मत्वाक्रान्तो भवतीत्यर्थात् । कीटभृङ्गन्यायात् प्रथमब्रह्मपदस्य जीवभिन्नेशपरत्वाभावे कर्तृकर्मभावानुपपत्तेः ॥

'परेऽव्यये सर्व एकीभवन्ति' इति श्रुतेरभेदपरत्वनिराकरणम्

'परेऽव्यये सर्व एकीभवन्ति'[४] इत्यस्य गोष्ठे गाव एकीभन्ति सर्वे नृपा एकीभवन्तीत्यादिवत् स्थानैक्यमत्यैक्यादिपरत्वम् । अन्यथैक्यस्य ब्रह्मरूपस्य प्रागेव सिद्धतयाऽभूततद्भाववर्थकच्विप्रत्यानुपपत्तेः । न च स्वगृहनिक्षिप्ताज्ञातनिधिवत् सतोऽप्यावृतत्वेनाभूतसत्तया च्विप्रत्ययोपपत्तिरिति वाच्यम् । सदाभासमाननिर्विशेषस्वरूपाभिन्नस्यावृतत्वासंभवात् ॥

१. बृ.उ. ३.५.४
२. भाग.पु. ११.५.४१
३. आथ.उ. ६.९.
४. आथ.उ. ६.७.

'नान्योऽतोऽस्ति' इति वाक्यस्यैक्यपरत्वनिषेधः

अन्तर्यामिप्रकरणस्थं 'नान्योऽतोऽस्ति द्रष्टा'[१] इत्यादिवाक्यं अक्षरप्रकरणस्थं च न चाभेदपरम् । अत इत्यनेन प्रस्तुतं सर्वनियन्तारं परामृश्य अन्यो द्रष्टा नास्तीत्युक्ते नियामकद्रष्ट्रन्तर-निषेधस्यैव प्राप्तेः । न तु द्रष्टृसामान्यनिषेधस्य । अस्मिन् ग्रामेऽयमेव सर्वनियामको नान्यः परुषोऽस्तीत्यादवन्यशब्दस्य प्रस्तुतसदृशान्यपरतया व्युत्पन्नत्वात् ।।

ननु 'अनेन ह्येतत्सर्वं वद'[२] इति प्रतिज्ञातस्यैकविज्ञानेन सर्वविज्ञानस्योपपादनार्थं अन्यत्वेन प्रतीतेन जीवेनाभेदो बोध्यत इति चेन्न । अनेनेत्यनेनान्तर्यमिणो जीवज्ञानसाधनत्वोक्त्याऽ-भेदबोधकपदाभावात् । अन्तर्यामिवाक्ये 'य आत्मनोऽन्तरः यमात्मा न वेद यस्यात्मा शरीरं, य आत्मानमन्तरो यमयति'[३] इति पूर्ववाक्येन 'एष त आत्मा अन्तर्याम्यमृतः अतोऽन्यदार्तं'[४] इत्युत्तरवाक्येन च विरोधापत्तेः । तत्र परमात्मनोऽन्यं चेतनमङ्गीकृत्य तस्यार्तियुक्तत्वेनास्वातन्त्र्यस्यैवोक्तेः । न चान्तर्यामिणो भिन्नं सर्वमार्तं नश्वरं वितथं वेति वाच्यम् । 'आर्तं वा अभिदीक्षंते य एकाष्टकायामभिदीक्षंते' इति श्रुतेः आर्तं शीतेन दुःखं यथा स्यात्तथा दीक्षंते शीतेनार्ता दुःखिनो भवन्तीत्यर्थात् । 'आर्तो जिज्ञासुः'[५] इत्यादिस्मृतेश्चार्तशब्दस्य दुःखिपरत्वात् ।।

---

१. बृ.उ. ५.७.२३.

२. बृ.उ. ३.५.१.

३. ब्र.सू.भा. १.२.२० इत्यत्रोदाहृता श्रुतिः ।

४. बृ.उ. ५.७.२३.

५. भ.गी. ७.१६.

अक्षरवाक्येऽपि 'एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः'[१] इत्यादिपूर्ववाक्येन विरोधात् । न च 'द्वितीयाद्वै भयं भवति'[२] इति श्रुतिविरोधः । लोके समानादधिकाच्च विरुद्धात् प्राप्तस्य भयस्यानया अनुवादात् । पूर्वं च 'तस्मादेकाकी बिभेति'[३] उत्तरत्र च 'तस्मादेकाकी न रमते'[४] इति भेदस्यैव प्रतिपादनात् । न च 'यन्मदन्यन्नास्ति कस्मान्नु बिभेमीति, तत एवास्य भयं वीयाय'[५] इति श्रुत्या समान्यद्वितीयमात्रदर्शनस्यैव भयहेतुतोक्तेति वाच्यम् । द्वितीयाभावस्यैव द्वितीयत्वेन द्वितीयमात्रनिषेधासिद्धेः । मदन्यद्विरुद्धं स्वतन्त्रं नास्ति सर्वस्येशाधीनत्वादीश्वरस्य परमाप्तत्वात्। तत एव स्वतन्त्रादीश्वरादस्य जीवस्य भयं वीयायेत्यर्थात् । 'ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति । भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया । सुहृदं सर्वभूतानां'[६] इत्यादिस्मृतेः । 'य एतस्मिन्नुदरमन्तरं कुरुते, अथ तस्य भयं भवति'[७] इत्यनेनैतस्मिन्निति श्रवणादवतारान्तर्यामित्वादिना प्रसक्तेशभेदो निषिध्यते । 'एको देवः सर्वभूतेषु गूढः'[८] इत्येतत्तु स्पष्टं भेदपरम् ।।

ननु–

यावन्मोहं तु भेदः स्याज्जीवस्य च परमस्य च ।
ततः परं न भेदोऽस्ति भेदहेतोरभावतः ।।

१. बृ.उ. ५.८.९.
२. बृ.उ. ३.४.२.
३. बृ.उ. ३.४.२
४. बृ.उ. ३.४.३.
५. बृ.उ. ३.४.२.
६. भ.गी. १८.१६.
७. तैत्त.उ. २.१२.
८. श्वेता.उ. ६.११

विभेदजनकज्ञाने नाशमात्यन्तिकं गते ।
आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति ।।

इत्यादिस्मृत्या भेदस्याविद्यकत्वमिति चेन्न । जीवस्य भेदो हि देवब्राह्मणादिरूपेण जीवेशयोश्चानिर्मुक्तत्वनिर्मुक्तत्वादिना भेदो यावन्मोहं तदभावे तु नास्तीत्यर्थः । आत्मनो जीवस्य ब्रह्मणो बृहद्गुणतां प्राप्तस्य देवादिधीजनके ज्ञानेन नष्टे सति असन्तमसाधुमस्वाभाविकं कः करिष्यतीत्यर्थः । 'क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु'[१] इत्यनेन स्वस्य सर्वज्ञत्वमुक्तं नतु जीवाभेदः ।

'क्षेत्राणि च शरीराणि बीजानि च शुभाशुभे ।
एतानि वेत्ति योगात्मा ततः क्षेत्रज्ञ उच्यते'[२] ।।

प्रकृतेश्च विकाराणां द्रष्टारमगुणान्वितं ।
क्षेत्रज्ञमाहुर्जीवं तु कर्तारं गुणसंवृतम्'[३] ।।

इति भारते क्षेत्रज्ञशब्दस्य सर्वान्तर्यामिसर्वज्ञपरत्वस्य स्पष्टत्वात् ।।

।। इति आगमस्यैक्यपरत्वभङ्गः ।।

## १३. अथ ऐक्यानुमानभङ्गः

भेदाभावसाधकात्मत्वहेतुनिराकरणम्

ननु 'जीवाः परमात्मनस्तत्त्वतो न भिद्यन्ते आत्मत्वात् परमात्मवत्' इत्यनुमानमभेदे मानमिति चेन्न । सर्वज्ञत्वसर्व-

---

१. भग.गी. १३.३

२. माहा.शान्ति. ३३९.६

३. माहा.शन्ति. २१०.१०.

कर्तृत्वादेरुपाधित्वात् । भेदाभावे पक्षसाध्यदृष्टान्ताद्यसंभवात् । न च व्यावहारिकभेदमादाय पक्षदृष्टान्ताद्युपपत्तिः । कल्पितपक्षादिकमादायोपपत्तावाश्रयासिद्ध्यादेरदोषत्वापत्तेः । कल्पितभेदवतो जीवादेर्मृषात्वेनाभेदाधिकरणत्वाद्यसंभवाच्च ।।

अद्वैतसिद्ध्युक्तहेत्वन्तरखण्डनम्

न च स्वव्यवहारे स्वभिन्नज्ञानानपेक्षत्वं वा हेतुरिति वाच्यम्। अप्रयोजकत्वात् । संसारदशायां स्वव्यवहारे ब्रह्मणो वृत्त्यपेक्षणात्। मोक्षे व्यवहारस्यैवाभावाच्च । न चाबाध्यत्वं हेतुः । जडे सन्दिग्धानैकान्त्यात् । तत एव व्यावहारिकभेदाभावसिद्ध्यापत्तेश्च । न च प्रत्यक्षविरोधान्न तदभावसिद्धिः । प्रत्यक्षस्य प्रामाण्ये पारमार्थिकभेदस्यैव सिद्धेः । अप्रामाण्ये तद्विरोधस्यैवासिद्धेः ।।

चैत्राभेदब्रह्माभेदसाधकयोः जीवत्ववस्तुत्वहेत्वोः दोषकथनम्

'विमताः जीवाः चैत्रान्न भिद्यन्ते जीवत्वाच्चैत्रवत्' इत्यत्र 'विमता जीवा वस्तुतो ब्रह्मणो न भिद्यन्ते वस्तुत्वात् ब्रह्मवत्' इत्यत्र च व्यवहारतोऽपि न भिद्यन्ते इत्यस्यापि सिद्ध्यापत्तेः ।।

अभेदसाधकशरीरत्वहेतुनिराकरणम् अद्वैतसिद्ध्युक्तपरिहारखण्डनं च

न च 'विमतानि शरीराणि चैत्राधिष्ठितानि शरीरत्वात् संमतवत्' इत्यनेनाभेदसिद्धिः । चैत्राधिष्ठितत्वेऽप्यन्याधिष्ठितत्वसंभवेन जीवाभेदासिद्धेः । न च चैत्रमात्राधिष्ठितत्वं वा चैत्रस्यैव भोगायतनानीति वा साध्यमिति वाच्यम् । चैत्रे सुप्ते मृते च सर्वस्य स्वप्नमरणाद्यापत्तेः । भोक्तुरन्तःकरणविशिष्टस्य प्रतिशरीरं भिन्नत्वेन बाधाच्च । न च भोक्तृत्वस्य विशिष्टवृत्तित्वेऽपि विशेष्यवृत्तित्वमप्यस्तीति

वाच्यम् । भोक्तृत्वाधिकरणस्यैव प्रतिशरीरं भिन्नत्वात् । 'विमतानि शरीराणि चैत्रमनसैव युक्तानि' इत्याभाससाम्याच्च ।।

भेदमिथ्यात्वसाधकहेतुनिराकरणम्

ननु विमतो भेदो मिथ्या एकस्यां दृशि कल्पितो वा भेदत्वात् दृश्यत्वाद्वा चन्द्रभेदवत् एकस्यां दृशि क्षणिकवादिकल्पितभेदवद्वेति चेन्न । अध्यस्ताधिकसत्ताकदोषप्रयुक्तभानत्वस्यात्रोपाधित्वात् । प्रातिभासिकाप्रतिभासिकसाधारणैकभेदत्वस्यासिद्धेश्च । ब्रह्मण्यनृतादिभेदस्य मिथ्यात्वे ब्रह्मणोऽनृतत्वाद्यापत्तेश्च । 'विमतो भेदः परमार्थसन् असद्भिन्नत्वे सति प्रातिभासिकभिन्नत्वात् ब्रह्मवत्' इति प्रतिरोधाच्च ।।

स्वाभाविकभेदराहित्यसाधकहेतुनिराकरणम्

ननु 'संवित् स्वान्तर्गणिकस्वाभाविकभेदहीना उपाधिमन्तरेणाविभा० यमानभेदत्वात् गगनवत्' इति चेन्न । इच्छादीनां घटपटाद्युपाधिभेदेनैव विभाव्यमानभेदतया तेषु व्यभिचारात् । न चेच्छादीनामेकान्तःकरण-परिणामत्वेन तत्रापि साध्यमस्तीति वाच्यम् । सावयवान्तःकरण-भिन्नभागस्यैव तदुपादानत्वात् । अन्यथैकेच्छादिकार्येणैवान्तःकरण-क्षयापत्तेः । घटपटाद्युपाधिभेदेनैव विभाव्यमानभेदेषु घटाद्यत्यन्ताभावादिषु व्यभिचारस्य दुरुद्धरत्वाच्च ।।

भेदस्य स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्व-
केवलान्वय्यत्यन्ताभावप्रतियोगित्वसाधकहेतुनिराकरणम्

यत्तु 'विमतोऽव्याप्यवृत्तिधर्मानवच्छिन्नप्रतियोगिताको भेदः स्वसमानाधिकरणात्यन्ताभावप्रतियोगी भेदत्वात् संयुक्तभेदवत्' ।

'विमतो भेदः केवलान्वय्यत्यन्ताभावप्रतियोगी पदार्थत्वात् नित्यद्रव्यवत्' इति, तत्र आद्ये 'विमतो भेदः स्वसमानाधिकरणात्यन्ताभावप्रतियोगी न अव्याप्यवृत्तिभिन्नत्वे सत्यसद्भिन्नत्वे सति प्रातिभासिकभिन्नत्वात् ब्रह्मवत्' इति प्रतिरोधात् । द्वितीये, प्रमेयत्वादिषु केवलान्वयिषु व्यभिचारात् । तेषामप्यभावाङ्गीकारे अत्यन्ताभावप्रतियोगित्वे व्यभिचारात् ।।

अद्वैतसिद्ध्युक्तैकत्वव्याप्यत्वसाध्यकानुमानखण्डनं

न च 'आत्मत्वमेकत्वव्याप्यम् आत्ममात्रवृत्तित्वात् चैत्रत्ववत्' इति वाच्यम् । निर्विशेषे आत्मत्वैकत्वाद्यभावेन बाधादिदोषात् । 'इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः'[1] इत्याद्युक्तात्मनिष्ठबहुत्वे व्यभिचाराच्च ।।

।। इति ऐक्यानुमानभङ्गः ।।

## १४. अथ अंशत्वेनैक्यभङ्गः

जीवानां भगवदधीनत्वेनांशत्वमुपपाद्य अंशत्वेनैक्यनिराकरणम्

ननु 'पादोऽस्य विश्वा भूतानि'[2] इत्यादौ 'ममैवांशो जीवलोके जीवभूतः सनातनः'[3] इत्यादिस्मृतौ चांशत्वोक्तेरभेदसिद्धिः । अंशत्वं तु घटाकाशस्य महाकाशं प्रतीव कल्पितप्रदेशत्वमिति चेन्न । घटाकाशादेरंशत्वादिव्यवहाराभावात् । स्वतः सांशस्याकाशस्य घटाद्यवच्छेदसंभवेऽपि स्वतो निरंशस्यासंगस्य ब्रह्मणस्तदसंभवात् ।

---

१. भग.गी. १४.२
२. ऋ.सं. १०.९०.३
३. भग.गी. १५.७

'द्रोणो बृहस्पतेर्भागः' 'अश्वत्थामा शङ्करांशः' 'भ्रातॄणामंशो द्रव्यं' 'पुत्रः पित्रंशः' इत्यादिप्रयोगादंशशब्दो नानार्थः । प्रकृते तु तत्सदृशत्वे सति तदधीनत्वं जीवस्येशांशत्वम् । 'अन्ये चांशकलाः'[1] इत्यादौ मत्स्यादेरभिन्नस्यापि सामर्थ्यविशेषो गौणमंशत्वम्, 'अंशो नाना॰ यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके'[2] इति सूत्रे 'सोऽन्वेष्टव्यः स विजिज्ञासितव्यः'[3] 'एतदेव विदित्वा मुनिर्भवति'[4] 'य आत्मनि तिष्ठन्'[5] इत्यादिभेदव्यपदेशस्य 'ब्रह्म दाशा ब्रह्म कितवा'[6] इत्याद्यभेदव्यपदेशस्य 'त्वमेव माता च पिता च' इत्यादि पितृपुत्रत्वादेर्नानासंबन्धस्योदाहृतत्वेन पितृपुत्रभावेनेव ईशजीवयोरश्यंशभावोपपत्तेः । दाशादीनां ब्रह्मणो जातत्वात् 'ब्राह्मणोऽस्य मुखं' इतिवत् तद्ब्रह्माभेदोपपत्तिः ।।

जीवस्य शुद्ध-ईश्वरांशत्वे दोषकथनम्, सिद्धयुक्तपरिहारखण्डनं च

किञ्च जीवस्य शुद्धचिदंशत्वं वा ईश्वरांशत्वं वा 'पादोऽस्य' इत्यादिना बोध्यते । नाद्यः । 'पादोऽस्य विश्वा भूतानि' इति श्रुताविदंशब्देन सहस्रशीर्षत्वादिविशिष्टप्रकृतेश्वरस्य 'ममैवांशः' इति स्मृतौ चेश्वरप्रयुक्तास्मच्छब्देनेश्वरस्यैवोक्तेः । नान्त्यः । त्वन्मते ईशस्याप्युपहितत्वेन घटाकाशं प्रति करकाकाशस्येवेश्वरं प्रति जीवस्यांशत्वायोगात् । न च मठाकाशस्य घटेनेवेशोपाध्यवच्छिन्नमेव जीवोपाधिनाऽवच्छिद्यत इति वाच्यम् । तथात्वे हि मुक्तस्य

१. भाग.पु. १.३.२८.
२. ब्र.सू. २.३.४३.
३. छा.उ. ८.७.१.
४. छा.उ. ८.७.१.
५. बृ.माध्यन्दिनपाठः (ब्र.सू.भा. १.२.२० इत्यत्रोदाहृता श्रुतिः)
६. आथ.उ.

शुद्धब्रह्मत्वं न स्यात् । न च सहस्रशीर्षत्वाद्युपलक्षितमेव इदम्यदेन परामृश्यत इति वाच्यम् । सहस्रशीर्षत्वादेर्धर्मान्तरोत्थापनेन व्यावर्तकत्वरूपोपलक्षणत्वस्य निर्विशेषं प्रत्यसंभवात् । सहस्रशीर्षत्वादेर्विशेषणत्वे बाधकाभावाच्च । 'त्वं स्त्री त्वं पुमानसि त्वं कुमार उत वा कुमरी त्वं जीर्णो दण्डेन वञ्चसि त्वं जातो भवति विश्वतो मुखः' 'सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाऽभिवदन् यदास्ते'[१] इत्यादौ 'सर्वे वेदा यत्पदमामनन्ति सर्वाणि नामानि यमाविशन्ति'[२] इति श्रुत्यनुसारेण समन्वयोक्तरीत्या तत्तत्पदवाच्यत्वमेवेशस्योक्तम् । यथाश्रुताभेदस्य सर्वमानविरुद्धत्वात् । यथा हि भृत्यनिष्ठजयस्य राजाधीनत्वेन राजा जयीति व्यवहारस्तथा स्त्रीशब्दादिप्रवृत्तिनिमित्तस्येशाधीनत्वेन तत्तत्पदानां तत्र मुख्यताप्रसिद्धिः। स्त्र्यादौ त्वमुख्यतया प्रयोगः ।।

अस्तु विभक्तौ समसम्यर्थे लक्षणा त्वदीयपदद्वयलक्षणापेक्षया लघुत्वात् ।।

।। इति अंशत्वेनैक्यभङ्गः ।।

## १५. अथ जीवस्य प्रतिबिम्बत्वेनैक्यभङ्गः

जीवस्य प्रतिविम्बत्वेनैक्यनिराकरणपूर्वं तदधीनत्वे सति तत्सदृशत्वरूपप्रतिविम्बत्वव्यवस्थापनम्

ननु मुखप्रतिमुखवज्जीवब्रह्मणोरभेदसिद्धिः । जीवस्य ब्रह्मप्रतिविम्बत्वात् इति चेन्न । दृष्टान्तासम्प्रतिपपत्तेः । 'चैत्रछाये भिन्ने' इतिवत् 'चैत्रतत्प्रतिबिम्बे भिन्ने' इत्येव पार्श्वस्थितेन

१. सदा.स्मृ. ३३
२. काठ.उ. १.२.६.१

ग्रहणात्। स्वेनापि स्वकरतत्प्रतिबिम्बे भिन्ने इति ग्रहणाच्च । न च ग्रीवास्थं यत्स्वलक्षणकं प्रतिपन्नं दर्पणस्थमपि तथेत्यवधार्य 'तदेवेदं मुखं' इति 'स एवायं करः' इति च प्रतीतिरनुभवसिद्धेति वाच्यम् । चैत्रपादलेखाच्छाययोः 'चैत्रस्य पादोऽयं, चैत्रस्य शिरः' इतिवत्, काचित्कस्य बिम्बाभेदव्यवहारस्य गौणत्वात् । 'यथैषा परुषे च्छाया एतस्मिन्नेतदाततम् । छया यथा पुंसदृशी पुमधीना च दृश्यते । एवमेवात्मकाः सर्वे ब्रह्माद्याः परमात्मनः'[१] ।। इत्यादि श्रुत्या तदधीनत्वे सति तत्सदृशत्वरूपजीवस्येशप्रतिबिम्बत्वमुक्तम् ।।

'दर्पणाभिहिता दृष्टिः...' इति कारिकोक्ताभिप्रायखण्डनम्

न च दर्पणादिप्रतिहता दृष्टिः स्वमुखमेव गृह्णाति इति वाच्यम्। दर्पणादेर्नेत्राभिघातमात्रोपक्षीणतया मलिनदर्पणप्रतिघातेन स्वच्छ-दर्पणप्रतिघातेनेव मुखमालिन्यप्रतीत्यनुपपत्तेः । परावृत्य स्वमुखस्यैव ग्रहणे पार्श्वस्थस्य मुखद्वयप्रतीत्ययोगाच्च । मणिदर्पणकृपाणेषु च विरुद्धरूपानेकमुखप्रतीतस्यायोगाच्च । चक्षुःपरिवृत्तिप्रक्रियायाः ब्रह्मप्रतिबिम्बे जीवेऽसंभवाच्च । दर्पणस्थत्वेनैव मुखानुभवाच्च । न च दर्पणस्थत्वानुभवो भ्रमः । 'नात्र रूप्यमासीत्' इतिवत् 'नात्र प्रतिबिम्बमसीन्नात्र प्रतिमुखमासीत्' इति बाधाभावात् ।।

जीवस्य प्रतिबिम्बत्वबोधकप्रमाणाभिधानम्

किञ्च अनादेर्जीवस्योपाध्यधीनत्वस्यासंभवात् जीवस्य प्रतिबिम्बत्वबोधकमानम्, तदधीनत्वे सति तत्सदृशत्वपरम् । तत्त्वं तु भेदव्याप्तमेव । उक्तं हि भगवता 'अत एव चोपमा सूर्यकादिवत्'[२] इति ।।

१. अनु. ३.२.१२२
२. ब्र.सू. ३.२.१८

उपाधिसम्बन्धस्य स्वाभाविकत्वापौधिकत्वपक्षे दोषकथनम्, अविद्यायाः प्रतिफलनोपाधित्वनिराकरणं च

किञ्चोपाधिसंबन्धो जीवे स्वाभाविक औपाधिको वा । आद्ये तस्य सत्यत्वापत्तिः । द्वितीयेऽनवस्थाद्यापत्तेः ।।

किञ्च बिम्बान्यूनसत्ताके ह्युपाधौ प्रतिबम्बं लोके दृष्टम् । कथं ब्रह्मन्यूनसत्ताकाविद्यादौ प्रतिबिम्बम् । अन्यथा मरुमरीचिकाजलेऽपि सूर्यादिप्रतिबिम्बं स्यात् । न च दर्पणस्थनेत्रप्रतिफलितमुखादिस्थले व्यभिचारः । सोपाधिकारोपे दृष्टस्य स्वबाधकाबाध्योपाधिकत्वस्यात्रासत्वेन तन्नेत्रदेशावच्छेदेन तन्मुखप्रतिफलनमित्यङ्गीकार्यत्वात् । वस्तुतस्तु प्रतिबिम्बस्य मिथ्यात्वासंप्रतिपत्तेर्वृथैव त्वत्प्रलापः ।।

किञ्चैकदेशस्थितस्य देशान्तरस्थिते प्रतिबिम्बे(म्बनं) न तूपाध्यन्तर्गतस्य। न चाकाशस्य जले कथं प्रतिबिम्बम् । स देशस्याकाशस्य जलात् बहिर्भागस्यैव प्रतिबिम्बनात् । न ह्यविद्याद्युपाधिर्ब्रह्मैकदेशस्था।

एकदेशस्थितस्यैव देशान्तरस्थिते दर्पणादौ प्रतिबिम्बनमित्युपपादनम्

किञ्च आकाशस्य प्रतिबिम्बमसिद्धम् । नक्षत्रादिप्रभामण्डलस्यैव जले प्रतिबिम्बनात् । अचाक्षुषाकाशप्रतिबिम्बस्य चाक्षुषत्वासंभवात्। अन्यथा वायुकालधर्माधर्मपिशाचादिप्रतिबिम्बस्यापि चाक्षुषतापत्तेः। 'रूपं रूपं प्रतिरूपो बभूव' 'एकधा बहुधा चैव दृश्यते जलचन्द्रवत्' इत्याद्यागमस्त्वन्तर्यामिपरः । रूपं रूपं जीवं जीवं प्रति तावद्रूपैराविर्भूतो बभूव, एकधा मूलरूपेण बहुधाऽन्तर्यामित्वादिनेत्यर्थः ।।

।। इति जीवस्य प्रतिबिम्बत्वेनैक्यभङ्गः ।।

## १६. अथ जीवाणुत्वोपपत्तिः

'नित्यः सर्वगतः' इत्यादिश्रुतिविरोधपरिहारपूर्वं जीवाणुत्वसमर्थनम्

अणोर्जीवस्य व्यापकादीशाद्वास्तवो भेदः । न च 'नित्यः सर्वगतः'[१] 'स वा एष महानज आत्मा'[२] इत्यादिश्रुतेः, 'जीवो नाणुः प्रत्यक्षत्वात् प्रत्यक्षगुणवत्वाच्च घटवत्' इत्याद्यनुमानाच्च जीवो व्याप्त एवेति वाच्यम् । सर्वत्र गमनं त्वणोरेव सम्भवति । गुणगरिष्ठत्वादिना महत्वोपपत्तेश्च । न चाणुत्वे प्रत्यक्षत्वानुपपत्तिः। त्रसरेण्वतिरिक्तातीन्द्रियद्रव्यस्य नव्यतार्किकैरपि निराकृतत्वेन नित्यद्रव्यत्रसरेणोरिव प्रत्यक्षोपपत्तेः ॥

वस्तुतस्तु अणुजीवात्मनां स्वप्रकाशतया साक्षिरूपस्वरूपेन्द्रिय विषयतया च नित्यसाक्षीस्वरूपप्रत्यक्षस्य महत्वाभावेऽपि (प्रत्यक्षत्व)संभवे दोषाभावः । द्रव्यस्य जन्यप्रत्यक्षे महत्वस्य कारणत्वेऽपि नित्यसाक्षीप्रत्यक्षकारणत्वाभावात् ॥

'अणुर्ह्येष आत्मा यं वा एते सिनीतः पुण्यं च पापं च'[३] 'बालाग्रशतभागस्य शतधा कल्पितस्य च । भागो जीवः स विज्ञेयः स चान्त्याय कल्पते ॥'[४] इति श्रुतेः । न च श्रुतिर्दुर्विज्ञेयत्वपरा। ईशस्य दुर्विज्ञेयत्वेऽपि जीवस्य तदभावात् ॥

---

१. भग.गी. २.२४.

२. बृ.उ. ६.४.२२.

३. ब्र.सू.भा. २.३.२० इत्यत्रोदाहृतगौपवनश्रुतिः ।

४. श्वेता.उ. ५.९

### असिद्ध्यादिपरिहारपूर्वं अनुमानैः जीवाणुत्वसमर्थनम्, अद्वैतसिद्ध्युक्तपरिहारखण्डनं च

'जीवो न व्याप्तः उत्क्रान्तिमत्वात् गतिमत्वात् आगतिमत्वात् खगदेहवत्' इत्यनुमानाच्च । न चासिद्धिः । 'सोऽस्माच्छरीरात् समुत्क्रम्यामुं लोकमधिगच्छति । अमुष्मादिमं लोकमागच्छति'[१] इत्यादिश्रुतेर्हेतुसिद्धेः । न च बुद्धिगतमुत्क्रमणादिकं श्रुत्योपहिते बोध्यते । श्रुतेर्भ्रान्तिहेतुत्वेनाप्रामाण्यापत्तेः । 'स एनान् ब्रह्म गमयति'[२] 'तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः'[३] इत्यादिश्रुतिस्मृत्यादिषु गतेर्मुक्तिसामानाधिकरण्योक्तेः । न च व्यापकं ब्रह्म प्रति गमनमसंभवि । निःशेषाविद्यानिवृत्त्यर्थ-लोकविशेषस्थभगवद्रूपविशेषप्राप्त्यर्थं गमनोक्तेः । 'तेन प्रद्योतेनैष आत्मा निःष्क्रामति'[४] इत्यात्मनिष्ठत्वश्रुतेश्च । 'तद्यथानः सुसमाहितमुत्सर्जद्यायादेवमेवायं शारीर आत्मा प्राज्ञेनात्मनाऽन्वारूढ उत्सर्जद्याति'[५] इति स्वाभाविकगत्याश्रयशकटदृष्टान्तोक्तेश्च । न चैष इति बुद्ध्युपहितस्यैव परामर्शः । तद्बोधकपदाभावात् । 'मन उदक्रामत् मीलित इवाश्नन् पिबन्नास्तेव'[६] इत्यादिश्रुतौ मन उत्क्रमणेऽपि आत्मनस्तदभावश्रवणाच्च । न चोपहितस्योपाधि-निबन्धनगतिमत्वेऽपि बुद्ध्यनुपहितस्य गत्यभावो न विरुद्धः । बुद्धिं विनैवाशनपानादिवद्गमनस्योपपत्तेः । 'विद्वान्नामरूपाद्विमुक्तः परात्परं

---

१. ब्र.सू.भा. २.३.२० इत्यत्रोदाहृता पौष्यायणश्रुतिः ।
२. छा.उ. ५.१०.२.
३. ब्र.सू.भा. ४.२.२२ इत्यत्रोदाहृताध्यात्मवचनम् ।
४. बृ.उ. ६.४.२.
५. बृ.उ. ६.३.३५.
६. ऐत.उ.

पुरुषमुपैति दिव्यं'[१] 'परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते। स तत्र पर्येति जक्षन् क्रीडन् रममाणः'[२] इति श्रुतिषु मुक्तावपि गत्युक्तेः ॥

जीवात्मगत्युक्तिरौपचारकीति सिद्धयुक्तपरिहारखण्डनं च

एतेनोपाधिगत्योपहितगतिप्रयोग औपचारिक इति निरस्तम् । कृतहानाकृताभ्यागमाद्यापत्तेश्च । न च यद्बुध्यवच्छिन्नेन येनैवात्मना यत्कृतं तदवच्छिन्नस्य तस्यैव भोगः । आत्मनो निरवयवत्वान्निरंशत्वादेकत्वाच्चेति वाच्यम् । एकोपाधिनिर्मुक्तस्याप्युपाध्यन्तरोपहितत्वेनानिर्मोक्षप्रसङ्गात् ॥

जीवाणुत्वसाधकहेतुद्वयखण्डनम्

'आत्मत्वमणुनिष्ठं द्रव्यत्वसाक्षाद्व्याप्यजातिमत्वात् पृथिवीत्ववत्'। न च व्यापकावृत्तित्वमुपाधिः । द्रव्यत्वसत्तादौ साध्याव्यापकत्वात्। न च तेनैव स्पर्शादिसामानाधिकरण्यमपि साध्यम् । भूतवृत्तित्वादेरुपाधित्वात् ।

'जीवो न व्याप्तः महाभूतेतरत्वे सत्यसर्वज्ञत्वात् । शब्देतरनित्यविशेषगुणाश्रयत्वात् संस्काराश्रयत्वाच्च घटवत्' । न चात्मत्वमुपाधिः । उपाध्यभावेन साध्याभावस्य विभुत्वस्य साधनीयस्य 'अहमिहैव सदने आसं' इति धर्मिग्राहकेनाक्षेण बाधेनोपाधेरप्रयोजकत्वात् । विशेषगुणसंस्कारादीनामन्तःकरणोत्पन्नत्वेऽपि अविद्यासहकृतस्वामित्वादिना जीवधर्मत्वात् ॥

---

१. आथ.उ. ६.८.

२. छा.उ.८.१२.२.

## जीवस्याणुत्वेऽपि प्रकाशतो व्याप्तिसमर्थनम्

न चैकस्याणोरेकदा व्यवहितदेशद्वयावच्छेदासंभवेन 'पादे सुखं' 'सिरसि मे वेदना' इत्यादियुगपदनुभवविरोध इति वाच्यम् । गुणिनोऽणुत्वेऽपि गुणव्याप्त्या व्यापिसुखाद्यनुभवाविरोधात् । आरुण्यादिरेकैकव्यक्तिरिति मते आरुण्यादेरिव जातिसमवायादेरिव च धर्मितोऽन्यत्र धर्मावस्थानोपपत्तेः । न च तद्वदेव व्यापकत्वापत्तिः। देहातिरिक्ते ज्ञानादिकार्यानुपलब्ध्या व्यापकत्वे मानाभावात् । गृहैकदेशस्थदीपस्य प्रभा यथा गृहव्यापिनी तद्वत् ज्ञानादेर्देहव्याप्त्युपपत्तेः। न च प्रभा द्रव्यान्तरं न गुणः । दीपे नष्टे क्षणचतुष्टयाद्यवस्थानापत्तेः। अस्तु वा द्रव्यमन्वयव्यतिरेकाभ्यां दीपधर्मत्वस्यानुभवसिद्धत्वात् ।।

## अद्वैतसिद्ध्युक्ताक्षेपखण्डनम्

किञ्च वह्निं विहाय स्पष्टमौष्ण्यमुपलभ्यते । न च वह्निसमीपव-र्त्यनुद्भूतरूपतेजसस्तदिति वाच्यम् । वह्नेरौष्ण्यस्यासिद्ध्यापत्तेः । न च बाधके सति सविधे तेजोन्तरकल्पनेऽपि दृश्यमानवह्नावनु-भूयमानोष्णस्पर्शे बाधकाभावेन तस्मिन् तेजोन्तरीयत्वं न कल्प्यमिति वाच्यम् । वह्निसमीपे कल्प्यस्याचाक्षुषस्य तेजस एवौष्ण्याश्रयत्वोपपत्तौ वह्नेस्तदाश्रयत्वकल्पने गौरवात् । जात्यादेरिवौष्ण्यस्य वह्निं विहायावस्थाने बाधकाभवाच्च । केतक्यादिगन्धस्य द्रव्यं विहायान्यत्र प्रसरणाच्च । न च केतक्यवयवगमनेन तदुपपत्तिः । द्रव्यक्षयापत्तेः । न च पुनरवयवान्तरप्रवेशात्तदक्षयः । कालान्तरे निर्गन्धत्वानापत्तेः । अप्रामाणिकावयवान्तरकल्पनापेक्षया गुणस्यैव प्रसरणाङ्गीकारे

लाघवात् । [1](प्रसारितमुखस्य रासनापत्तेश्च । स्फटिककरण्डिकास्थ-कस्तूर्यादौ तत्प्रवेशे मानाभावाच्च । न च समवायिकारणं विना स्थितौ कार्यकारणभावहानिः । उत्पत्तेः समवायिहेतुं विनाऽङ्गीकारात् ।।)

सिद्धान्तरीत्या जीवस्याणुत्वेऽपि पादाद्यवच्छेदेन सुखाद्यनुभवसमर्थनम्

वस्तुतस्तु जलूकादिवत्सङ्कोचविकासशाल्यन्तःकरणे सुखदुःखादिक्षेत्रे हस्तपादाद्यवच्छेदेनोत्पन्नं सुखदुःखादिकमविद्यासहकृतस्वामित्वसंबन्धेन जीवे वर्तत इति 'अहं सुखी दुःखी' 'मम शिरसि सुखं' 'पदे मे वेदना' इत्याद्यनुभवः । योगिनः कायव्यूहे भोगश्च सूपपन्नः ।।

अद्वैतसिद्ध्युक्तविचारखण्डनम्

आत्मनां व्यापकत्वे सर्वाणि शरीराणि सर्वस्यैव भोगायतनानि स्युः । सर्वशरीरेन्द्रियादीनां सदा सर्वात्मसंयुक्तत्वात् । कर्मणामपि साधारणदेहादिकृतत्वेनासाधारण्यायोगात् । अहंत्वारोपादेरपि नियामकमूलसंबन्धादेरभावे नैयत्यायोगात् । न च तावापीश्वरस्य व्यापकत्वेन शरीराणां तद्भोगजनकत्वं स्यादिति वाच्यम् । ईश्वरस्य भोगमात्रं प्रति स्वरूपायोग्यत्वात् । भोगयोग्यस्यैव ह्यायतनचिन्ता नतु तदयोग्यस्य । न च चैत्रभोगजनकाङ्कुरादेस्तददृष्टजन्यत्वा-दात्मसमवेतस्य चादृष्टस्य साक्षादङ्कुरासंबन्धात् । आत्मद्वारक एव संबन्धो वाच्यः । ततस्तस्य विभुत्वमिति वाच्यम् । चैत्रभोगहेतोरप्यङ्कुरादेरात्मद्वारा अदृष्टसम्बन्धोऽपि तदजन्यत्वेन तस्यातन्त्रत्वात् । विभ्वाकाशस्य शब्देऽदृष्टस्यात्मद्वारकसंबन्धासंभवाच्च। न च स्वजनकादृष्टनिरूपितात्मद्वारकसन्निकर्षस्यातिप्रसङ्गाभावेन तन्त्रत्वं, जनकता त्वदृष्टस्य फलोन्नेयेति वाच्यम् । प्रति-

१. मातृकायां कुण्डलितेयं पङ्क्तिः ।

योग्यभावज्ञानज्ञेयवाच्यवाचकेच्छेष्यमाणकृतिकार्यादीनामिवाणु-निष्ठादृष्टस्यैव स्वजनकक्रियोद्देश्यत्वादेः सम्बन्धान्तरस्याङ्करादौ कल्प्यत्वात् । न च 'बुद्धेर्गुणेनात्मगुणेन चैव ह्याराग्रमात्रो ह्यवरोऽपि दृष्टः'[१] इति श्रुतौ बुद्धिगुणेनाराग्रमात्रं स्वाभाविकं च विभुत्वं युक्तमिति वाच्यम् । आत्मगुणेनाराग्रमात्रः बुद्धेर्गुणेनावर इति योजनात् । 'यथाऽणुनश्चक्षुषः प्रकाशो व्याप्तः । एवमेवास्य पुरुषस्य प्रकाशो व्याप्तः । अणुर्ह्येवैष पुरुषः'[२] इत्यादिश्रुत्यनुग्रहाव्य-वहितयोजनस्यादोषत्वात् ।।

।। इति जीवाणुत्वोपपत्तिः ।।

## १७. अथ सदनन्तगुणे ब्रह्मणि प्रमाणम्

नन्वस्तु जीवभिन्नः परेशस्तस्य गुणानन्त्ये मानाभाव इति चेन्न। 'यः सर्वज्ञः सर्ववित् यस्य ज्ञानमयं तपः'[३] 'बृहन्तोऽस्य (गुणाः) धर्माः'[४] इत्यादिश्रुतेः ।

'ब्रह्मेशानादिभिर्देवैः समेतैर्यद्गुणांशकः ।
नावसाययितुं शक्यो व्याचक्षाणैश्च सर्वदा ।।'[५]

'यो वा अनंतस्य गुणाननन्ताननुक्रमिष्यन् स तु बालबुद्धिः'[६] इत्यादिस्मृतेश्च मानत्वात् ।।

१. श्वेता.उ. ५.८
२. ब्र.सू.भा. २.४.८ इत्यत्रोदाहृतशाण्डिल्यश्रुतिः ।
३. आथ.उ. ३.१०.
४. न्या.वि. १.१.१ इत्यत्रोदाहृता श्रुतिः ।
५. म.भा.ता.नि. २.११४
६. भाग.पु. ११.४.२.

### उपास्तिशेषत्वेन निषेधवाक्यशेषत्वेन गुणविधानमिति अद्वैतसिद्धयुक्तपक्षनिराकरणम्

ननु 'जर्तिलयवाग्वा जुहुयात् गवीधुकयवाग्वा जहुयात्' इत्यादौ जर्तिलयवाग्वादेर्होमसाधनत्वस्य 'अनाहुतिर्वै जर्तिलाश्च गवीधुकाश्च' इति निन्दायाश्च 'अजाक्षीरेण जुहोति' इति विध्येकवाक्यतया अतत्परत्वं किन्तु स्तावकत्वं यथा तथैव क्वचिदुपास्तिवाक्यशेषतया क्वचिन्निषेधवाक्यशेषतयोपपत्त्या न गुणविधाने तात्पर्यं सगुणवाक्यस्येति चेन्न । 'यः सर्वज्ञः सर्ववित्' इत्यादेरुपास्तिनिषेधवाक्यसान्निध्याभावेन गुणविधाने तात्पर्यावश्यकत्वात् । जर्तिलादीनां यागसाधनताया इव व्यावहारिकगुणानामप्यसिद्धयापत्तेश्च ॥

### श्रुतिप्राप्तस्य श्रुत्या निषेधे बाधककथनम्

किञ्च श्रुतिप्राप्तस्य श्रुत्या निषेधे अहिंसावाक्यमग्निषोमीयहिंसायाः, अग्रहणवाक्यं च षोडशिग्रहणस्य, असद्वेत्यादिवाक्यं ब्रह्मसत्वस्य निषेधकं स्यात् । न च श्रुतिप्राप्तत्वं न तत्प्रसक्तत्वमतिप्रसङ्गात् । किन्तु तत्प्रमितत्वम् । तच्च प्रकृते नास्तीति वाच्यम् । मानान्तरा-प्राप्तगुणबोधकत्वेऽप्यप्रामाण्ये तद्दृष्टान्तेन वेदमात्रस्यैवाप्रामाण्यापत्तेः । 'मत्तः परतरं नान्यत् किञ्चिदस्ति धनञ्जय'[१] 'परः पराणां'[२] इत्यादिस्मृत्या सगुणात्परस्योत्कृष्टस्य निषेधः । सगुणे परादपि परत्वं हि स्पष्टमुक्तं । न च जडापेक्षया परं किञ्चिज्जडं तदपेक्षया परः सर्वज्ञः शुद्धापेक्षया चापर इति वाच्यम् । सर्वज्ञभिन्ने शुद्धे मानाभावात् । 'वेदैश्च सर्वैरहमेव वेद्यः'[३] इति स्मृत्या सगुणस्यैव

१. भग.गी. ७.६.
२. ब्रह्मपारस्तोत्रम्
३. भग.गी. १५.१५.

सर्ववेदवेद्यत्वोक्तेः । अन्यथा 'सदेव सोम्येदमग्र आसीत्'[१] 'असद्वा इदमग्र आसीत्'[२] इति श्रुती परापरब्रह्मविषये स्याताम् । न चेदमिति प्रपञ्चस्य प्रकृतत्वेन प्रपञ्चस्यैव कारणात्मना सत्वं कार्यरूपेणासत्वमिति वाच्यम् । त्वन्मते प्रपञ्चे अबाधितार्थक-सत्पदस्यास्वारस्यात् । सदेवेत्यादिसत्पदस्य प्रधानभिन्न-जगत्कारणब्रह्मपरतया ईक्षत्यधिकरणे त्वया स्थापितत्वात् ॥

किञ्च ग्रहणाग्रहणवाक्ये अपि परापरयागविषयके स्याताम् । न च 'ऐन्द्रवायवं (ग्रहं) गृह्णाति' इत्यादिवत् षोडशिग्रहणवाक्यस्य यागपरत्वेऽप्यग्रहणवाक्यस्य तदभावबोधकतया न यागविषयकत्वमिति वाच्यम् । त्वदभिमतनिर्गुणवाक्यस्यापि गुणाभावमात्रपरत्वेन परब्रह्मपरत्वाभावात् ।

न च सगुणवाक्यं व्यावहारिकगुणपरं निर्गुणवाक्यं तात्विक-नैर्गुण्यपरम् । 'असन्नेव स भवत्यसद्ब्रह्मेति वेद चेत्' इति श्रुतिर्नासत्वनिन्दार्था, किन्तु शून्यतापत्तिरूपपरममोक्षपरेत्यापत्तेश्च । न च शून्यता न पुरुषार्थः, किन्त्वानन्दप्राप्तिरेव । त्वन्मते स्वरूपभिन्नानन्दावाप्त्यादेरभावात् ॥

किञ्च ब्रह्ममीमांसायामपि 'विकारशब्दान्नेति चेन्न प्राचुर्यात्'[३] 'उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात्'[४](५५पेज्) 'गौण्य-संभवात्'[५] इत्यादौ शास्त्रयोर्विरोधे तात्विकार्थान्तरपरतोक्ता न

१. छा.उ. ६.२.१.
२. तैत्त.उ. २.१५.
३. ब्र.सू. १.१.१३.
४. ब्र.सू. १.१.२७.
५. ब्र.सू. २.३.३.

त्वारोपितार्थकता । अन्यथेक्षत्याद्यधिकरणेषु सिद्धान्तसाधकानामीक्षणादीनां साङ्ख्याद्यभिमतप्रधानादावारोपसंभवेन प्रधाननिराकरणादिकं न सिद्ध्येत् । न च सदृश एवामात्यादौ राजत्वारोपो दृश्यते नतु स्तम्भादाविति चेतन एवेक्षितृत्वदर्शनाच्चेतने ब्रह्मणि तदारोपो युज्यते नाचेतने प्राधान इति वाच्यम् । 'नाम ब्रह्मेत्युपासीत'[१] 'योषितमग्निमुपासीत' इत्यादौ विसदृशे नामयोषिदादौ ब्रह्मत्वाग्नित्वाद्यारोपदर्शनात् ॥

सगुणवाक्यस्य निषेधायानुवादकत्वमिति पक्षनिराकरणम्

न च विश्वकर्तृत्वदिनाऽऽक्षिप्तं सार्वज्ञ्यादिकं 'यः सर्वज्ञः' इत्यादिना निषेधायानूद्यत इति वाच्यम् । जगदारोपाधिष्ठानत्वेनाक्षिप्तस्य ब्रह्मसत्वस्य 'असद्वा इदमग्र आसीत्' इति निषेधाय 'सदेव सोम्य' इत्यादेरनुवादकतापत्तेः । व्यावहारिकगुणानामप्यसिद्ध्यापत्तेश्च । न हि निषिद्धे ब्राह्मणहननादाववान्तरतात्पर्यमस्ति । न च देवताविग्रहादौ विधिस्तुतिद्वारतयोपात्ते मानान्तरप्राप्तिविरोधयोरभावात् तदत्यागमात्रेण तत्सिद्धिवदत्रापि निषेधौपयिकतयोपात्तस्य सार्वज्ञ्यादेर्मानान्तरादप्राप्तस्य व्यावहारिकमानाविरुद्धतया व्यवहारदशायामत्यागमात्रेण व्यावहारिकत्वोपपत्तिरिति वाच्यम् । मानान्तरेणाप्राप्तौ निषेधाया नुवादकत्वोक्तेस्तुच्छत्वात् । अनिषिद्धस्य देवताविग्रहादेर्व्यावहारिकत्वसिद्धावपि श्रुतिनिषिद्धस्य तदसंभवाच्च । मानानां व्यावहारिकत्वादिव्यवस्थायास्त्वद्दुराशामात्रत्वाच्च । नैर्गुण्यस्य ब्रह्मभिन्नस्य व्यावहारिकत्वाच्च । तदभिन्नस्य नित्यसिद्धत्वेन शास्त्राप्रमेयत्वात् । तज्ज्ञानस्य गुणाविरोधित्वाच्च । सार्वज्ञ्यादेर्विश्वकर्तृत्वादिनाऽऽक्षेपसंभवेऽपि

---

१. छा.उ. ७.५.१.

सर्ववेदवेद्यत्वोक्तेः । अन्यथा 'सदेव सोम्येदमग्र आसीत्'[१] 'असद्वा इदमग्र आसीत्'[२] इति श्रुती परापरब्रह्मविषये स्याताम् । न चेदमिति प्रपञ्चस्य प्रकृतत्वेन प्रपञ्चस्यैव कारणात्मना सत्वं कार्यरूपेणासत्वमिति वाच्यम् । त्वन्मते प्रपञ्चे अबाधितार्थक-सत्पदस्यास्वारस्यात् । सदेवेत्यादिसत्पदस्य प्रधानभिन्न-जगत्कारणब्रह्मपरतया ईक्षत्यधिकरणे त्वया स्थापितत्वात् ॥

किञ्च ग्रहणाग्रहणवाक्ये अपि परापरयागविषयके स्याताम् । न च 'ऐन्द्रवायवं (ग्रहं) गृह्णाति' इत्यादिवत् षोडशिग्रहणवाक्यस्य यागपरत्वेऽप्यग्रहणवाक्यस्य तदभावबोधकतया न यागविषयकत्वमिति वाच्यम् । त्वदभिमतनिर्गुणवाक्यस्यापि गुणाभावमात्रपरत्वेन परब्रह्मपरत्वाभावात् ।

न च सगुणवाक्यं व्यावहारिकगुणपरं निर्गुणवाक्यं तात्त्विक-नैर्गुण्यपरम् । 'असन्नेव स भवत्यसद्ब्रह्मेति वेद चेत्' इति श्रुतिर्नासत्वनिन्दार्था, किन्तु शून्यतापत्तिरूपपरममोक्षपरेत्यापत्तेश्च । न च शून्यता न पुरुषार्थः, किन्त्वानन्दप्राप्तिरेव । त्वन्मते स्वरूपभिन्नानन्दावाप्त्यादेरभावात् ॥

किञ्च ब्रह्ममीमांसायामपि 'विकारशब्दान्नेति चेन्न प्राचुर्यात्'[३] 'उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात्'[४](५५पेज्) 'गौण्य-संभवात्'[५] इत्यादौ शास्त्रयोर्विरोधे तात्त्विकार्थान्तरपरतोक्ता न

१. छा.उ. ६.२.१.
२. तैत्त.उ. २.१५.
३. ब्र.सू. १.१.१३.
४. ब्र.सू. १.१.२७.
५. ब्र.सू. २.३.३.

त्वारोपितार्थकता । अन्यथेक्षत्याद्यधिकरणेषु सिद्धान्तसाधकानामीक्षणादीनां साङ्ख्याद्यभिमतप्रधानादावारोपसंभवेन प्रधाननिराकरणादिकं न सिद्ध्येत् । न च सदृश एवामात्यादौ राजत्वारोपो दृश्यते नतु स्तम्भादाविति चेतन एवेक्षितृत्वदर्शनाच्चेतने ब्रह्मणि तदारोपो युज्यते नाचेतने प्राधान इति वाच्यम् । 'नाम ब्रह्मेत्युपासीत'[१] 'योषितमग्निमुपासीत' इत्यादौ विसदृशे नामयोषिदादौ ब्रह्मत्वाग्नित्वाद्यारोपदर्शनात् ।।

सगुणवाक्यस्य निषेधायानुवादकत्वमिति पक्षनिराकरणम्

न च विश्वकर्तृत्वदिनाऽऽक्षिप्तं सार्वज्ञ्यादिकं 'यः सर्वज्ञः' इत्यादिना निषेधायानूद्यत इति वाच्यम् । जगदारोपाधिष्ठानत्वेनाक्षिप्तस्य ब्रह्मसत्वस्य 'असद्वा इदमग्र आसीत्' इति निषेधाय 'सदेव सोम्य' इत्यादेरनुवादकतापत्तेः । व्यावहारिकगुणानामप्यसिद्ध्यापत्तेश्च । न हि निषिद्धे ब्राह्मणहननादाववान्तरतात्पर्यमस्ति । न च देवताविग्रहादौ विधिस्तुतिद्वारतयोपात्ते मानान्तरप्राप्तिविरोधयोरभावात् तदत्यागमात्रेण तत्सिद्धिवदत्रापि निषेधौपयिकतयोपात्तस्य सार्वज्ञ्यादेर्मानान्तरादप्राप्तस्य व्यावहारिकमानाविरुद्धतया व्यवहारदशायामत्यागमात्रेण व्यावहारिकत्वोपपत्तिरिति वाच्यम् । मानान्तरेणाप्राप्तौ निषेधाया नुवादकत्वोक्तेस्तुच्छत्वात् । अनिषिद्धस्य देवताविग्रहादेर्व्यावहारिकत्वसिद्धावपि श्रुतिनिषिद्धस्य तदसंभवाच्च । मानानां व्यावहारिकत्वादि० यवस्थायास्त्वद्दुराशामात्रत्वाच्च । नैर्गुण्यस्य ब्रह्मभिन्नस्य व्यावहारिकत्वाच्च । तदभिन्नस्य नित्यसिद्धत्वेन शास्त्राप्रमेयत्वात् । तज्ज्ञानस्य गुणाविरोधित्वाच्च । सार्वज्ञ्यादेर्विश्वकर्तृत्वादिनाऽऽक्षेपसंभवेऽपि

---

१. छा.उ. ७.५.१.

'आनन्दं ब्रह्मणो विद्वान्न बिभेति'[1] इत्याद्युक्तानन्दादेः सार्वज्ञ्याद्याक्षेपककर्तृत्वादेश्चानाक्षेपेण तद्बोधकस्यानुवादकत्वासंभवात् । न चान्यशेषतयोपात्ते सार्वज्ञ्यादौ तात्पर्ये वाक्यभेदः । अनुपासनानिषेधप्रकरणस्थस्य 'यः सर्वज्ञः' इत्यादेरन्यशेषत्वासिद्धेः । न च तटस्थलक्षणद्वारा ब्रह्मबोधे तात्पर्यं न विशेषण इति वाच्यम् । शाखोत्थाप्यचन्द्रनिष्ठप्रकृष्टप्रकाशस्येव निर्विशेषे सार्वज्ञ्योत्थाप्यधर्मान्तरस्याभावात् तटस्थत्वासंभवात् ।।

### परसम्मत्या सगुणत्वादेः पारमार्थिकत्वसमर्थनम्

किञ्च व्यतिहार[2] इति सूत्रे 'तद्योऽहं'[3] इति श्रुत्युक्तस्य जीवे ईश्वरत्वस्येश्वरे जीवत्वस्योपास्यतयोत्तरतापनीयादौ निर्गुणोपास्तेरुक्तत्वेऽपि यथैक्यस्य निर्गुणस्य च सिद्धिस्तथा सत्यकामत्वादेस्तात्त्विकतासिद्धिः । भाषितं हि त्वयैव व्यतिहार इति सूत्रे 'यथा ध्यानार्थेऽपि सत्यकामत्वाद्युपदेश इव तद्गुण ईश्वरः सिद्ध्यति तद्वैक्यम्' इति ।।

न च जीवे ईश्वराभेदध्यानस्येश्वरे जीवाभेदध्यानस्योपासनाप्रकरणपठितस्यापि जीवेशाभेदः सगुणोपासनयाऽपि दृढीकार्य इत्येवंपरतयैक्यस्योपासाविषयत्वेऽपि सत्यकामत्वादिवन्नातात्त्विकत्वमिति वाच्यम् । वैषम्ये मानाभावात् । 'सोऽन्वेष्टव्यः स विजिज्ञासितव्यः'[4] इत्यादिना सत्यकामत्वादिविशिष्टस्य जिज्ञास्यत्वोक्तेश्च । न चोत्तरतापनीयोक्तोपास्तिर्ज्ञानरूपा उपास्तेर्विशिष्ट-

१. तैत्त.उ. २.९.
२. ब्र.सू. ३.३.३८
३. ऐत.उ.
४. छा.उ. ८.७.१.

विषयकत्वेन निर्विशेषे तदसंभवादिति वाच्यम् । शाब्दज्ञानस्यापि विशिष्टविषयकत्वनियमेन निर्विशेषे ज्ञानस्याप्यसंभवात् ।।

ब्रह्मणि आरोपितकर्तृत्वादीनामुपास्यत्वमिति अद्वैतसिद्ध्युक्तपक्षे दोषकथनम्

किञ्च ब्रह्मणि कर्तृत्वादीनामारोप्योपास्यत्वे नाम्नि ब्रह्मवाक्यानामिव ब्रह्मण्यपि कारणवाक्यानां समन्वयस्यावक्तव्यत्वेन समन्वयाद्यध्यायानारम्भः स्यात् । न च नाम्नो ब्रह्मविकारत्वेनासमन्वयेऽपि ब्रह्मणोऽविकारतया मुमुक्षुज्ञेयत्वेन कारणवाक्यानां तटस्थलक्षणकर्तृत्वद्वारा तत्र तात्पर्यात् समन्वयाद्यावश्यकतेति वाच्यम् । ब्रह्मणो मुमुक्षुज्ञेयत्वेऽपि कर्तृत्वादीनामुपास्यानां तदनिष्ठानामप्युपासासंभवेन तत्समन्वयस्यानपेक्षत्वात् । 'य आत्मा अपहतपाप्मा'[१] इत्यारभ्य 'सत्यकामः सत्यसङ्कल्पः सोऽन्वेष्टव्यः स विजिज्ञासितव्यः' इति सत्यकामत्वादीनामपहतपाप्मत्वादिभिः सह जिज्ञास्यत्वश्रवणेन ज्ञेयत्वाच्च । न चापहतपाप्मत्वादीनां स्वरूपतया जिज्ञास्यत्वेऽपि स्वरूपबहिर्भूतानां सत्यकामत्वादीनां न जिज्ञास्यत्वम् । स्वरूपस्याज्ञानादिसाक्षितया नित्यसिद्धत्वाज्जिज्ञासासंभवात् । धर्मिणि संशयासंभवात्तदज्ञाने बुभुत्साद्ययोगाच्च । 'एष सर्वेश्वर एष भूतपतिः'[२] इत्यादिधर्मानुक्त्वा तेषां 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति'[३] इति मुमुक्षुज्ञेयत्वोक्तेः । 'यः सर्वज्ञः सर्वविद्यस्यैष महिमा भुवि'[४] इत्युक्त्वा 'तद्विज्ञानेन परिपश्यन्ति धीराः'[५]

---

१. छा.उ. ८.७.१.
२. बृ.उ. ६.४.२२.
३. बृ.उ. ६.४.२२.
४. आथ.उ. २.१.८.
५. आथ.उ. २.१.९

इत्यपरोक्षप्रमाविषयत्वोक्तेः । 'तुरीयं सर्वदृक् सदा'[१] इति तुरीये सार्वज्ञ्यादिश्रुतेश्च । सार्वज्ञ्यादीनां पारमार्थिकत्वसिद्धेः ।।

### अपहतपाप्मत्वादिधर्माणां सत्यत्वसमर्थनम्

किञ्च अपहतपाप्मत्वादीनामुपास्यत्वे तेषां भूताकाशे संभवेन हृदये दहराकाशस्य ब्रह्मत्वप्रतिपादकदहराधिकरणविरोधः स्यात् । न च पापाभावस्याकाशे संभवेऽपि चेतनधर्मस्य सत्यकामत्वादेरसंभवः। नाम्नि ब्रह्मत्वस्येवाकाशे धीपूर्वकतदारोपसंभवात् । 'सत्यः सोऽस्य महिमा'[२] इति सत्यत्वश्रुतेश्च ।।

### सगुणज्ञानादेव मोक्षसमर्थनं, अद्वैतसिद्ध्युक्तपरिहारखण्डनं च

किञ्च 'पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनामृतत्त्वमेति' 'यदा पश्यः पश्यते रुग्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम् । तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति'[३] इत्यादिश्रुतिषु

'यो मामशेषदोषोज्झं गुणसर्वस्वबृंहितम् ।
जानात्यस्मै प्रसन्नोऽहं दद्यां मुक्तिं न चान्यथा ।।'[४]

'भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरम् ।
सुहृदं सर्वभूतानां ज्ञात्वा मां शान्तिमृच्छति ।।'[५]

इत्यादिस्मृतिषु च सगुणज्ञानादेव मोक्षोक्तेः । न चायमवान्तरमोक्षः। पुण्यादिराहित्यस्य निरञ्जनत्वादेश्च परममुक्तावेव संभवात् । न च

१. माण्ड.उ. २.४.
२. ऋ.सं. ६.३.४.
३. आथ.उ. ५.३.
४. अनु.उदाहृता स्मृतिः ३.३.११३
५. भग.गी. ५.२९

सगुणज्ञानस्य फलान्तरश्रवणान्न मोक्षहेतुत्वम् । 'नाहास्याब्रवित्कुले भवति'[१] इति निर्गुणज्ञानस्यापि फलान्तरश्रवणात् । संयोगपृथक्त्वन्यायेनोभयपरत्वस्य प्रकृतेऽपि साम्याच्च । अन्यथा निर्गुणधीजन्यमोक्षोऽवान्तरः । असन्नेव स भवतीत्युक्तशून्यतापत्तिरूपः परममोक्षः स्यात् । न च शून्येन सुखम् । सुखित्वस्यैव पुरुषार्थत्वेन सुखरूपतायाः शून्यरूपताया इवापुरुषार्थत्वात् ।।

किञ्च 'अन्तस्तद्धर्मोपदेशात्'[२] 'विवक्षितगुणोपपत्तेश्च'[३] 'अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात्'[४] 'अदृश्यत्वादिगुणको धर्मोक्तेः'[५] इत्याद्यधिकरणेष्वादृतत्वेन गुणानां सत्वम् । न चारोपितमादायोपपत्तिः । आरोपितगुणसंबन्धस्य जीवादावपि संभवेन 'भेदव्यपदेशाच्चान्यः'[६] 'शारीरश्च'[७] इत्यादिना तन्निरासानुपपत्तेः ।।

ब्रह्मणः निर्विशेषत्वसाधकानुभूतित्वहेतुनिराकरणम्

न च 'अनुभूतिर्निर्विशेषा अनुभूतित्वात्' इति व्यतिरेक्यनुमानम् बाधकम् । निर्विशेषत्वानुभूतित्वयोर्व्याहतत्वात् । न च निर्विशेषत्वादिकं न ब्रह्मभिन्नमित्यव्याघातः । हेतुसाध्यादिभागासंभवात्स्वरूपस्य नित्यसिद्धत्वेनानुमानवैय्यर्थ्याच्च । तन्मात्रज्ञानस्य विशेषाविरोधित्वाच्च ।।

१. आथ.उ. ६.९.
२. ब्र.सू. १.१.२०
३. ब्र.सू. १.२.२.
४. ब्र.सू. १.२.१८
५. ब्र.सू. १.२.२०
६. ब्र.सू. १.१.१२
७. ब्र.सू. १.२.२०

अद्वैतसिद्ध्युक्तनिर्विशेषत्वसाधकानुमानखण्डनम्

न च 'विशेषत्वं अभावप्रतियोगितावच्छेदकं अभावप्रतियोगिमात्रवृत्तित्वात् । घटत्ववत्' इत्यनुमानं मानम् । स्वोपरक्तबुद्धिजनकत्वरूपविशेषत्वस्य वाच्यत्वादौ केवलान्वयिन्यपि सत्वेन पक्षे हेतोरसत्वात् । व्यावर्तकत्वरूपविशेषत्वस्य पक्षत्वे ब्रह्मणि धर्ममात्राभावासिद्ध्यापत्याऽर्थान्तरत्वात् । न च गुणानां भिन्नत्वे असंबद्धत्वे च धर्मधर्मिभावहानिः । संबद्धत्वे च तत्संबन्धोऽपि भिन्न इत्यनवस्थेति वाच्यम् । व्यावहारिकेष्वनुपपत्तेस्त्वयापि समाधेयत्वात् । अन्यथा विरोधाध्यायस्यानारम्भापातात् । जीवप्रकृत्यादिकर्तृत्वादिनिरासकेक्षत्याद्यधिकरणानामुच्छेदापत्तेश्च । अघटनघटनापटीयस्याऽविद्यया सर्वोपपादने परेशाचिन्त्यशक्त्या सत्त्यानामेव तथोपपत्तेः ।।

ब्रह्मणः निर्विशेषत्वे प्रतिबन्दीकथनम्

किञ्च संबन्धस्यापि मिथ्यात्वादिवत्स्वनिर्वाहकत्वाच्च । अन्यथाऽऽनन्दस्य ज्ञानमात्रत्वे दुःखज्ञानमप्यानन्दः स्यात् । भिन्नत्वेऽखण्डार्थत्वहानिः । एवं ब्रह्म जगदभिन्नं चेत् मिथ्या स्यात्। भिन्नं चेद्भेदस्य सत्यत्वमित्यादितर्कबाधात् त्वदभिप्रेतं ब्रह्मापि न सिद्ध्येत् । श्रुतिबाधात्तर्काणामाभसत्वं त्विहापि समम् । एवं च शुष्कतर्कैः श्रौतगुणबाधे ब्रह्मापि बाधितं भवेत् । श्रुत्या शुष्कतर्कधिक्कारस्तु द्वयोः समः । न च ज्ञानादेर्धर्मत्वे स्वरूपस्य जडत्वाद्यापत्तिः । मानबलेनोभयोरपि ज्ञानत्वाद्युपपत्तेः । न च धर्मज्ञानेनैव व्यवहारोपपत्तौ धर्मिणो ज्ञानत्वादिकं न स्यात् । प्रमाणेन प्रयोजनमुखानिरीक्षणात् । पार्थिवयोः पुरुषदण्डयोः

पुरुषत्वदण्डत्वादिवत् आत्मत्वगुणत्वादिना ज्ञानादिरूपयोरपि धर्मिधर्मयोर्भेदोपपत्तेः । अहिकुण्डलन्यायेन गुणगुणिनोरभेदेऽपि भेदप्रतिनिधिविशेषेण भेदव्यवहारोपपत्तेश्च । विशेषं विनैकस्यैव त्वदभिमतनिर्धर्मकस्य सच्चिदानन्दादिव्यवहारानुपपत्तेः ।।

व्याहत्यादिदोषेण भगवतो निर्विशेषत्वखण्डनम्

किञ्च निर्विशेषत्वस्यापि विशेषत्वेन निर्विशेषत्वस्य भावाभावाभ्यां मूकोऽहमितिवत् व्याघातः । न च निर्विशेषत्वस्य विशेषत्वेऽपि विशेषत्वेनैव रूपेण निषेधो द्वितीयवाक्येन द्वितीयाभाव-रूपद्वितीयनिषेधवदुपपन्नः । अन्यथा विशेषत्वावच्छिन्ननिषेधप्रतीत यनुपपत्तिरिति वाच्यम् । स्वविहितद्वितीयाभावस्य स्वेनैव निषेधे व्याघातेन दृष्टान्तासिद्धेः । अतिप्रसक्तस्य द्वितीयत्वादेर्निषेध्यता-नवच्छेदकत्वाच्च । द्वितीयत्वेन निषेधे भावत्वेन च निषेधे ब्रह्मण एवाभावत्वापत्तेः । तज्ज्ञास्य च द्वैताविरोधित्वेन तत्सत्त्वोपपत्तेः। न हि भूतलज्ञानं घटतदभावान्यतरधीविरोधि ।।

किञ्च ब्रह्मणः शून्यानिर्वाच्यव्यावर्तकविशेषाभावे शून्यत्वमिथ्यात्वा-द्यापत्तिः, तत्सत्त्वे तु सविशेषत्वमेव । न च व्यावर्त्यसमानसत्ताक-विशेषाभावेऽपि व्यावृत्तिबोधसमसत्ताकधर्मेण भिन्नत्वनिर्विशेषत्व-योरुपपत्तिरिति वाच्यम् । मुक्तौ व्यावृत्तिबोधसमसत्ताकस्यापि धर्मस्याभावेन तदानीं शून्याद्यभेदापत्तेः ।।

किञ्च ब्रह्मणो निर्विशेषत्वे विचारविषयत्वानुपपत्तिः । 'इदमित्थमिति ज्ञानं जिज्ञासायाः प्रयोजनम् । इत्थंभावो हि धर्मोऽस्य न चेन्न प्रतियोगिता' ।। इति । न च विचारकाले कल्पिता धर्माः सन्ति । केनचिद्रूपेण ज्ञातं रूपान्तरेण चाज्ञातं

ह्यधिष्ठानम् । अज्ञानल्पितस्याज्ञानाविषयत्वेन तदकल्पिताः सत्या एव धर्मा आरोपार्थं स्वीकार्याः ।।

### ब्रह्मणः सगुणत्वेऽनुमानप्रमाणकथनम्

ब्रह्म स्वज्ञानाबाध्यप्रकारवत् स्वारोपितव्यावर्तकज्ञानाबाध्यप्रकारवद्वा अधिष्ठानत्वात् शुक्तिवत् । ब्रह्म स्वज्ञानाबाध्यदुःखव्यावर्तकधर्मवत् दुःखानात्मकत्वात् घटवत् । ब्रह्म स्वज्ञानाबाध्यप्रकारविशेष्यं सन्दिग्धत्वाद्विचार्यत्वात् निर्णेतव्यत्वाद्वा स्थाणुवत् । ब्रह्म वेदान्ततात्पर्यगोचरप्रकारवत् वेदान्तविचारविषयत्वात् । यदेवं तदेवं यथा कर्मकाण्डविचारविषयो धर्मः । ईश्वरः सदाऽऽप्तसमस्तकल्याणगुणः सदा तत्प्रेप्सुत्वे सति तत्र शक्तत्वात् । ईश्वरः सदा त्यक्तसमस्तदोषः सदा तज्जिहासुत्वे सति तत्यागे शक्तत्वात् । यश्चैवं स तथैवं, यथा चैत्र इत्याद्यनुमानमपि मानम् ।।

### पूर्वोक्तानुमानेष्वद्वैतसिद्ध्युक्तपरिहारखण्डनम्

न च दृष्टान्तसमसत्ताकधर्मसिद्धौ सिद्धसाधनम् । पक्षसमसत्ताकधर्माप्रसिद्ध्या साध्यासिद्धिरिति वाच्यम् । स्वपदस्य समभिव्याहृतपरत्वेन दृष्टान्ते तत्समसत्ताकस्य पक्षे तत्समसत्ताकस्य च धर्मस्य सिद्ध्या उक्तदोषाभावात् । न चानुमाने शब्दस्वभावोपन्यासोऽनुपयुक्तः । परार्थानुमाने पञ्चावयवसत्वेन शब्दस्वभावोपन्यासस्योपयोगात् ।।

### विशेषसामान्यस्थलयोः अनुमानबोधकस्वभावकथनम्

अत्रेदं बोध्यम् । पर्वतो वह्निमान् धूमात् । यो धूमवान् स शुक्लवह्निमान् इत्यादिवाक्यस्यानुमानानुपयोगात् । येन रूपेण साध्यं

प्रतिज्ञातं तेनैव हेतव्यापकत्वस्योदाहरणादौ प्रदर्शनीयतया प्रतिज्ञावाक्ये पक्षरूपधर्म्यादिपदार्थघटितरूपेणोदाहरणादौ दृष्टान्तरूपतद्घटितरूपेण साध्यबोधकतेति स्वभावो नानुमानपर्यवसायीति । सामान्यमुखव्याप्ति-स्थले हि सामान्यरूपेण गृहीतव्याप्तिकस्य हेतोर्विशेषरूपेण पक्षे ज्ञानात् विशेषरूपेण साध्यानुमितिरिति भावः ।।

न च वेदान्तावान्तरतात्पर्यमादाय सिद्धसाधनं । मुख्यतात्पर्योक्तौ च वेदान्तमुख्यतात्पर्यविषयप्रकाराप्रसिद्ध्या साध्याप्रसिद्धिरिति वाच्यम् । यत् यद्विचारविषयो भवति तत् तच्छब्दतात्पर्य-विषयप्रकारवदिति सामान्यव्याप्त्याऽनुमानप्रवृत्तेः । त्वदीयाभेदानुमान-वच्छुद्धस्यैव पक्षत्वान्न विशिष्टसमसत्ताकधर्ममादाय सिद्धसाधनादिकम् ।।

न च कल्याणगुणानां नित्यत्वेन तत्र प्रेप्साऽनुपपत्तिः । सदैकाकारतया तत्स्थापने नित्येच्छासत्वात् । एवं हीनानामेव नित्यजिहासोपपत्तेश्च । अधिष्ठानत्वसन्दिग्धत्वाद्यनुपपत्यादेरनुकूल-तर्कत्वाच्च । मृषाधर्मस्याज्ञानाविषयत्वेनाधिष्ठानत्वप्रयोजकस्या-ज्ञातधर्मस्य तात्विकत्वनियमात् ।।

।। इति सदनन्तगुणे ब्रह्मणि प्रमाणम् ।।

## १८. अथ निर्विशेषे प्रमाणभङ्गः

पदविधया वाक्यविधया चोपनिषदां निर्विशेषबोधकत्वनिराकरणम्

त्वन्मते जातिगुणक्रियादिरूपनिमित्ताभावेन तत्र वेदान्तानां न मुख्यवृत्तिः । आरोपितनिमित्तविषयकप्रतीतेर्निर्विशेषे न हि प्रामाण्यम्। गौण्याश्च मुख्यार्थगुणयुक्ततयैव, लक्षणायाश्च शक्यार्थ-संबन्धितावच्छेदकरूपवत्तयैव स्वार्थोपस्थापकत्वेन निर्विशेषे

वृत्तिमात्रायोगान्न निर्विशेषे पदविधया वाक्यविधया चोपनिषन्मानम्। असंसर्गत्वात् धर्मिज्ञानाधीनविचारजन्यं निर्धारितैककोट्यवलम्बिनं सप्रकारकनिश्चयं प्रत्येव तस्य हेतुत्वाच्च । न च संसर्गबोधक-वाक्यस्थपदानां सविशेषबोधजनकत्वनियमेऽपि अखण्डार्थक-वाक्यपदैर्लक्षणया बोधजनने न तन्नियमः । अखण्डार्थक-वाक्यस्यालीकत्वात् ।।

### सुप्तोत्थन्यायेन वृत्तिं विनापि निर्विशेषे वेदान्तानां प्रामाण्यमिति अद्वैतसिद्ध्युक्तपक्षखण्डनम्

न च वृत्तिं विनापि सुप्तोत्थापकवाक्यस्येव वेदान्तवाक्यस्य निर्विशेषे प्रमामाण्यम् ।

'अगृहीत्वैव संबन्धमभिधानाभिधेययोः ।
हित्वा निद्रां प्रबुध्यन्ते सुषुप्तौ बोधिताः परैः ।
जाग्रद्वन्न हि संबन्धं सुषुप्तौ वेत्ति कश्चन ।।'

इत्यादिना विनापि संबन्धं वाक्यस्य प्रामाण्यमुपपादितमिति वाच्यम् । सुषुप्तौ ज्ञानसामान्यसामग्र्यभावेन शाब्दबोधस्यासंभवात्। तत्सत्त्वे वृत्तिज्ञानस्यपि संभवाच्च । भेर्यादिशब्दवन्निद्राभङ्ग एव, शब्देन बोधो हि जागरे सति हेत्वन्तरेण ।।

किञ्च निर्विशेषविषयकज्ञानस्य निष्प्रकारकत्वे निर्विशेषत्वासिद्ध्या तत्सिद्ध्यर्थं विशेषाभावरूपविशेषविषयत्वमावश्यकम् । नच विशेषाभावस्य स्वरूपतया तत्स्फूर्तौ प्रमाणं नापेक्षत इति वाच्यम्। अप्रामाणिकस्वीकारेऽतिप्रसङ्गात् । शशशृङ्गादीनामपि सिद्ध्यापत्तेश्च ।।

।। इति निर्विशेषे प्रमाणभङ्गः ।।

## १९. अथ नित्यविग्रहोपपत्तिः

ईश्वरस्य नित्यविग्रहवत्वे श्रुतिस्मृत्यनुमानप्रमाणोदाहरणम्

विविधविचित्रविश्वकर्ता नित्यविग्रह ईश्वरः, अदृष्टाद्यभावेन जन्यविग्रहासंभवात् । अविग्रहस्य कर्तृत्वासंभवाच्च । न च तत्र मानाभावः । 'आदित्यवर्णं तमसः परस्तात्'[१] 'यदा पश्यः पश्यते रुग्मवर्णं'[२] 'ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलं'[३] 'विश्वतश्चक्षुः'[४] 'सहस्रशीर्षा पुरुषः'[५] इत्यादिश्रुतेः, 'पश्य मे पार्थ रूपाणि'[६] 'सर्वतः पाणिपादं तत्'[७] इत्यादिस्मृतेः, 'ब्रह्म सविग्रहं स्रष्टृत्वात् पालयितृत्वात् उपदेष्टृत्वात्' इत्याद्यनुमानाच्च । विग्रहं विनापि नित्यज्ञानेनैव कर्तृत्वे ज्ञानेच्छे अपि विना नित्यप्रत्नेनैव स्याताम् ।।

उदाहृतवाक्यानामुपासनादिपरत्वनिषेधः

न चोपासानापराण्युक्तवाक्यानि । 'य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते'[८] इत्यत्र वर्तमानत्वेनापरोक्षज्ञानविषयत्वेन चोक्तेः । न हि योषित्यग्निर्दृश्यत इत्युच्यते । न च विराड्रूपमिदम् । 'तमसः

---

१. तैत्त.आर. 'सहस्रशीर्षे'त्यनुवाके 'वेदाहमेतं पुरुषं महान्तं आदित्यवर्णं तमसस्तु पारे' इति पाठः । तत्रैव 'अद्भ्यः संभूतः' इत्यनुवाके 'आदित्यवर्णं तसमः परस्तात्' इति पाठः ।

२. आथ.उ. ३.३.

३. तैत्त.आर.

४. ऋ.सं. १०.८१.३.

५. ऋ.सं. १०.९०.१

६. भ.गी. ११.५

७. भ.गी. १३.१४

८. छा.उ. १.६.६.

परस्तात्' इति प्रकृतिपरत्वोक्तेः । 'योऽस्मात्परस्माच्च परः' इति श्रुत्या विश्वस्माद्व्यतिरिक्तोक्तेश्च । न च 'सर्वतः पाणिपादं' इत्यादिकं सर्वात्मकतया सर्वान्तर्यामितया च नियम्यजीवपाण्यादिपरं, सर्वतः पाणिपादत्वादेरसंभवादिति वाच्यम् । जीवपाण्यादौ लक्षणायां मानाभावात् । पाण्यादेश्चक्षुरादिसर्वाङ्गकार्यकरत्वपरत्वात् । 'तदेवानुप्राविशत्'[१] 'ब्रह्मविदाप्नोति परं'[२] इत्यादिश्रुत्युक्तस्य सर्वगते प्रवेष्टृत्वस्य गम्यत्वस्य विग्रहं विनाऽनुपपत्तेश्च । 'तमेवं विद्वानमृत इह भवति'[३] 'यदा पश्यः' इत्यादिश्रुतौ पूर्वप्रक्रान्तसहस्रशीर्षत्वादिविशिष्टपरामर्शकतच्छब्दयुक्तवाक्येन विग्रहज्ञानस्यैव मोचकत्वोक्तेश्च ॥

अपाणिपादमित्यादिश्रुतिविरोधपरिहारः

'आपाणिपादो जवनो गृहीता'[४] इत्यादिश्रुतिः 'अदुःखमसुखं समं'[५] 'न प्रज्ञानघनः'[६] इति सुखज्ञाननिषेधकवाक्यवत् प्राकृतपाण्यादिराहित्यपरा । 'सत्वादयो न सन्तीशे यत्र च प्राकृता गुणाः' इति वैष्णवोक्तेः । 'नाभ्या आसीदन्तरिक्षं'[७] इति भूतकारणत्वोक्त्या अभौतिकत्वसिद्धेः । 'एकोनारायण आसीन्न ब्रह्मा न च शङ्करः'[८] इति श्रुत्या महाप्रळये नारायणस्थित्युक्त्या नित्यविग्रहसिद्धेश्च। न च नारायणशब्दो मायोपहितब्रह्मपरः । विग्रहविशिष्टे योगरूढत्वात्।

---

१. तैत्त.उ. २.६

२. तैत्त.उ. २.१

३. यजुर्वेदपुरु.सू., तै.आ. १३ (चित्त्युपनिषत्)

४. ब्र.सू.भा. २.१.३२. इत्यत्रोदाहृता श्रुतिः ।

५. भाग. ३.२६.१६.

६. माण्ड.उ. १.२.१.

७. ऋ.सं. १०.९०.१४.

८. अनु. आनन्दमयाधिकरणे १.१.१७५ इत्यत्रोदाहृता श्रुतिः ।

मायोपहितत्वस्य शङ्करादिसाधारण्याच्च । 'पुराकल्पापाये स्वकृतमुदरीकृत्य विकृतं शेते' इति श्रुत्या प्रलये विग्रहोक्तेश्च । न च ब्रह्माण्डस्य तदुदरप्रवेशमात्रेण प्रलयो सिद्धः । 'यथोर्णनाभिः सृजते गृह्णते च'[१] इत्यादिश्रुत्योर्णानाभिवदुदरप्रवेशस्यैव प्रलयत्वोक्तेः । 'संहृत्य सर्वं निजदेहसंस्थं कृत्वाऽशु शेते जगदन्तरात्मनि' इति स्मृतेश्च ।

वेदे भूरिप्रयोगाच्च गुणयोगाच्च शार्ङ्गिणि ।
तस्मिन्नेव ब्रह्मशब्दो मुख्यवृत्तो महामुने ।।

यस्मिन् प्रयुज्यमाने तु गुणयोगः सुपुष्कलः ।
तत्रैव मुख्यवृत्तोऽयमन्यत्र ह्युपचारतः ।।

इति गारुडे विग्रहस्य मुख्यब्रह्मशब्दार्थत्वोक्तेश्च ।।

### अहिकुण्डलन्यायेन भगवतः विग्रहोपपादनम्

'आनन्दशरीरं ब्रह्म' 'आनन्दरूपममृतं यद्विभाति'[२] 'आप्रणखात् सर्व एवानन्दः'[३] 'यदात्मको भगवांस्तदात्मिका व्यक्तिः । किमात्मको भगवान् ज्ञानात्मक ऐश्वर्यात्मकः'[४] इत्यादिश्रुतेर्भेदाभावेऽप्यहिकुण्डलन्यायेन विग्रहत्वोपपत्तिः । षोडषसहस्रसंख्याकानां विवाहे एकस्मिन्नेव मुहूर्ते वसुदेवादीनां स्वस्य चानेकत्ववदेकस्यानेकरूपवत्वोपपत्तेः । 'अणोरणीयान्महतो महीयान्'[५] इत्यादि-

१. आथ.उ. १.६.
२. आथ.उ. २.१.९
३. मुण्ड.उ. २.२.८.
४. ब्र.सू.भा. २.२.४१ इत्यत्रोदाहृता श्रुतिः ।
५. काठ.उ. १.२.२०.

श्रुतेरणुत्वमहत्वादिकमपि तत्रास्ति । 'स्वाभाविकी ज्ञानबलक्रिया च'[१] इत्यादिश्रुत्युक्ता क्रियाऽपि तत्रोपपन्ना । विरोधस्त्वचिन्त्यशक्त्या परिहार्यः ।।

विरोधपरिहारपूर्वं अणुत्वमहत्वयोः विषये प्रत्यक्षोदाहरणम्
अद्वैतसिद्ध्युक्तपरिहारखण्डनं च

अंकरथादिस्थस्य मुखे ब्रह्माण्डादिकं पश्यतां श्रीयशोदार्जुनादीनां प्रत्यक्षमप्यणुत्वमहत्वयोर्मानम् । न हि परमाप्तेन स्वैकशरणा मिथ्यार्थं प्रदर्श्य प्रतारणीयाः ।।

'दत्तं दुर्वाससं सोममात्मेशब्रह्मसंभवान्'[२] इत्यादिस्मृत्याऽऽत्मशब्दस्य विष्णौ रूढिसत्वात् 'आत्मनि चैवं विचित्राश्च हि'[३] इति सूत्रात् 'विचित्रशक्तिः पुरुषः पुराणः'[४] इत्यादिश्रुतेश्च विचित्रशक्तेरुक्तत्वेन चानन्दस्य नित्यत्ववदपराधीनत्ववच्च विग्रहत्वस्यापि संभवाच्च ।।

'नैषा तर्केण मतिरापनेया'[५] इत्यादिश्रुत्या तर्कागम्यत्वोक्तेश्च । पिशाचादिवदन्तर्धानशक्त्या अनुपलंभसंभवाच्च । न चाज्ञत्वादिकमपि तत्रास्तु । अज्ञत्वस्याविरोधोपपादकैश्वर्यविरोधित्वात् । ऐश्वर्याविरोधिनामेव हि परस्परविरुद्धानामचिन्त्यशक्त्या समावेश उपपन्नः ।।

---

१. श्वेता.उ. ६.८.
२. भाग.पु. ४.१.३३.
३. ब्र.सू. २.१.२९
४. ब्र.सू.भा. २.१.२९ इत्यत्रोदाहृता श्वेताश्वतरश्रुतिः ।
५. काठ.उ. १.२.९.

भगवद्विग्रहस्यानित्यत्वसाधकाद्वैतसिद्ध्युक्तानुमाननिराकरणम्

यत्तु 'भगवद्विग्रहो न नित्यः महत्वे सति रूपवत्वात् विग्रहत्वात् अस्मद्विग्रहवत्' इति कस्यचित् प्रलापः । तन्न । प्राकृतत्वस्योपाधित्वात्। न च साधनव्यापकः । भगवद्विग्रहे प्रकृतिकार्यत्वरूपप्राकृतत्वस्य श्रुत्यादिना बाधात् । भोगादृष्टाद्यभावेन धर्मिग्राहकमानेन नित्यविग्रहस्यैव सिद्धेः । अप्रामाणिकप्रागभावध्वंसकल्पनागौरवाच्च। विग्रहवत्वेन दुःखं चेत् तत्स्रष्टृत्वादिनाऽपि तत्स्यात् । स्वतन्त्रत्वादिना समाधिरपि समः । अप्राकृतानन्दमयविग्रहस्य दुःखाभावादिनैव व्याप्तेश्च । सर्वैरपि ईश्वरे लीलाविग्रहाङ्गीकाराच्च ।

'प्रकृतिं परुषं चापि प्रविश्यात्मेच्छया हरिः ।
क्षोभयामास संप्राप्ते सर्गकालेऽव्याव्ययौ ।।'[१]

इति प्रकृतिक्षोभात् प्राक् विग्रहोक्तेः ।

'मया प्रसन्नेन तवार्जुनेदं रूपं परं दर्शितमात्मयोगात् ।
तेजोमयं विश्वमनन्तमाद्यं यन्मे त्वदन्येन न दृष्टपूर्वम् ।।'[२]

सुदुर्दर्शमिदं रूपं दृष्टवानसि मां यथा ।
देवा अप्यस्य रूपस्य नित्यं दर्शनकाङ्क्षिणः ।।

नाहं वेदैर्न तपसा न दानेन न चेज्यया ।
शक्य एवंविधो द्रष्टुं दृष्टवानसि मां यथा ।।

भक्त्या त्वनन्यया शक्य अहमेवंविधोर्जुन ।
ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परंतप ।।[३]

इति स्मृत्या ज्ञेयत्वं मुक्तावप्यत्वं चोक्तम् ।।

१. ब्र.सू.भा. २.१.२१ इत्यत्रोदाहृतकौर्मवचनम् ।
२. भ.गी. ११.४७
३. भ.गी. ११.५२-५४

### अवतारविग्रहाणां नित्यत्वसमर्थनम्

अवतारविग्रहा अपि नित्या एव । तथा हि– 'अन्तरतः कर्म सर्पंतं' इत्यारभ्य 'पूर्वमेवाहासं' इति श्रुतेः । उत्पत्तिरप्याविर्भाव एव । 'ततोऽवबोधायाच्युतभानुना देवकीगर्भसंध्यायामाविर्भूतं महात्मना'[१] इति वैष्णवोक्तेः ।

यत्तु क्वचिदवतारविग्रहे क्षतरुधिरादिकं विग्रहत्यागश्चेति तदसुरणां मोहाय । सदृशदेहान्तरं दृष्ट्वा तद्विसर्जनरोदनादिकमपि तदर्थमेव । हरिलोकोऽपि रमादीनां क्रिडार्थं नित्यो(ऽ)सि[२] सहस्रस्थूणे वितते दृढे उग्रे यत्र देवानामधि देव आस्ते क्षये तमस्यरजसः पराके', 'योऽस्याध्यक्षः परमे व्योमन्', 'तद्विप्रासो विमन्यवो जगृवांसः समिन्धते'[३] । 'यत्र पूर्वे साध्याः सन्ति देवाः'[४] 'तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः'[५] इति श्रुतेः ।

'लोकं वैकुण्ठनामानं दिव्यं षाड्गुण्यसंयुतम् ।
अवैष्णवानामप्राप्यं गुणत्रयविवर्जितम् ।।'

इति पञ्चरात्रोक्तेः ।

न देवा अपि पश्यन्ति सर्वतेजोमयं शुभम् ।
अत्यर्कानलदीप्तं तत्स्थानं विष्णोर्महात्मनः ।।

इत्यादिभारतोक्तेश्च ।।

।। इति नित्यविग्रहोपपत्तिः ।।

---

१. अत्र पङ्क्तिः त्रुटिता
२. अत्र पङ्क्तिः त्रुटिता
३. ऋक्.सं. १.२१.२२.
४. ऋक्.सं. १०.९०.१६.
५. ऋक्.सं. १.२२.२०.

## २०. अथ अभिन्ननिमित्तोपादानत्वभङ्गः

### ब्रह्मणः विवर्तोपादानत्वनिराकरणम्

ईश्वरो विश्वस्य कर्तृरूपं निमित्तकरणं, प्रधानमुपादानं, कालादृष्टादिसहकारिकारणम् ।

निमित्तमात्रमेवासौ सृज्यानां सर्गकर्मणि ।
मयाऽध्यक्षेण प्रकृतिः सूयते सचराचरम्[1] ।। इति स्मृतेः ।

न च ब्रह्म विश्वोपादानम् । विकारापत्तेः । न चातात्विकान्यथाभावरूपविवर्तोपादानत्वं ब्रह्मणोऽङ्गीक्रियते । अन्यथाभावो ह्यन्यथाभवनम् अन्यथाभानमात्रं वा । आद्ये विकारः स्यादेव । न द्वितीयः । निर्विशेषस्य स्वप्रकाशतयाऽज्ञानाद्यधिष्ठानतया भासमानस्यान्यथाभानासंभवात् । अन्यथाभानस्यावरकप्रयुक्तत्वेन तस्यापि तद्विवर्तत्वेनावरकान्तरापेक्षायामनवस्थाद्यापत्तेश्च ।।

### अद्वैतसिद्ध्युक्तप्रमेयखण्डनम्

किञ्च अविद्याविषयीकृतं ब्रह्म जगदात्मना भातीति त्वन्मतम्। तथा चाविद्याया उपादानत्वकल्पनं व्यर्थम् । अविद्यान्वयव्यतिरेकयोर्निमित्ततामात्रेणान्यथासिद्धेः । न च घटादेः परिणाम्यपेक्षादर्शनेनाकाशादावविद्यायाः परिणाम्युपादानत्वम् । घटादिकार्ये स्वसमसत्ताककर्तृकत्वदर्शनेन शुक्तिरूप्यादावपि तथात्वापत्तेः । न च

---
१. भग.गी.

विकारित्वेनाविद्याकल्पनम् । अविद्याविषयीकृतब्रह्मण एव ह्यतात्त्विकविकारः तात्त्विकनिर्विकारत्वाविरोध्यस्तु । अविद्याया उपादनत्वं किमर्थम् । न च कार्यापेक्षितस्वसमसत्ताकोपादान-कत्वेनाविद्याया उपादानत्वं शुक्तिरूप्येऽपि प्रातिभासिकमज्ञानमस्त्येवेति वाच्यम् । इदं रूप्यमित्यत्राज्ञानप्रतीत्यभावेनाप्रतीतस्य प्रातिभासिकत्वाभावेन प्रातिभासिकाज्ञाने मानाभावेन रूप्ये व्यभिचारात् । अन्यथा रूप्यस्य स्वसमसत्ताककर्तृकत्वापत्तेश्च । न चैकस्यैवाविद्योपहितत्वेनोपादानत्वमविद्यापरिणामेच्छाकृत्या-श्रयत्वेन निमित्तत्वमित्यभिन्ननिमित्तोपादानत्वमुपपन्नम् । इच्छाद्याश्रयस्याविद्योपहितस्य चाविद्याधीनत्वेनाविद्यादिभ्रमाधि-ष्ठानत्वासंभवात् । अधिष्ठानस्याध्यस्तादधिकसत्ताकत्वनियमात् । अतः शुद्धमधिष्ठानं विशिष्टं निमित्तमित्यभिन्ननिमित्तोपादनं ब्रह्मेति निरस्तम् । विशिष्टस्य मिथ्याभूतस्य शुद्धाभिन्नत्वासंभवात् ।।

।। इत्यभिन्ननिमित्तोपादानत्वभङ्गः ।।

## २१. अथ परमते निमित्तत्वभङ्गः

जगतः कल्पितत्वेन ब्रह्मणः कर्तृत्वानुपपत्तिप्रदर्शनम्

कार्यस्य कल्प्यत्वे कुलालादिवदुपादानगोचरप्रयत्नादिमत्वं ब्रह्मणो न स्यात् । न हि कल्पितं रूप्यादिकं प्रति भ्रान्तस्यान्यस्य वा कर्तृत्वं प्रामाणिकम् । न च रूप्यादौ साक्ष्येव कर्ता । न ह्यदर्शनमात्रेण कर्त्रपलापः । त्वन्मते सर्वज्ञकर्तुरपलापापत्तेरिति वाच्यम् । इदमंशावच्छिन्नस्येदमाकारवृत्त्यवच्छिन्नस्य वा त्वदभिमत-साक्षिण इच्छाद्यभावेन कर्तृत्वासंभवात् । सर्वज्ञे कर्तरि श्रुत्यादेरिव

शुक्तिरूप्यादिकर्तरि मानस्याभवात् । न हि 'नामरूपे व्याकरवाणि' इत्युक्तेश्वरस्येव शुक्तिरूप्यं करवाणीति कस्याप्यनुभवः ।।

ब्रह्मणः अध्यासद्रष्टृत्वनिराकरणम्

न च भ्रान्तवदध्यासद्रष्टृत्वम् । भ्रान्तस्य प्रेक्षापूर्वकमारोपितकर्तृत्वाभावात् । न च मायाविवद्व्यामोहकत्वम् । व्यामोहनीयानामपि कल्पितत्वेन तद्दर्शनेन चेशस्य भ्रान्तत्वापत्तेः । न ह्यैन्द्रजालिकः स्वकल्पितानेव मोहयति । जन्मादिसूत्रेण लब्धसार्वज्ञ्यस्फोरणार्थं शास्त्रयोनित्वादिति सूत्रमिति त्वन्मतस्य भङ्गापत्तेश्च । अध्यस्तद्रष्टुर्व्यामोहकस्य सार्वज्ञ्यासंभवात् । न च करवाणीति संकल्पपूर्वकं कर्तृत्वं मायिन्यप्यस्ति । कल्पितपदार्थकर्तृत्वाभावेऽपि प्रतारकस्य मायिनः करवाणि करोमीत्याद्युक्तिसंभवेऽपि परमाप्तस्येशस्य वास्तवकर्तृत्वं विना तथोक्त्यसंभवात् । न च मायावित्वेऽपि सृज्यमाणमायिकविश्वाकारमायासत्वांशपरिणामाधारतया सर्वज्ञलाभः। माया मोहं विना मायिनो मायिकानां दर्शनाभावेन सार्वज्ञ्यस्य दूरापस्तत्वात् । स्वस्मिन् स्वमायामोहनस्य व्याहतत्वात् । उक्तं च प्रच्छन्नबौद्धं प्रति व्यासवार्तिके–

'अधिष्ठाने तथा भ्रान्ते भ्रामके च न कर्तृता ।
लौकिकी कृतिमत्ता तु न दृष्टारोपितं प्रति । इति ।

।। इति परमते निमित्तत्वभङ्गः ।।

## २२. अथ ब्रह्मणो विश्वोपादानत्वे प्रमाणभङ्गः

'जनिकर्तुः प्रकृतिः' इति सूत्रार्थवर्णनपूर्वं 'यतो वा इमानि' इति श्रुतेरुपादानपरत्वनिराकरणम्

ब्रह्मण उपादानत्वे मानाभावः । न च 'यतो वा इमानि भूतानि जायन्ते'[१] इति श्रुतौ 'जनिकर्तुः प्रकृतिः'[२] इति सूत्रे प्रकृत्यर्थ-विहितपञ्चमी मानम् । वृत्तौ 'पुत्रात्प्रमोदो जायते इत्यनुपादानेऽपि पञ्चमीदर्शनात् प्रकृतिपदं हेतुमात्रपरम्' इत्युक्तेः । न्यासेऽपि इदमेवाश्रित्य 'असति प्रकृतिग्रहणे उपादानस्यैवापादानसंज्ञा स्यात् प्रत्यासन्नत्वान्नेतरस्य प्रकृतिग्रहणात्कारणमात्रस्य भावति' इति प्रकृतिपदमनुपादानेऽप्यपादानसंज्ञासिद्ध्यर्थमित्युक्तत्वात् । महाभाष्ये– 'अयमपि योगः शक्योऽवक्तुं गोलोमाविलोमभ्यां दूर्वा जायन्ते अपक्रामन्ति तास्तेभ्यः' इत्यादिना लोमादीनां दूर्वादीन् प्रत्यवधित्वात्। 'ध्रुवमपायेऽपादानं'[३] इत्यनेनैवापादानसंज्ञासिद्धेरिदं सूत्रमनारभ्यमिति सूत्रं प्रत्याख्यातम् । कैय्यटेऽपि– 'अपक्रमणावधित्वे लोमादिषु कार्यस्य प्रतीतिर्न संभवतीत्याशङ्क्य बिलान्निष्क्रामतो दीर्घभोगस्य भोगिनः अविच्छिन्नतया तत्रोपलब्धिवत् कार्यस्यापि दूर्वादिस्तत्रोपलब्धिः' इत्यवधित्वमेवोपपादितम् । अत उपादान एव जनिकर्तुरित्यादिना पञ्चमीति न नियमः । न च 'पशुना यजेत' इत्यादौ पशुपदस्य पशुमात्रवाचकत्वेऽपि 'छागस्य वपाया' इति वाक्यशेषात् पशुविशेषपरत्ववदत्रापि कारणमात्रार्थत्वेऽप्युपादान-परत्वमिति वाच्यम् । तद्वदत्रोपादानार्थकत्वनिश्चायकवाक्यशेषाभावात्।।

---

१. तैत्त.उ. ३.१

२. पा.सू. १.४.३०.

३. पा.सू. १.४.२४

## 'आत्मनः आकाशः सम्भूतः' इत्यत्रात्मन इत्यस्योपादानपञ्चमीत्वनिराकरणम् अद्वैतसिद्ध्युक्तसमाधानखण्डनं च

न च 'आत्मन आकाशः संभूतः'[१] इत्यादौ उपादानपञ्चम्यां 'सच्च त्यच्चाभवत्' इति वाक्यशेषेण 'सोऽकामयत'[२] इत्येतच्छाखान्तरस्थवाक्येन च प्रतीतसामानाधिकरण्यं नियामकमिति वाच्यम् । 'स तपोऽतप्यत । स तपस्तप्त्वा । इदं सर्वमसृजत् । तत्सृष्ट्वा तदेवानुप्राविशत् । तदनु प्रविश्य सच्च त्यच्चाभवत्' इत्यादिश्रुत्या सदादिभवनस्य जगत्सृष्टितदनुप्रवेशानन्तरभावित्वेन जगत्सृष्टित्वानुपपत्तौ परमेश्वरस्य सत्त्वादिगुणाभिव्यक्तिपरत्वेन ब्रह्मोपादानत्वस्याप्रमाणत्वात् । न ह्युपादानं कार्ये पश्चात्प्रविशति । न च 'मुखं व्यादाय स्वपिति' इतिवत् 'तदनु प्रविश्य' इत्यस्योपपत्तिः । मुखव्यादानोत्तरकालिकस्वापमादायैव वैय्याकरणैरेतत्प्रयोगस्य समर्थनात् । उक्तं च वर्धमानेन– 'मुखं व्यादाय स्वपिती'त्यत्र व्यादानोत्तरमपि स्वापानुकृत्या तदभिप्रायेण त्त्वाप्रत्यय इति सुप्त्वा व्यादत्ते' इति । 'व्यत्ययात् प्रयोगः' इति प्रेत्यभावपरिक्षायां वाचस्पतिमिश्राः । न चेश्वरभिन्नजीवरूपेणात्र प्रवेशः श्रुतेर्विवक्षित इति नानुपपत्तिरिति वाच्यम् । 'समानकर्तृकयोः पूर्वकाले त्त्वा'[३] इति व्याकरणस्य भिन्नकर्तृकत्वेऽनुपपत्तेः । 'इदं सर्वमसृजत्'[४] इत्यनेन पौनरुक्त्यापत्तेश्च । श्रुतावनुपदवैय्यर्थ्याच्च ।

न च निमित्तत्वमात्रभ्रान्तिव्युदासाय सार्थक्यम् । भ्रमाधिष्ठाने शुक्त्यादावभावादिति प्रयोगाभावात् तत्प्रयोगविषयपरिणाम्युपादानताया

१. तैत्त.उ. २.३
२. तैत्त.उ. २.१४
३. पा.सू. ३.४.२१.
४. तैत्त.उ. २.१४

ब्रह्मणस्त्वयाऽनङ्गीकाराच्च । न च शुक्ते रूप्यानुपादानत्वाच्छुक्ती रूप्यमभवदिति व्यवहाराभावः । इदं रूप्यमित्यत्र रूप्याभिन्नतया प्रतीतेदमर्थस्य रूप्योपादानतया त्वदभिमतस्येदंरूप्यमभवदिति व्यवहाराविषयत्वात् ।।

'सोऽकामयत' इति श्रुतिविरोधपरिहारः

'सोऽकामयत बहुस्यां'[१] इत्यादिवाक्यं तु परेशस्य 'आजायमानो बहुधा विजायते'[२] 'यदेकमव्यक्तमनन्तरूपं'[३] इत्यादिश्रुतिसिद्धतत्तदनन्तपदार्थप्रेरकानन्तरूपैर्बहुभावसंकल्पमाह । न च स्वस्यानन्तरूपैर्बहुभावं संकल्प्येदं सर्वमसृजतेति जगत्सर्जनानुपपत्तिः । गुरुः स्यामिति संकल्प्य शिष्यसंपादनवत् नियामकरूपैर्बहुभावस्य नियम्यसापेक्षत्वान्नियम्यं सृष्ट्वा नियामकरूपैः प्रवेशोक्त्युपपत्तेः । सृष्टेः प्रागन्तःकरणाभवेन तद्विशिष्टाहमर्थाभावेनोत्तमपुरुषानुपपत्तेश्च। एतेन 'तदैक्षत बहुस्यां प्रजायेय' इत्येदपि व्याख्यातम् ।।

किञ्च 'तत्तेजोऽसृजत'[४] इति यत्तेजःप्रभृतिसृज्यं तत्तदात्मना हि त्वया बहुभावो वाच्यः । 'तत्तेज ऐक्षत'[५] इत्यादिश्रुत्या चेतनत्वश्रवणाच्चेतनं प्रत्युपादानता तवापीष्टा । न च बहुस्यामित्यत्र वहुपदं सृज्यपरमेव, नियामकरूपाणामीश्वराभिन्नतया नित्यसिद्धत्वेन तत्रेच्छाविरहादिति वाच्यम् । 'भूतग्रामः स एवायं'[६] इति स्मृतेः

१. तैत्त.उ. २.१४
२. ब्र.सू.भा. १.३.४ इत्यत्रोदाहृता श्रुतिः । (तैत्त.आ. ३.१३.१)
३. तैत्त.आ.
४. छा.उ. ६.२.३
५. छा.उ. ६.२.४
६. भग.गी. ८.१९.

सत्कार्यवादे सृज्यानामपि नित्यसिद्धत्वेन तत्रापीच्छासंभवात् । रूपाणां नित्यसिद्धत्वेऽप्याविर्भावस्यैवेच्छाविषयत्वात् । बहुस्यामिति संकल्प्य तेजःप्रभृतिसर्जनं गुरुः स्यामिति संकल्प्य शिष्यसंपादनवदिति सूपपन्नम् । न चाविद्यापरिणामविशिष्टे अहमिति प्रयोगसंभवेनोत्तमपुरुषोपपत्तिः। उक्तसंकल्पात्प्रागविद्यापरिणामसंभवाभावात् ।।

'तदाऽऽत्मानं स्वयमकुरु' इति श्रुतेः ब्रह्मण उपादानत्वपरत्वनिरासः

न च 'तदाऽऽत्मानं स्वयमकुरुत'[१] इति श्रुतिस्तत्र मानम् । अन्तर्यामितयाऽऽत्मन आविर्भावोक्तेः । अन्यथा कुरुतेति सत्वोत्त्ययुक्तेः । न चाकाशाद्यात्मना क्रियमाणत्वेऽपि स्वरूपेण सत्वोपपत्तिः। क्रियमाणत्वेन सत्वप्रतीतेः स्वरूपमात्रपरत्वोक्तेर्निर्मूलत्वात् । आरोपाधिष्ठाने इदमर्थे आत्मानं रूप्यात्मना कुरुतेति व्यवहाराभावाच्च ।।

ब्रह्मणि लयोक्त्या ब्रह्म जगदुपादानमिति पक्षखण्डनम्

न च तत्र लयोक्त्या तदुपादानम् । अनुपादान एव लूतायां तन्तूनां लयदर्शनात् । न च लूतोपादानम् । तन्नाशेऽपि तन्त्ववस्थानात् । न च लूतायां न लयः किन्तु प्रवेशमात्रम् । 'यथोर्णनाभिः सृजते गृह्णते च'[२] इति श्रुत्योर्णनाभिवदेवेशस्य संहर्तृत्वोक्तेः । न च 'तज्जलानि'[३] इत्यादिना तत्र लय उक्तः । सत्कार्यवादे संश्लेशस्यैव लयपदार्थत्वात् । 'भूतग्रामः स एवायं' इति स्मृतेः ।।

---

१. तैत्त.उ. २.१५

२. आथ.उ. १.६.

३. छा.उ. ३.१४.१.

### 'तद्भूतयोनिं' इति श्रुतेरुपादानपरत्वनिराकरणम्

न च 'तद्भूतयोनिम्'[१] इति श्रुतिस्तत्र मानम् । अनुपादान एव मातरि योनिशब्दप्रयोगात् । इदमर्थे रूप्याधिष्ठाने योनिशब्दाप्रयोगाच्च। 'योनिष्ट इन्द्र सदन'[२] इत्यादिश्रुतौ निमित्त एव प्रयोगाच्च ।।

### 'सर्वं खल्विदं ब्रह्म' इति श्रुतेरुपादानपरत्वनिराकरणम्

न च 'सर्वं खल्विदं ब्रह्म'[३] इति सामानाधिकरण्यश्रुतिस्तत्र मानम्। 'सर्वं समाप्नोषि ततोऽसि सर्वः'[४] इति स्मृत्या व्यापकत्वपरतया श्रुतेर्व्याख्यातत्वात् । ब्रह्मण्यारोपिताभेदपरत्वे शुक्ताविदं रूप्यमिति शब्दस्येव श्रुतेरप्रामाण्यापत्तेः । 'शान्त उपासीत' इत्युपासाविधिशेषत्वेनार्थतत्वपरत्वाभावाच्च ।।

### ब्रह्मणः उपादानत्वसाधकविविधविकरत्वादिहेतुनिराकरणम्

न च 'महाभूतानि असद्वस्तुप्रकृतीनि सत्स्वभावानुरक्तत्वे सति विविधविकारत्वात् मृदनुस्यूतघटादिवत्' इत्यनुमानं तत्र मानम् । सत्प्रधानोपादानकत्वेनार्थान्तरत्वात् । न च प्रधानं न सत् । व्यावहारिकसत्वस्य प्रधाने त्वयाऽभ्युपगमात् । तस्यैव घटादौ प्रतीतेः। अन्यथा तत्र दृश्यत्वादेर्व्यभिचारापत्तेः । खण्डो गौर्मुण्डो गौरिति गोत्वानुरक्तखण्डादौ व्यभिचाराच्च । न च तदनुरक्तत्वे सति तद्विकारत्वं हेतुः । त्वदभिमतसद्विकारत्वस्य महाभूतादावसिद्धेः । न च सद्भिन्नं गोत्वादिकं नास्ति । शुद्धस्य घटादितो

---

१. आथ.उ. १-६.

२. ऋ.सं. ७.२४.१.

३. छा.उ. ३.१४.१.

४. भ.गी. ११.४०.

व्यावृत्तगोत्वादिरूपताया असंभवात् विशिष्टस्य घटाद्यधिष्ठानत्वासंभवात्। अधिष्ठानस्याध्यस्ताधिकसत्ताकत्वनैय्यत्यात् । असत् खपुष्पमसन्नृशृङ्गमित्यादावसतोऽपि खपुष्पाद्युपादानत्वापत्तेः । सद्ब्रह्म सद्ब्रह्मेति सत्स्वभावानुरक्तत्वेन ब्रह्मणोऽपि सदुपादानकत्वापत्तेश्च ।

'ब्रह्म न द्रव्योपादानं चेतनत्वाच्चैत्रवत्' 'जगन्नानन्दप्रकृतिकं तत्स्वभावाननुरक्तत्वात् । यत् यत्स्वभावाननुरक्तं न तत्तत्प्रकृतिकं यथा घटस्वभावाननुरक्तं पटादि न घटोपादानकम्' इत्यादि सत्प्रतिपक्षाच्च ।।

अद्वैतसिद्ध्युक्तव्यभिचारपरिहारः

न च द्वितीयानुमाने कपालस्वभावाननुरक्ते घटे व्यभिचारः । कपालं घट इत्यप्रतीतावपि मृद्घट इति मृत्वेनानुरक्तत्वप्रतीतेः । न च सत्वेनेहाप्यनुरक्तप्रतीतिरस्ति । सविशेषस्य मृत्वकपालत्वाभ्यां भानाभानयोः संभवेऽपि निर्विशेषस्य सत्वानन्दत्वादिना भानाभानयोरसंभवात् ।।

अभिन्ननिमित्तोपादनपरत्वसाधकप्रेक्षापूर्वजनितकार्यत्वहेतुनिराकरणम्

न च 'जगदभिन्ननिमित्तोपादनकं प्रेक्षापूर्वजनितकार्यत्वात् सुखदुःवत्' इत्यभिन्ननिमित्तोपादनं ब्रह्मेति वाच्यम् । दुःखादीनामन्तःकरणोपादानत्वेन दृष्टान्तस्य साध्यवैकल्यात् । न चान्तःकरणस्य परिणाम्युपादानत्वेऽप्यन्तःकरणरूपेण परिणताज्ञानाधारतया चेतनस्यापि विवर्तोपादनत्वमस्ति–[१] ।

१. अत्र पदं लुप्तमिति भाति । पङ्क्तेरनन्वयात् । अत्राद्वैतसिद्ध्यनुगुणं एवं स्यादिति भाति– '....परिणताज्ञानाधारतया विवर्तोपादनत्वस्यानापायात् इति वाच्यम्' । 'चेतनस्यापि' इति पदं अद्वैतसिद्धौ नास्ति ।

उभयवादिसंमतस्यैव दृष्टान्तीकरणीयत्वात् । हेतौ व्यर्थविशेषणत्वाच्च। न च प्रेक्षापूर्वकत्वात् कार्यत्वात् इति हेतुद्वये तात्पर्यम् । तथा च कार्यत्वादिति हेतौ सर्वकार्यनिमित्तकालघटसंयोग उभयसंप्रतिपन्नो दृष्टान्तः । संयोगादिना परिणतस्योपादानत्वेनापरिणतभागस्यैव कालस्य निमित्तत्वेन दृष्टान्तत्वासंप्रतिपत्तेः । आरम्भवादे तु कार्यत्वेन कालघटसंयोगं प्रति कालस्य निमित्तकारणत्वात् । कालघटसंयोगत्वेन तस्य तं प्रति समवायिकारणत्वाच्च नाभिन्ननिमत्तोपादानत्वम् ।।

द्रव्योपादानत्वहेतोरद्वैतसिद्ध्युक्तोपाधिनिराकरणम्

'जगदुपादानं न कर्तृ द्रव्योपादानत्वात् मद्वत्' 'जगत्कर्ता वा न द्रव्योपादानं कर्तृत्वात् कुलालवत्' इत्यादिना सत्प्रतिपक्षत्वाच्च । न चाद्ये जडत्वं द्वितीये सर्वान्तर्यामित्वं चोपाधिः । आद्ये उपाधेः साधनव्यापकत्वेन तद्व्यभिचारेण हेतौ साध्यव्यभिचारानुमानासंभवात्। शुद्धे ब्रह्मणि तुच्छे च व्यभिचारेण प्रधाने भागासिद्ध्या च जडत्वाभावेन कर्तृत्वसाधनासंभवाच्च । द्वितीये पक्षेतरत्वात् ।।

।। इति ब्रह्मणो विश्वोपादानत्वे प्रमाणभङ्गः ।।

## २३. अथ अखण्डलक्षणभङ्गः

वाक्यद्वैविध्यप्रदर्शनपूर्वं अद्वैतरीत्या द्वेधा अखण्डार्थत्वस्वरूपप्रदर्शनम्

ननु भवेदीश्वरोऽनन्तगुणः सविग्रहो विश्वोदयादिकर्ता यदि तत्र मानं स्यात् । तदेव न । वेदान्तानामखण्डार्थकत्वात् । तथा हि– द्विविधं वेदान्तवाक्यं पदार्थनिष्ठमेकं वाक्यार्थनिष्ठं चान्यत् । एकैकं

लौकिकवैदिकभेदेन द्विविधम् । तत्र 'सत्यं ज्ञानमनन्तं'[१] इत्यादि तत्पदार्थनिष्ठम् । 'योऽयं विज्ञानघनः'[२] इत्यादि त्वंपदार्थनिष्ठम् । 'तत्त्वमसि'[३] इत्यादि वाक्यार्थनिष्ठं वैदिकम् । 'प्रकृष्टप्रकाशः' इत्यादिपदार्थनिष्ठम् । 'सोऽयं' इत्यादि वाक्यार्थनिष्ठं च लौकिकम् ।।

अद्वैतसिद्ध्युक्ताखण्डार्थलक्षणानुवादः

अपर्यायशब्दानां पदवृत्तिस्मारितातिरिक्तसंसर्गागोचरप्रमाजनकत्वं तेषामेकप्रातिपदिकार्थमात्रपर्यवसायित्वं वा अखण्डार्थकत्वम् । 'अप्राप्तयोः प्राप्तिः संयोगः' इति लक्षणवाक्येन पदस्मारितसंसर्गस्यैव बोधनान्नाव्याप्तिः । द्वितीये प्रातिपदिकार्थस्यैकत्वम् एकधर्मावच्छेदेन वृत्तिविषयत्वम् । वृत्तिविषयत्वं तु शक्तिलक्षणाकृत्तद्धितान्तसमासान्यतमज्ञानाधीनज्ञानविषयत्वं । एतेनौपगवादिसमुदायस्य शक्तिलक्षणयोरभावेऽपि तद्धितान्तज्ञानाधीनधीविषयत्वस्य गोसमीपवृत्त्यपत्यत्वविशिष्टे सत्त्वान्नाव्याप्तिः । न त्वेकमात्रव्यक्तित्वं तत् । अतो यौगिकार्थौपगवादिप्रश्नोत्तरे 'श्यामो दीर्घो लोहिताक्ष औपगवः' इत्यादावनेकार्थात्मकवनसेनादिप्रश्नोत्तरे 'एकदेशस्था वृक्षा वनं' इत्यादौ च नाव्याप्तिरिति चेन्न ।।

परोक्तप्रथमाखण्डार्थलक्षणखण्डनम्

आद्ये 'द्विषदन्नं न भोक्तव्यं' इत्येतत्परे 'विषं भुङ्क्ष्व' इति वाक्येऽतिव्याप्तेः । न च तत्राप्यनिष्टसाधनत्वसंसर्गः पदवृत्तिस्मारितो बोध्यते । अनिष्टत्वस्य भोजनेऽनुमानादिगम्यत्वेन तत्संर्गस्य तत्र

१. तैत्त.उ. २.२.

२. बृ.उ. ४.४.१२

३. छा.उ. ६.८.७

शाब्दत्वाभावात् । न च प्रतिपिपादयिषितपदार्थसंसर्गाप्रमापकत्वमात्रं विवक्षितम् । चन्द्रब्रह्मादिशब्दार्थानां स्वरूपतो ज्ञाततयाऽप्रतिपिपादयिषितत्वेन संसर्गप्रतियोगित्वेनैव प्रतिपिपादयिषितत्वेन तत्रासंभवात् ।।

परोक्तद्वितीयाखण्डार्थलक्षणखण्डनम्

द्वितीये 'शीतोष्णस्पर्शवन्तौ पयःपावकौ' इत्याद्यनेकप्रातिपदिकार्थमात्रपरे सेनावनादिप्रश्नोत्तरे चातिव्याप्तेः । न हि धर्मधर्मिभावासहमखण्डार्थत्वं धर्मिभेदसहम् । न च शीतस्पर्शवत्यः आपः उष्णस्पर्शवान् पावक इति साक्षात्प्रत्येकवाक्यद्वयद्वाराऽखण्डविषयकबोधद्वयमात्रे तात्पर्यान्न दोष इति वाच्यम् ।

'चन्द्रे कलङ्कः सुजने दरिद्रता विकासलक्ष्मीः कुमुदेषु चञ्चला ।
मुखप्रसादः सधनेषु नित्यशो यशो विधातुः कथयन्ति खण्डितम् ।।'

इत्येकस्मृत्युपारूढानां चन्द्रकलङ्कादीनां बहुत्वान्वयवदिहाप्यन्वयोपपत्तेः। 'यशो विधातुः कथयन्ति खण्डितं' इत्यादाविवैकवाक्यताया बाधकाभावात् सेनादिप्रश्नोत्तरेऽतिव्याप्तेरनुद्धाराच्च । निर्धर्मके ब्रह्मण्यसंभवाच्च ।।

किञ्च प्रवृत्तिनिमित्तानां भिन्नानां भानेऽखण्डार्थकत्वहानिः, अभाने पर्यायत्वमेव । न च प्रवृत्तिनिमित्तभेदमङ्गीकृत्यैव सत्यपदादीनां लक्षणयाऽखण्डशुद्धब्रह्मपरत्वम् । लाक्षणिकबोधेऽधिकभाने वाक्यस्याखण्डार्थकत्वहानेरभाने लक्षणाया वैय्यर्थ्यात् । न हि शाक्तबोधानधिकविषयकबोधार्थकत्वे लक्षणासार्थक्यम् ।।

।। इत्यखण्डलक्षणभङ्गः ।।

## २४. अथ अखण्डार्थभङ्गः

### अखण्डार्थत्वसाधकानुमानखण्डनम्

प्रमाणमात्रस्य सविकल्पकज्ञानजनन एव पर्यवसानेनाखण्डे मानाभावः । ननु 'सत्यादिवाक्यमखण्डार्थनिष्ठं ब्रह्मप्रातिपदिकार्थ-मात्रनिष्ठं वा लक्षणवाक्यत्वात् तन्मात्रप्रश्नोत्तरत्वाद्वा प्रकृष्टप्रकाशश्चन्द्र इति वाक्यवत्' इति पदार्थविषयकम्, 'तत्त्वमस्यादिवाक्यमखण्डार्थनिष्ठं आत्मस्वरूपमात्रनिष्ठं वा अकार्यकारणद्रव्यमात्रनिष्ठत्वे सति समानाधिकरणत्वात् तन्मात्रप्रश्नोत्तरत्वाद्वा सोऽयं इत्यादिवाक्यवत्' इति वाक्यार्थविषयमनुमानं मानम् । 'मृद्घटः' 'श्यामो घटः' इति सखण्डार्थके व्यभिचारवारणायाकार्यकारणद्रव्यमात्रेति विशेषणमिति चेन्न । प्रकृष्टादिवाक्यस्य सखण्डार्थकत्वेन दृष्टान्ताभावात् । तत्रापि साधनीयत्वे दृष्टान्तान्तरस्य गवेषणीयत्वेनानवस्थापत्तेः । प्रत्यक्षं निर्विकल्पकधीहेतुरिति मतस्याप्रामाणिकत्वेन प्रमाणमात्रस्य सविकल्पकधीजनकत्वनियमेन साध्याप्रसिद्धेश्च ।।

### प्रमात्वपक्षकसंसर्गागोचरवृत्तित्वसाध्यकाद्वैतसिद्ध्युक्तसामान्यानुमानखण्डनम्

न च 'प्रमात्वं संसर्गागोचरवृत्ति सकलप्रमावृत्तित्वात् अभिधेयत्ववत्' इति सामान्यतस्तत्सिद्धिः । 'प्रमात्वं संसर्गागोचरवृत्ति न ज्ञानत्वव्याप्यधर्मत्वात् अनुमितित्वादिवत्' इति सत्प्रतिपक्षात् । मृषासत्यत्वादेरन्यत्र संभवेन तात्त्विकस्य ब्रह्मण्यप्यभावेन लक्षणत्वासंभवाच्च ।।

### स्वरूपतटस्थलक्षणयोः भेदकथनपूर्वकं सत्यादीनामलक्षणत्वापादनम्

सत्यादिस्वरूपं तु न लक्षणम् । न हि घटो घटस्य लक्षणं किन्त्वसाधारणो धर्मः । न चैवं स्वरूपतटस्थलक्षणयोर्भेदो न स्यात्। यावद्द्रव्यभावित्वाभावित्वाभ्यां भेदोपपत्तेः । न च पार्थिवरूपादौ स्वरूपलक्षणेऽव्याप्तिः । रूपत्वाद्यवच्छिन्नस्य यावद्र० यभावित्वेनाव्याप्तेरभावात् । न च द्वारत्वेन लक्षणे तात्पर्यं न द्वारिणोऽखण्डार्थत्वविरोधि । स्वरूपस्य प्रागेव ज्ञातत्वेन तन्मात्रज्ञाने द्वारानपेक्षणात् । न च संशयविरोधिस्वरूपज्ञाने द्वारापेक्षा न सर्वत्रेति वाच्यम् । भ्रमसंशयानधिकविषयकस्वरूपज्ञानस्य संशयाद्यविरोधित्वात् । सखण्डसेनादिलक्षणवाक्ये व्यभिचाराच्च । 'प्रकृष्टप्रकाशश्चन्द्रः' इत्यादौ व्यभिचाराच्च । संशयबुभुत्साद्यन्यथानुपपत्त्या धर्मिणः प्रागेव ज्ञातत्वेन धर्मस्यैव पृष्टत्वात् । न च प्रकर्षोपलक्षितप्रकाशव्यक्तिमात्रपरत्वादखण्डार्थकं तद्वाक्यम् । उपलक्षणस्य प्रकारस्य भाने हि सखण्डार्थकतैव, अभाने वाक्यवैय्यर्थ्यम् ।।

### अखण्डार्थत्वसाधकानुमानस्य बाधोद्भावनम् अद्वैतसिद्ध्युक्तसमाधानखण्डनं च

किञ्च धर्मिज्ञानाधीनसप्रकारकसंशयादिनिवर्तकं मोक्षहेतुं सप्रकारकं ज्ञानं प्रति साधनत्वेन वेदान्तविचारविधानान्यथानुपपत्त्या वेदान्तवाक्ये साध्याभावनिश्चयाद्बाधः । न चाज्ञानसमविषयकज्ञानमेव संशयादिनिवर्तकं न तु सप्रकारकं गौरवात् इति वाच्यम् । अज्ञानविषयचिन्मात्रविषयकज्ञानस्य संशयादितः प्रागेव सत्त्वेन तस्य तदविरोधित्वात् । भ्रमादिकालागृहीतस्य भ्रमादिविरोधिज्ञानविषयस्य धर्मस्यैव ह्यज्ञानविषयत्वं न तु स्वरूपस्य । स्वरूपाज्ञाने संशयाद्यनुपपत्तेः ।।

### ब्रह्माकारधियोऽद्वैतसिद्ध्युक्तज्ञानविरोधित्वनिराकरणम्

न च ब्रह्माकारधीरेव तदज्ञानविरोधिनी । द्रव्याद्याकारज्ञानात् घटाद्याकाराज्ञाननिवृत्त्यापत्तेः । न च द्रव्याद्याकारज्ञानस्य घटाद्याकारत्वमनुभवविरुद्धम् । ज्ञानगताकाराङ्गीकारे साकारवादापत्तेः । न चाज्ञानतत्कार्यान्यतराविषयकं ज्ञानमज्ञाननिवर्तकम् । रूप्यहेत्वज्ञानतत्कार्यान्यतराविषयकेदं शुक्लमिति ज्ञानस्यापि रूप्यनिवर्तकत्वापत्तेः । तस्यापि रूप्यहेत्वज्ञानतत्कार्यरूप्यान्यतराविषयकत्वात् । अदण्डिनि दण्डीति भ्रमस्य पुरुषोऽयमिति ज्ञानेन निवृत्त्यापत्तेश्च ॥

### व्यभिचारपरिहारपूर्वकं सत्यादिवाक्यानां सखण्डार्थत्वसाधकानुमानकथनम्

'सत्यादिवाक्यतात्पर्यविषयः संसृष्टरूपः संसर्गरूपो वा प्रमाणवाक्यतात्पर्यविषयत्वात् संमतवत्' । 'सत्यादिवाक्यं स्वतात्पर्यविषयज्ञानाबाध्यसंसर्गपरं स्वतात्पर्यविषयज्ञानाबाध्यस्वकरणकप्रमाविषयपदार्थनिरूप्यसंसर्गपरं वा प्रमाणवाक्यत्वात् अग्निहोत्रादिवाक्यवत्' । विषं भुंक्ष्वेत्यादौ वाच्यार्थसंसर्गपरत्वाभावेऽपि स्वकरणकप्रमाविषयपदार्थसंसर्गपरत्वान्न व्यभिचारः । 'खं छिद्रं' 'कोकलः पिकः' इत्यादावभिन्नार्थकत्वे सामानाधिकरण्यायोगेन छिद्रकोकिलादीनां पिकादिपदवाच्यत्वसंसर्गपरत्वान्न व्यभिचारः । न चाप्रयोजकम् । हेतूच्छित्तेरेव विपक्षे बाधकत्वात् ॥

### पूर्वोक्तानुमानयोरद्वैतसिद्ध्युक्तव्यभिचारपरिहारः

न चाद्यानुमाने संसृष्टरूप इति साध्ये संसर्गे, संसर्गरूप इति साध्ये च संसृष्टरूपे पदार्थे व्यभिचारः । उभयोरपि

प्रमाणवाक्यतात्पर्यविषयत्वादिति वाच्यम् । पक्षसमे व्यभिचारस्यादोषत्वात् । अन्यतरत्वावच्छिन्नस्य साध्यत्वेऽदोषत्वाच्च ।।

न चालक्षणवाक्यत्वं द्वितीये उपाधिः । अलक्षणवाक्यत्वस्य लक्षणवाक्यभिन्नवाक्यत्वरूपत्वे हि वाक्यत्वस्यैव साध्यव्यापकत्वेन शेषवैय्यर्थ्यात् । लक्षणवाक्यभिन्नत्वरूपत्वे तु पक्षमात्रव्यावर्तकविशेषणवत्वेन पक्षेतरत्वतुल्यत्वाच्च । (लक्षणवाक्यस्यैव पक्षत्वेन तदितरत्वाच्च) ।।

### वेदान्तवाक्यानां सप्रकारकत्वसाधकानुमानद्वयकथनम् अद्वैतसिद्ध्युक्तदोषोद्धारश्च

'वेदान्तजन्या प्रमा सप्रकारिका विचारजन्यज्ञानत्वात् संशयादिनिवर्तकज्ञानत्वाद्वा । यदेवं तदेवं कर्मकाण्डजन्यज्ञानवत्' । 'वेदान्तवाक्यजन्या प्रमा ब्रह्मनिष्ठप्रकारविषया ब्रह्मधर्मिकसंशयादिविरोधिज्ञानत्वात् । ब्रह्मविचारजन्यज्ञानत्वाद्वा । यदेवं तदेवं कर्मकाण्डविचारजन्यज्ञानवत्' । न च त्वन्मते ज्ञानमात्रस्य सप्रकारत्वेन विचारजन्यत्वसंशयविरोधित्वयोर्वैय्यर्थ्यात् (वैय्यर्थ्यम्)। निर्विकल्पकप्रत्यक्षाङ्गीकारमते व्यभिचारवारकत्वात् । मतान्तरे तद्रहितस्यैव हेतुत्वात् ।

न चालक्षणवाक्यजन्यत्वमुपाधिः । आद्ये सप्रकारकप्रत्यक्षानुमित्यादौ द्वितीये ब्रह्मनिष्ठप्रकारविषयकस्वप्रकाशत्वाद्यनुमितीश्वरप्रत्यक्षादौ साध्याव्यापकत्वात् । न च लक्षणवाक्यभिन्नजन्यत्वमुपाधिः । ईशज्ञाने साध्याव्यापकत्वात् । जन्यत्वस्यैव साध्यव्यापकत्वसंभवेन विशेषणवैय्यर्थ्यात् । विशेष्यमात्रस्य साधनव्यापकत्वात् ।।

### प्रकृष्टप्रकाशश्चन्द्रः इति दृष्टान्तस्य सखण्डपरत्वप्रदर्शनपूर्वं अद्वैतसिद्ध्युक्तपरिहारखण्डनम्

किञ्च दृष्टान्तः साध्यविकलः । प्रकृष्टप्रकाशशब्देन शक्त्याऽखण्डार्थाबोधनात् । लक्षणायाश्चान्वयानुपपत्त्यादिबीजाभावात् । न च लक्षणयैवाखण्डचन्द्रबोधः । यष्टीः प्रवेशयेत्यादाविव लक्षणाबीजतात्पर्यानुपपत्तेः सत्वादिति वाच्यम् । चन्द्रव्यक्तेः संशयाद्यनुपपत्त्या प्रागेव ज्ञातत्वेन तत्र तात्पर्यासंभवात् । चन्द्रस्वरूपाज्ञाने धर्मिधीसाध्यबुभुत्सासन्देहयोः, 'चन्द्रः' इत्यनूद्य 'कः' इति प्रश्नस्य चायोगात् । न च चन्द्रस्वरूपज्ञानेऽपि विरोधिज्ञानानुदयदशायां तदुदयार्थं प्रश्नादिकं युज्यते । ज्ञानविशेष एव विपर्यविरोधी । 'शंखः श्वेतो न पीतः' इत्यादिपरोक्षज्ञाने भासते यादृशं श्वैत्यस्वरूपं पीताभावो वा तादृशमेवापरोक्षधीविषयदशायां विपर्ययविरोधीति विपर्ययविरोधिधीकालीनमेवासंकीर्णस्वरूपं तज्ज्ञानमेव विपर्यविरोधीति वाच्यम् । अपरोक्षविपर्ययं प्रत्यपरोक्षत्वेनैव हि निवर्तकत्वम् । शङ्खश्वैत्यानुमितौ सत्यामपि तदपरोक्षाभावाद्युक्ता विपर्ययानिवृत्तिः । चन्द्रव्यक्तिप्रत्यक्षानिवर्तितस्य प्रत्यक्षानधिकविषयकप्रत्यक्षशाब्दादिना निवृत्तिस्तु न दृष्टा न वा युक्ता । अतश्च व्यावृत्तेर्व्यावर्तकस्य वा वैशिष्ट्यमेव पृष्टं तदेव चोत्तरितम् । न च यश्चन्द्रस्तत्र चन्द्रत्वं तमोनक्षत्रादिव्यावृत्तिश्चास्तीति मया ज्ञायते, चन्द्रस्वरूपं तु न ज्ञायत इत्यनुभवेन व्यावर्तकव्यावृत्तिवैशिष्ट्यास्याजिज्ञासितत्वेन जिज्ञासितं चन्द्रस्वरूपमेव विपर्ययविरोधिज्ञानविशेषं जनयता प्रकृष्टादिवाक्येन बोध्यत इति वाच्यम्। सामान्यतो व्यावृत्त्यादेर्ज्ञानेऽपि पुरोवर्त्यपरोक्षचन्द्रव्यक्तिनिष्ठतया 'अयं चन्द्रो नक्षत्रादिव्यावृत्तः' इति विशेषतो ज्ञानाभावात् । न

च चक्षुःसन्निकर्षादिसत्त्वाच्चन्द्रत्वादिकमपि कुतो न ज्ञायते । पद्मरागत्वादेरिव कासांचिज्जातीनामुपदेशसहकृतेन्द्रियवेद्यत्वेन व्यक्तिप्रत्यक्षेऽपि चन्द्रत्वस्याप्रत्यक्षत्वोपपत्तेः ।।

एतेन चन्द्रे व्यावृत्तिर्बोध्यते व्यक्तिविशेषे वा । नाद्यः । या शुक्तिः सा रजतादिभिन्नेति व्यावृत्तिज्ञानेऽपि शुक्तिस्वरूपाज्ञान-तत्कार्यविपर्ययवत् 'यश्चन्द्रः स नक्षत्रादिविलक्षणः' इति ज्ञानेऽपि चन्द्रस्वरूपाज्ञानतत्कार्यविपर्ययादिदर्शनात् । नान्त्यः । आवश्कत्वाद्व्यक्तेरेव बोध्यत्वेन व्यावृत्तिबोधवैय्यर्थ्यादिति निरस्तम्। संशयप्रश्नाद्यनुपपत्त्या व्यक्तेः प्रागेव ज्ञातत्वात् । शृङ्गग्राहकतया व्यावृत्तेर्व्यावर्तकस्य वा व्यक्तिनिष्ठतया बोधनीयत्वात् । अन्यथा 'कश्चन्द्रः' इति प्रश्नस्य 'चन्द्रश्चन्द्रः' इत्येवोत्तरं स्यात् । न तु 'प्रकृष्टप्रकाशः' इत्यादिकम् । न च स्वरूपमात्रस्य ज्ञेयत्वेऽपि स्वरूपज्ञानस्य तावत्पदार्थज्ञानाधीनत्वे सत्येव तावत्पदार्थेतर-व्यावृत्तिफले न सर्वपदानां सार्थक्यम् । तापत्पदैर्धर्मिणि तावद्व्यावर्तकधर्मवैशिष्ट्यबोधे तावत्पदार्थेतरव्यावृत्तेरसंभवात् । व्यावृत्तेः शाब्दबोधेऽभाने फलत्वासंभवात् । पदान्तरवैय्यर्थ्यानुद्धाराच्च।।

उत्तरवाक्यस्य प्रकृष्टत्वादिबोधकत्वानङ्गीकारे दोषकथनम्

किञ्च उत्तरस्य प्रकृष्टत्वादिबोधपरत्वाभावे तात्पर्यतो 'यः कश्चिच्चन्द्रः' इत्येव बोधनात् वस्तुतो यः कश्चिच्चन्द्रः स्यात् । तात्पर्यविषये चायं चन्द्र इति लक्षणलक्ष्यरूपोद्देश्यविधेयविभागाभावेन चन्द्रबुभुत्साया अनिवृत्तिः कश्चन्द्र इति प्रश्नस्योत्तरं च न स्यात् । न च यथा गङ्गासंबन्धित्वविशिष्टे तात्पर्याभावेऽपि वस्तुगत्या गङ्गासंबन्ध्येव तीरं लक्ष्यते, तथेह प्रकृष्टप्रकाशपदाभ्यां वस्तुगत्या

प्रकृष्टत्वाद्याश्रयीभूतैव व्यक्तिर्लक्ष्यते न या काचित् । 'अयं चन्द्रः' इति लक्ष्यलक्षणभागाभावेऽपि तदुभयप्रतिपादकपदाभ्यामुपस्थितस्य एकरूपस्योद्देश्यविधेयभावादिसंभव इति वाच्यम् । वस्तुगत्या व्यक्तेः प्रकृष्टप्रकाशाश्रयत्वेऽपि तस्य शाब्दबोधे प्रकारत्वेनाभाने 'चन्द्रश्चन्द्रः' 'यः कश्चिच्चन्द्रः' इत्येव हि बोधः स्यात् । तस्य च बुभुत्साद्य-निवर्तकत्वेन तज्जनकवाक्यमुत्तरं न स्यादेवे । अर्थभेदं विना पदद्वयोपस्थितस्यापि उद्देश्यत्वाद्यसंभवात् । घटकुंभाद्यनेक-पदोपस्थितस्यापि घटादेरुद्देश्यत्वविधेयत्वाद्यदर्शनात् । शाक्तबोधगृही-तादधिकस्य लाक्षणिकबोधेऽभाने लक्षणावैय्यर्थ्याच्च । एकपदलक्षणयैव व्यक्तिधीसंभवेऽनेकपदलक्षणावैय्यर्थ्याच्च ।।

किञ्च स्वरूपस्य प्रागेव ज्ञातस्य बुभुत्साद्यसंभवेनोत्तरे धर्मवाचक-पदानुरोधेन च प्रश्ने धर्मबोधकपदमध्याहार्यम् । तत्सूचककिंशब्दस्य सत्वात् ।।

ब्रह्मशब्दस्य यौगिकत्वेन श्रुतीनामखण्डार्थपरत्वसाधनम्

किञ्च ब्रह्मपदस्य यौगिकत्वेन ब्रह्मप्रातिपदिकार्थमात्रनिष्ठत्वेऽपि नाखण्डार्थकत्वसिद्धिः । न च ब्रह्मप्रातिपदिकार्थविशेष्यमात्रनिष्ठत्वम् । सन्दिग्धबोधकशब्दस्य विशेष्यमात्रनिष्ठत्वाभावेन दृष्टान्ताभावात् । चन्द्रव्यक्तेः प्रागेव ज्ञातत्वेन प्रकृष्टादिवाक्यस्य तत्परत्वासंभवात् ।।

अखण्डार्थत्वसाधकानुमानस्यासिद्धिविरोधोद्भावनम्

किञ्च 'कतम आत्मा' इत्यत्र 'कतरः स आत्मा' इत्यत्र त्वंपदार्थप्रश्ने वा 'बहूनां जातिपरिप्रश्ने डतमच्'[1] 'द्वयोरेकस्य

---

१. पा.सू. ५.३.९३

निर्धारणे डतरच्'[१] इति सूत्राभ्यां निर्णीतजात्याद्यर्थककतमादिप्रयोगात् तत्प्रतिवचने 'योऽयं विज्ञानमयः'[२] इत्यादौ पक्षे हेतुरसिद्धः । न च प्रश्नादौ धर्मवाचकपदसत्त्वेऽपि न तत्र तात्पर्यम् । आत्मस्वरूपज्ञानस्य सदैव सत्वात् सर्वस्याप्युत्तरस्य प्रष्टृनिर्धारितधर्मिनिष्ठनिर्धारितैकधर्मपरत्वाद्विरुद्धश्च हेतुः । धर्मिनिर्धारणं विना संशयाद्यभावेन धर्मस्यैवनिर्धारणीयत्वात् । प्रश्नानधिक-विषयकस्यानुत्तरत्वाच्च । अन्यथा प्रश्नस्यैवोत्तरत्वं स्यात् ।।

### सप्रकारकज्ञानस्यैव मोक्षहेतुत्वेन वेदान्तानामखण्डार्थपरत्वमिति प्रतिपादनम्

किञ्च सप्रकारकज्ञानमेव मोक्षहेतुः । 'ब्रह्मविदाप्नोति परं'[३] 'य एवं विद्वानमृत इह भवति'[४] 'यो वेद निहितं गुहायां । सोऽश्नुते सर्वान् कामान्'[५] इत्यादिश्रुतेः,

भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरम् ।
सुहृदं सर्वभूतानां ज्ञात्वा मां शान्तिमृच्छति[६] ।।

इत्यादिस्मृतेश्च । अतः सप्रकारज्ञान एव मुमुक्षोः जिज्ञासा ।।

### वेदान्तानामखण्डार्थपरत्वेऽनुपपत्तिप्रदर्शनपूर्वं अद्वैतसिद्ध्युक्तबाधकनिरासः

किञ्चैवं कर्मकाण्डमखण्डकर्मपरं वैद्यकादिशास्त्रमखण्डौषधपरं स्यात्। न च तत्र विशिष्टकर्मादिपरत्वे बाधकाभावः । प्रकृतेऽपि

---

१. पा.सू. ५.३.९२
२. बृ.उ. ६.३.७
३. तैत्त.उ. २.१
४. तै.आ. १३ (चित्त्युपनिषत्)
५. तैत्त.उ. २.२.
६. भग.गी. ५.२९

तदभावात् । न च 'एकधैवानुद्रष्टव्यं'[१] इत्यनेकप्रकारनिषेधकम्, 'उदरमन्तरं कुरुते'[२] इति भेदनिषेधकं, 'एकमेवाद्वितीयं'[३] इति द्वितीयमात्रनिषेधकम् सर्वतोऽनवच्छिन्नवस्तुपरानन्तशब्दब्रह्मशब्दौ च बाधकमिति वाच्यम् । तेषामैक्यभेदाभावादिविशिष्टार्थपरत्वे वेदान्तमात्रस्याखण्डार्थकत्वासिद्धेः । विशेष्यमात्रपरस्य विशिष्टपरेण विरोधाच्च । न च द्वारतयोपस्थितमैक्यद्वितीयाभावादिकं विशिष्टार्थविरोधीति सत्यपदादेर्मुख्यार्थत्यागः । द्वारतयोपस्थितस्यैक्यादेर्मिथ्यात्वे पारमार्थिकभेदाद्यविरोधित्वात् । सत्यत्वे तत एवाद्वैतहानेः । न चाभिन्नमेवैक्यादिकमिति नाद्वैतहानिः । स्वाभिन्नस्य स्वरूपज्ञाने द्वारत्वायोगात् । न च स्वरूपस्यैव कल्पितं धर्मत्वम् । तज्ज्ञानस्य तात्त्विकभेदाद्यविरोधित्वात् । 'अथ कस्मादुच्यते ब्रह्मेति । बृहन्तो ह्यस्मिन् गुणाः'[४] 'विष्णोर्नु कं वीर्याणि प्रवोचं यः पार्थिवानि विममे रजांसि'[५] इत्यादिश्रुत्या 'महद्गुणत्वाद्यमनन्तमाहुः'[६] इत्यादि स्मृत्या च ब्रह्मानन्तपदयोः सगुणवाचित्वेन निर्वचनात् ॥

### वाक्यत्वान्यथानुपपत्त्या ऐक्यपरत्वेनाभिमतवाक्यस्य सखण्डार्थपरत्वसमर्थनम्

किञ्चैक्यादिवाक्यं यदि संसृष्टार्थकं न स्याद्वाक्यमेव न स्यात् । आकांक्षायोग्यतासत्तिमत्वाभावात् । येन विना यस्य न

१. बृ.भा. ३.५.
२. तैत्त.उ. २.१२.
३. छा.उ. ६.२.१.
४. न्या.वि. १.१.१ इत्यत्रोदाहृता श्रुतिः ।
५. ऋक्.सं. १.१५४.१.
६. भग.पु. १.१८.१९.

निर्धारणे डतरच्'[१] इति सूत्राभ्यां निर्णीतजात्याद्यर्थककतमादिप्रयोगात् तत्प्रतिवचने 'योऽयं विज्ञानमयः'[२] इत्यादौ पक्षे हेतुरसिद्धः । न च प्रश्नादौ धर्मवाचकपदसत्वेऽपि न तत्र तात्पर्यम् । आत्मस्वरूपज्ञानस्य सदैव सत्वात् सर्वस्याप्युत्तरस्य प्रष्टृनिर्धारितधर्मिनिष्ठनिर्धारितैकधर्मपरत्वाद्विरुद्धश्च हेतुः । धर्मिनिर्धारणं विना संशयाद्यभावेन धर्मस्यैवनिर्धारणीयत्वात् । प्रश्नानधिक-विषयकस्यानुत्तरत्वाच्च । अन्यथा प्रश्नस्यैवोत्तरत्वं स्यात् ।।

सप्रकारकज्ञानस्यैव मोक्षहेतुत्वेन वेदान्तानामखण्डार्थपरत्वमिति प्रतिपादनम्

किञ्च सप्रकारकज्ञानमेव मोक्षहेतुः । 'ब्रह्मविदाप्नोति परं'[३] 'य एवं विद्वानमृत इह भवति'[४] 'यो वेद निहितं गुहायां । सोऽश्नुते सर्वान् कामान्'[५] इत्यादिश्रुतेः,

भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरम् ।
सुहृदं सर्वभूतानां ज्ञात्वा मां शान्तिमृच्छति[६] ।।

इत्यादिस्मृतेश्च । अतः सप्रकारज्ञान एव मुमुक्षोः जिज्ञासा ।।

वेदान्तानामखण्डार्थपरत्वेऽनुपपत्तिप्रदर्शनपूर्वं अद्वैतसिद्ध्युक्तबाधकनिरासः

किञ्चैवं कर्मकाण्डमखण्डकर्मपरं वैद्यकादिशास्त्रमखण्डौषधपरं स्यात्। न च तत्र विशिष्टकर्मादिपरत्वे बाधकाभावः । प्रकृतेऽपि

---

१. पा.सू. ५.३.९२
२. बृ.उ. ६.३.७
३. तैत्त.उ. २.१
४. तै.आ. १३ (चित्त्युपनिषत्)
५. तैत्त.उ. २.२.
६. भग.गी. ५.२९

तदभावात् । न च 'एकधैवानुद्रष्टव्यं'[१] इत्यनेकप्रकारनिषेधकम्, 'उदरमन्तरं कुरुते'[२] इति भेदनिषेधकं, 'एकमेवाद्वितीयं'[३] इति द्वितीयमात्रनिषेधकम् सर्वतोऽनवच्छिन्नवस्तुपरानन्तशब्दब्रह्मशब्दौ च बाधकमिति वाच्यम् । तेषामैक्यभेदाभावादिविशिष्टार्थपरत्वे वेदान्तमात्रस्याखण्डार्थकत्वासिद्धेः । विशेष्यमात्रपरस्य विशिष्टपरेण विरोधाच्च । न च द्वारतयोपस्थितमैक्यद्वितीयाभावादिकं विशिष्टार्थविरोधीति सत्यपदादेर्मुख्यार्थत्यागः । द्वारतयोपस्थित-स्यैक्यादेर्मिथ्यात्वे पारमार्थिकभेदाद्यविरोधित्वात् । सत्यत्वे तत एवाद्वैतहानेः । न चाभिन्नमेवैक्यादिकमिति नाद्वैतहानिः । स्वाभिन्नस्य स्वरूपज्ञाने द्वारत्वायोगात् । न च स्वरूपस्यैव कल्पितं धर्मत्वम् । तज्ज्ञानस्य तात्त्विकभेदाद्यविरोधित्वात् । 'अथ कस्मादुच्यते ब्रह्मेति । बृहन्तो ह्यस्मिन् गुणाः'[४] 'विष्णोर्नु कं वीर्याणि प्रवोचं यः पार्थिवानि विममे रजांसि'[५] इत्यादिश्रुत्या 'महद्गुणत्वाद्यमनन्तमाहुः'[६] इत्यादि स्मृत्या च ब्रह्मानन्तपदयोः सगुणवाचित्वेन निर्वचनात् ।।

### वाक्यत्वान्यथानुपपत्त्या ऐक्यपरत्वेनाभिमतवाक्यस्य सखण्डार्थपरत्वसमर्थनम्

किञ्चैक्यादिवाक्यं यदि संसृष्टार्थकं न स्याद्वाक्यमेव न स्यात् । आकांक्षायोग्यतासत्तिमत्वाभावात् । येन विना यस्य न

१. बृ.भा. ३.५.
२. तैत्त.उ. २.१२.
३. छा.उ. ६.२.१.
४. न्या.वि. १.१.१ इत्यत्रोदाहृता श्रुतिः ।
५. ऋक्.सं. १.१५४.१.
६. भग.पु. १.१८.१९.

स्वार्थान्वयानुभावकत्वं तस्य तेन सहाकांक्षा । एकपदार्थसंसर्गेऽपरपदार्थनिष्ठात्यन्ताभावप्रतियोगितावच्छेदकधर्मशून्यत्वं हि योग्यता । अव्यवधानेनान्वयप्रतियोग्युपस्थितिर्हि सन्निधिः । एतत्त्रयं शाब्दोधस्य संसर्गाविषयत्वे न संभवति ।।

ननु येन विना यस्य तात्पर्यविषयाननुभावकत्वं तस्य तेनाकांक्षा तात्पर्यविषयश्च क्वचित्संसृष्टः क्वचिदखण्डः । आसत्तिरव्यवधानेन शाब्दबोधानुकूलार्थोपस्थितिमात्रम् । तात्पर्यविषयाबाध एव योग्यता। अन्वयांशस्य सर्वत्र वैय्यर्थ्यादिति चेन्न । पदार्थानां प्रागेव ज्ञातत्वेन संसर्ग एव वाक्यतात्पर्यसंभवेनाखण्डे आकाङ्क्षाद्यसंभवात्। न हि प्रत्येकपदैर्निश्चित एवार्थे वाक्यतात्पर्यम् ।।

### वेदान्तानामखण्डार्थपरत्वे प्रथमाध्यायतृतीयपादीयाधिकरणानारम्भापादनम्

किञ्च प्रथमाध्यायतृतीयपादीयाधिकरणानामनारंभ एव तव स्यात्। विशिष्याज्ञातो हि विषयः । साधारणधर्मधीजन्यश्च संशयः। मिथ्यासत्यैकप्रकारालम्बिनौ च पूर्वपक्षसिद्धान्तौ । एकप्रकारेण निर्धारणाधीनं च प्रयोजनम् । तच्च पञ्चकं त्वन्मते तत्पादप्रतिपाद्यैर्निर्विशेषे न संभवति ।।

### अद्वैतसिद्ध्युक्तविषयादिखण्डनम्

एतेन व्यावृत्ताकारेणाज्ञातं ब्रह्म विषयः । अद्वैताद्युपलक्षिताखण्डार्थज्ञानं च निर्धारणं, तदधीनं प्रयोजनं मुक्तिः । कल्पितप्रकारालम्बिनौ पूर्वपक्षसिद्धान्तौ । संशयोऽपि कल्पितसमानधर्मधीजन्य एवेति नानुपपत्तिरिति निरस्तम् । निर्विशेषे व्यावृत्ताकारस्यालीकत्वात्। स्वरूपनिर्धारणस्य सदैव सत्वात् । कल्पितप्रकारालम्बिसिद्धान्तस्याप्रामाणिकत्वापत्तेः ।।

वेदान्तानामखण्डार्थपरत्वे सत्यादिवाक्यानां वैय्यर्थ्यापादनम्

किञ्च 'ब्रह्मविदाप्नोति परं' इत्यनेनैव स्वरूपस्य ज्ञातत्वेन सत्यादिवाक्यवैय्यर्थ्यम् । न चासाधारणं स्वरूपं न ज्ञातम् । स्वरूपद्वैविध्याभावात् ॥

किञ्च स्वरूपेण ज्ञातस्य विधेयस्योद्देश्यसंसृष्टतयैव बोध्यत्वम् । तच्चाखण्डे न युक्तम् । किञ्च शुद्धादन्यत्र सत्यत्वाद्यसंभवात्सत्यादिवाक्यस्य लक्षणयाऽखण्डार्थकत्वे शुद्धे सत्यत्वादेरभानात्पर्यायता दुर्वारैव । न हि विशिष्टे मृषाभूते परिच्छिन्ने सत्यत्वानन्तत्वादिकमस्ति, येन वाच्यार्थविशिष्टमादाय पर्यायत्वनिरासः स्यात् । न चासदादिव्यावृत्तिबोधनेन सार्थक्यम् । व्यावर्तकस्य सत्यत्वादेस्तात्पर्यतोऽर्पणं विना व्यावृत्त्यसिद्धेः । न च स्वरूपेणैव व्यावृत्तिः । आत्मनस्त्वन्मते व्यावृत्तत्वात् । अन्यथा ब्रह्मत्वापत्तेः । उक्तं च सुरेश्वरवार्तिके–

'अव्यावृत्ताननुगतं वस्तु ब्रह्मत्वमश्नुते ।
एतच्च दुर्लभं तस्य द्वितीये सति लक्षणम् ।। इति ।

व्यावृत्तिभेदेनाखण्डार्थहानेश्च ॥

ब्रह्मणः सत्यादिपदलक्ष्यत्वेऽसत्यत्वजडत्वाद्यापादनम्

किञ्च सत्यज्ञानादिपदलक्ष्यस्य गंगापदक्ष्यतीरस्यागङ्गात्ववत् असत्यत्वजडत्वाद्यापत्तिः । न च जहदजहल्लक्षणाङ्गीकारान्नोक्तानुपपत्तिः। यदि तीरादौ नदीत्ववद्ब्रह्मण्यप्यभिधाबलात्सत्यत्वादिकं न प्रतीयते तदैवं स्यान्न चैतदस्तीति वाच्यम् । काकेभ्यो दधि रक्ष्यतामित्यत्र पदार्थैकदेशकाकत्वत्यागाद्व्यक्तेरत्यागात्, व्यक्तेरत्यागाद्धि भवति जहदजलहल्लक्षणा, तत्र दध्युपघातकत्वेनाकाकस्य मार्जारादेरिवांशे असत्यत्वादिबोध आवश्यकोऽन्यथा लक्षणावैय्यर्थ्यम् ॥

किञ्च असदादिव्यावृत्तीनां सत्यत्वे ब्रह्माभिन्नत्वे च ब्रह्मपदेनैव तल्लाभात् शेषवैय्यर्थ्यम् । तद्भिन्नत्वे चाद्वैतहानिः । तासां मिथ्यात्वे शुक्तेः शुक्तितो व्यावृत्तेर्मिथ्यात्वे शुक्तित्वस्य शुक्तिसमसत्ताकत्ववत् अनृतत्वादेर्ब्रह्मसमसत्ताकत्वं स्यात् ।।

### सत्यादिवाक्यानामखण्डार्थत्वे पदान्तरवैय्यर्थ्यापादनम्

किञ्च सत्यपदेनासद्व्यावृत्तिद्वारा यद्बोधितं तदेव ज्ञानादिपदैरज्ञानादि० यावृत्तिद्वारा बोध्यते चेत्पदान्तरं व्यर्थम् । न च तावत्पदैर्विना त्रितयव्यावृत्तं ब्रह्म न सिद्ध्येत् । व्यावृत्तीनां प्रकारतया भाने वस्तुगत्या त्रितयव्यावृत्तब्रह्मबोधस्यैकपदेनैव संभवात् ।।

### अद्वैतसिद्ध्युक्तपदान्तरसार्थक्यखण्डनम्

यत्तु सत्यादिवाक्ये लक्षणाङ्गीकारान्न पदवैय्यर्थ्यशङ्केति । तन्न । प्रत्येकपदोपस्थिते स्वरूपमात्रे लक्षणावैय्यर्थ्यात् । अधिकसंसर्गादि-भानेऽखण्डार्थकत्वहानेः । वाक्यलक्षणायाः क्वाप्यसत्वाच्च । न च गभीरायां नद्यां घोष इत्यादौ विनिगमनाविरहात् पदलक्षणासंभवाद्वाक्य-लक्षणा । चरमोपस्थितनदीपस्यैव लाक्षणिकत्वात् । गभीरपदस्य तात्पर्यग्राहकत्वात् । अर्थवादेऽप्येकस्मिन् पदे लक्षणा पदान्तराणि तात्पर्यग्राहकाणि । विषं भुङ्क्ष्वेत्यादेः, 'गच्छ गच्छसि चेत्कान्त' इत्यादेश्च शब्दविधया प्रामाण्याङ्गीकारे सर्वपदानां भोजनाकर्तव्यत्वे गमनाभावे च लक्षणा । एकस्यैव वा पदान्तराणि तात्पर्यग्राहकाणीति न वाक्ये क्वापि लक्षणा । गौरवात् ।।

### सत्यादिसर्वपदानां लाक्षणिकत्वेऽनुभवाभावापादनम्

किञ्च शाब्दत्वावच्छिन्नं प्रति शक्तपदज्ञानत्वेन शक्तिज्ञानत्वेनैव वा हेतुत्वं न तु वृत्तिमत्पदज्ञानत्वेन गौरवात् । अतः

सर्वपदलाक्षणिकत्वेऽनुभवो न स्यात् । लाक्षणिकपदैरन्वयप्रतियोग्युपस्थितौ कृतायां यदवशिष्टं शाक्तं पदं तदेवानुभावकम्। अर्थवादानां लाक्षणिकत्वेऽपि पदैक्यवाक्यतापन्नं विधिपदमेवानुभावकम्। 'विधिना त्वेकवाक्यत्वात् स्तुत्यर्थेन विधीनां स्युः' इति न्यायात् । तथा च सत्यादिपदानां लाक्षणिकत्वेऽन्वयानुभवानुपपत्तिरेव। न च लक्ष्यलक्षणयैकदेशत्यागेऽपि शक्यस्यैवान्वयानुभवोऽङ्गीक्रियते। शक्यमात्रस्यैव बोधे लक्षणावैय्यर्थ्यात् ।।

किञ्च 'तत्त्वमसि' 'सोऽयं देवदत्तः' इत्यादौ धर्मिमात्रस्यावान्तरपदेन प्रत्यक्षेण च सिद्ध्योपदेशवैय्यर्थ्यादिति नाखण्डं ब्रह्मेति समन्वयाध्यायोक्तन्यायैरनन्तगुणे ब्रह्मणि मुख्यवृत्त्या सर्वेषां वेदान्तानां समन्वयः सिद्धः ।।

।। इत्यखण्डार्थभङ्गः ।।

## २५. अथ अवाच्यत्वभङ्गः

### ब्रह्मणोऽवाच्यत्वे पूर्वपक्ष्युक्तश्रुत्यनुमानकथनम्

ननु स्याद्वेदान्तानां शक्त्या ब्रह्मणि समन्वयः । स्याच्चानन्तगुणं ब्रह्म । यदि वाच्यं स्यात् । तदेव न । 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह'[१] इत्यादिश्रुत्या, 'तात्पर्येण सत्यादिप्रतिपाद्यम् ब्रह्म न तद्वाक्यपदवाच्यम् तद्वाक्यार्थत्वात् सम्मतवत्' । 'सत्यादिपदं न ब्रह्मवाचकं तत्प्रतिपादकवाक्यैकदेशपदत्वात् । यद्यदर्थवाक्यैकदेशपदं तन्न तद्वाचकं घटादिपदवत्' इत्याद्यनुमानेन च विरोधादिति चेन्न ।

---

१. तैत्त.उ. २.९

### उदाहृतश्रुतीनामन्यार्थकथनम्, अनुमाननिराकरणं च

श्रुतेः साकल्येनाद्भुतत्वादिना चावाच्यत्वपरत्वात् । वाक्ये शक्तिलक्षणयोरभावेन ब्रह्मणस्तत्प्रतिपाद्यत्वाभावेनाश्रयासिद्धेः । वाक्यार्थत्वस्यासंसर्गरूपे ब्रह्मण्यसिद्धेश्च । 'सत्यादिपदं ब्रह्मवाचकं अन्यावाचकत्वे सति साधुपदत्वात् । यदेवं ।' 'ब्रह्म किञ्चित्पदवाच्यं लक्ष्यत्वात् तीरवत्' इत्याद्यनुमानात् । 'एतमेव ब्रह्मेत्याचक्षते'[१] 'तदेतदक्षरं गार्गि ब्राह्मणा अभिवदन्ति'[२] इत्यादिश्रुतेः । 'यदक्षरं वेदविदो वदन्ति'[३] इत्यादिस्मृतेश्च । भाषितं च शुरेश्वरेणापि–

'अव्यावृत्ताननुगतं निःसामान्यविशेषतः ।
ब्रह्मेति मुख्यवृत्त्येह वस्तु श्रुत्याऽभिधीयते ।। इति ।

सत्यादिपदानां क्वचिच्छक्तिं विना तत्समूहस्य वाक्यत्वानुपपत्तेश्च । निरर्थकशब्दसमूहस्य वाक्यत्वे जरद्गवादिशब्दसमूहस्य वाक्यत्वं लक्षणया ब्रह्मपरत्वं च स्यात् ।।

### अवाच्यशब्देन वाच्यत्वावाच्यत्वपक्षयोः ब्रह्मणः वाच्यत्वसमर्थनम्

किञ्च अवाच्यशब्देनोच्यते चेत् तेनैव वाच्यत्वसिद्धिः । तेन नोच्यते चेत् तर्ह्यवाच्यत्वासिद्ध्या सुतरां वाच्यत्वसिद्धिः । न च तेनापि लक्ष्यते । अवाच्यरूपमुख्यार्थाभावेन शक्यसंबन्धरूपलक्षणासंभवात् । भावे वा ब्रह्म नावाच्यम् किन्तु तीरवत् अवाच्यरूपमुख्यार्थसंबन्धिमात्रमिति स्यात् । न चावाच्यरूपमुख्यार्थाभावेऽपि नञ्समभिव्याहृतवाच्यशब्देन वाच्यत्वा-

१. ब्र.सू.भा. १.२.५. इत्यत्रोदाहृता श्रुतिः ।
२. बृ.उ. ५.८.७.
३. भग.गी. ८.११.

भावबोधनद्वारा स्वरूपे लक्षणया पर्यवसानमिति वाच्यम् । वाच्यत्वात्यन्ताभाववैशिष्ट्यस्य शक्त्या बोधने वाच्यत्वसिद्धेः । मुख्यार्थं विना लक्षणायाश्चासंभवात् । लक्षणाया स्वरूपमात्रपरस्य 'यतो वाचः' इत्यादिशब्दस्य ब्रह्मणि सत्यादिपदवाच्यत्वस्याविरोधित्वात् । न चावन्तरतात्पर्यजन्यवाच्यत्वाभावबोधो वाच्यत्वविरोधी । तद्बोधस्य शक्त्यैव जन्यत्वेन वाच्यत्वसामान्याविरोधित्वात् । मूकोऽहमितिवत् व्याघाताच्च ।।

लक्ष्यपदेनापि ब्रह्मणः लक्ष्यत्वे दोषकथनम्

किञ्च लक्ष्यपदेनापि लक्ष्यत्वे तीरस्यागङ्गात्ववत् ब्रह्मणोऽलक्ष्यत्वापत्तिः । न च निर्धर्मकत्वादिष्टापत्तिः । वाच्यत्वाभावमात्रेण लक्ष्यत्वव्यवहार इति वाच्यम् । लक्ष्यत्वाभावमात्रेण वाच्यत्वव्यवहारापत्तेः । तत्रापीष्टापत्तौ शब्दसामान्यवाच्यलक्ष्यबहिर्भूतस्याप्रामाणिकत्वेन ब्रह्मासिद्ध्यापत्तेः ।।

किञ्च 'अप्राप्य मनसा सह' इति निषेध्यतया श्रुतमनोवृत्तेरिवान्तःकरणव्याप्ये ब्रह्मणि वाग्वृत्तेरपि सर्वथा निषेधासंभवः । न च शक्तिरेव निषिध्यते । किञ्चित्पदशक्यत्वं विना लक्षणासंभवात् ।।

वाचकत्वसाधकपदत्वहेतुपरिष्कारपूर्वं अद्वैतसिद्ध्युक्तदोषपरिहारकथनम्

न च 'परमार्थसदादिपदं कस्यचिद्वाचकं पदत्वात्' इत्यत्र पदत्वं यदि सुप्तिङन्तत्वं तदा समासपदस्याशक्तत्वेन राजपुरुषादौ व्यभिचारः । यदि शक्तत्वं च तदा साध्यावैशिष्ट्यमिति वाच्यम् । असमस्तत्वे सति व्याकरणादिनिष्पन्नत्वरूपसाधुपदत्वस्य हेतुत्वात् ।

'सत्यज्ञानादिवाक्यं वाच्यार्थतात्पर्यवच्छब्दयुक्तं वाक्यत्वात् । अग्निहोत्रादिवाक्यवत् ।' विषं भुङ्क्ष्वेत्यादावपि विषभुज्यादिपदानां प्रकृतबोधविषयार्थावाचकत्वेऽपि विषादेर्वाचकत्वान्न व्यभिचारः ।।

ब्रह्मणोऽवाच्यत्वे लक्ष्यत्वास्याप्यनुपपत्तिरित्यापादनम्

किञ्च अवाच्यत्वे लक्ष्यत्वानुपपत्तिः । वाच्यार्थसंबन्धित्वेन ज्ञातस्यैव लक्ष्यत्वात् । तज्ज्ञानं च न शब्दभिन्नप्रमाणेन । ब्रह्मण उपनिषन्मात्रगम्यत्वात् । नापि स्वप्रकाशतया नित्यसिद्धम् । शब्दवैय्यर्थ्यात् । अवाच्ये शब्दस्य लक्ष्यकस्यैव वक्तव्यत्वात् । तत्रापि वाच्यसंबन्धित्वेन ज्ञेयत्वेनानवस्था स्यात् । न च वाचकस्यापि गृहीतसंगतिकस्यैव बोधकत्वात् संबन्धग्रहस्य च संबन्धिज्ञानाधीनत्वात्तस्य च ब्रह्मणः शब्दैकमेयत्वात्तवाप्यनवस्थेति वाच्यम् । यौगिकशब्दानां वाक्यतुल्यत्वेन तदनपेक्षणात् । प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वव्युत्पत्तेः ।।

वस्तुतस्तु बुद्धिस्थवति शक्तेन सर्वनाम्ना तत्पदेन बुद्धिस्थवत्वेन[१] सत्यज्ञानादिरूपो बोधो जनितस्ततस्तत्प्रकारकसंस्कारस्तेन बुद्धिस्थत्वांशे उद्बोधकमप्राप्तेन स्वरूपसत्सत्यत्वादिप्रकारेण सत्यं ज्ञानमित्यादिना ब्रह्मोपस्थापितं तत्र सत्यादिपदानां शक्तिः कल्प्यत इति न किञ्चिदनुपपन्नम् । न च ब्रह्मणः स्वप्रकाशतया नित्यसिद्धावप्यावरणाभिभावकवृत्तिजनकत्वेन शास्त्रसार्थक्यम् । स्वप्रकाशस्यावरणासंभवात् । न च निमित्ताभावान्न वाचकत्वम् । सत्यादिपदानां लक्षकत्वे निमित्ताभावस्तस्मिंश्च लक्षकत्व-मित्यन्योन्याश्रयापत्तेः । न च निर्विशेषवाक्येन निमित्ताभावसिद्धिः ।

१. 'बुद्धिस्थत्वेन' इति स्यादिति भाति ।

निर्विशेषवाक्यस्य स्वरूपमात्रपरत्वे प्रवृत्तिनित्ताविरोधात् । निर्विशेषत्वविशिष्टपरत्वे च तस्यैव सत्वे निर्विशेषपदवाच्यत्वस्यैव सिद्धेः । न चावान्तरतात्पर्यजन्यबोधेन विशेषाभावाविषयकेण निमित्ताभावसिद्धिः । निर्विशेषत्वस्यैव विशेषत्वेन विशेषमात्रनिषेधस्य स्वव्याहतत्वात् । अतः सदनन्तगुणालयः सर्वशब्दवाच्यो हरिः सिद्धः ।।

।। इत्यवाच्यत्वभङ्गः ।।

## २६. अथ स्वाभिमतस्वप्रकाशत्वोपपत्तिः

### परोक्तस्वप्रकाशत्वखण्डनम्

ननु 'अत्रायं पुरुषः स्वयं ज्योतिः'[१] इत्यादिश्रुत्यनुसाराद्ब्रह्मणः चिदविषयत्वे सत्यपरोक्षव्यवहारयोग्यत्वरूपस्वप्रकाशतया स्वतः सिद्धत्वात् किमर्थं वाच्यत्वादीति चेन्न ।

स्वं प्रति स्वविषयत्वाभावे स्वव्यवहारजननानुपपत्तेः । स्फुरणान्तराङ्गीकारेऽनवस्थापत्तेः । अन्यत्र क्लृप्तस्य तद्व्यवहारे तद्विषयत्वस्य नियामकस्य त्यागानौचित्यात् । प्रमेयत्वं प्रमेयमित्यादौ प्रमेयत्वस्य स्ववृत्तित्ववदभेदेऽपि विषयित्वोपपत्तेः । न च प्रमेयत्वादिकं न केवलान्वयि । ईश्वरज्ञानविषयत्वरूपप्रमेयत्वस्य केवलान्वयित्वाभावे तस्य सार्वज्ञ्यानुपपत्तेः । न च छिदाया अच्छेद्यत्ववच्चितः चिदविषयत्वम् । मिथ्यात्वानुमित्यादेरपि स्वविषयत्वानापत्तेः ।।

---

१. बृ.उ. ६.३.९.

**चिदविषयत्वं स्वव्यवहारे स्वातिरिक्तसंविदनपेक्षत्वं स्वावच्छिन्नसंविदनपेक्षत्वं स्वप्रकाशत्वमिति पक्षत्रये दोषकथनम्**

एतेन चिदविषयत्वं स्वप्रकाशत्वमिति निरस्तम् । घटादेरपि चिदविषयत्वात् ॥

एतेन स्वव्यवहारे स्वातिरिक्तसंविदनपेक्षत्वं स्वावच्छिन्नसंविदनपेक्षत्वं वा तदिति निरस्तम् । स्ववेद्यत्वेनोपपत्त्या त्वदिष्टासिद्धेः ॥

**स्वस्मिन् स्वविषयत्वसमर्थनपूर्वमद्वैतसिद्ध्युक्तदोषोद्धारः**

'अनुभूतिः स्फुरणविषयः अपरोक्षव्यवहारविषयत्वात् । घटवत्'। न च जडत्वमुपाधिः । पक्षेतरत्वात् । न च स्वस्मिन् वृत्तिविरोधः। स्वस्मिन् स्ववेद्यत्वं हि कथं विरुद्धम् । न तावत्स्वजनकेन्द्रिया-सन्निकृष्टत्वात् स्वाजनकत्वाद्वा । नित्यज्ञानस्यैव स्वप्रकाशत्वाङ्गी-कारात्। तव नित्यचिद्विषयत्वस्य द्वयं विनैव घटादौ सत्वात् । नापि विषयविषयिभावस्य संबन्धत्वेन द्विष्टत्वम् । अतीतारोपि-तात्यन्तासतां ज्ञानदर्शनेन तस्योभयानिष्टत्वात् । न च क्रियाकर्मत्वयोर्विरोधः । विषयविषयिभावातिरिक्तकर्मत्वादेरनङ्गी-कारात्। न च कर्तुः कर्मत्वविरोधः । 'मामहं जानामि' इत्यनुभवेन 'तदात्मानमेवावेत्'[1] इति श्रुत्या च कर्तुः कर्मत्वाविरोधात् । मिथ्यात्वा(९६पेज्)नुमितीशज्ञानादेः स्वविषयत्वस्य दुर्वारत्वात् । न च 'मामहं जानामि' इत्यादौ साक्षिणः कर्तृत्वमहमर्थस्य कर्मत्वं 'तदात्मानं' इत्यादौ चाहमर्थस्य कर्तृत्वाच्चितः कर्मत्वमभेदेन त्वया दर्शनादिति वाच्यम् । मामहमित्यत्र कर्तृकर्मतया प्रतीताहमर्थ-

१. बृ.उ. ३.५.४.

भिन्नसाक्षिणि मानाभावात् । 'तदात्मानं' इत्यत्राप्यहमर्थ-समानाधिकरणतया प्रतीतात्मन्यहमर्थभेदस्य बाधितत्वात् ।।

किञ्च चिदविषयत्वं स्वप्रकाशत्वं घटेऽप्यस्ति । न च ज्ञानसामान्याविषयत्वम् । ब्रह्मासिद्ध्यापत्तेः । न च स्वतः सिद्धं तत् । स्वत इत्यस्य स्वेनैवेत्यर्थे स्वविषयत्वापत्तेः । प्रमाणं विनेत्यर्थे उपायान्तरानुपन्यासेन तदसिद्ध्यापत्तेः । नृशृङ्गादेरपि सिद्ध्यापत्तेः । तद्विषयत्वे स्वप्रकाशत्वहानेश्च । न च तदसत्वव्यावृत्तिफलकप्रमाणं नास्ति, प्रकृते च वृत्तिविषयतामात्रेण तदस्ति । ब्रह्मणो वृत्त्यविषयत्वे तदसद्व्यावृत्यसंभवात् तद्विषयत्वे चास्वप्रकाशत्वापत्तेः ।।

ब्रह्मणः स्वविषयत्वाभावे संशयानुवृत्त्यापादनम्

किञ्च तद्विषयकसंशयं प्रति तद्विषयकनिश्चयस्य विरोधितायाः क्लृप्तत्वेन स्वविषयत्वं विना स्वसंशयविरोधानुपपत्तेः । न च विषयत्वाभावेऽपि स्वनिर्वाहकत्वेन स्वसंशयविरोधित्वाद्युपपत्तिः । स्वनिर्वाहकपदेन निर्वहणक्रियाकर्तृकर्मत्वादेरेवोक्तेः । न च 'स्वयं दासास्तपस्विनः' इत्यादौ दासान्तराभावमात्रेण स्वदासत्वव्यपदेशवत् स्वभिन्नस्वन्निर्वाहकानपेक्षत्वमात्रेण स्वनिर्वाहकत्वोपचारः । दासान्तराभावे सति स्वदास्यं कुर्वत्येव तपस्विनि तथा व्यवहारेण समाध्यादिषु स्थिते तदव्यवहारेण दृष्टान्तासिद्धेः । 'स्वाध्यायोऽध्येतव्यः' इति विधौ स्वविषयत्वदर्शनाच्च । न च 'मामहं जानामि' इत्यादवमहमर्थविषयकं ज्ञानं वृत्तिरूपमेव नतु स्वरूपज्ञानम् । वृत्त्यनुत्पत्तिदशायामहमनहं वेति कदाचित्संशयाद्यापत्तेः । 'घटिकाद्वयं घटोऽयं घटोऽयमिति पश्यन्नेवाहमासं' इति धारावहनोत्तर-परामर्शानुपपत्तेश्च । न हि घटाकाराहमाकारा चेति वृत्तिद्वयं युगपत्प्रागुत्पन्नम् । तद्यौगपद्यानङ्गीकाराच्च ।।

परोक्तस्वप्रकाशे श्रुतेरनुपपन्नताप्रदर्शनम्

'अस्तमित आदित्ये याज्ञवल्क्य किं ज्योतिरेवायं पुरुषः'[१] इत्यादिप्रश्नपूर्वकं चन्द्रमोग्निवाचोज्योतींष्युक्त्वा 'चन्द्रमस्यस्तमिते शान्तेऽग्नौ शान्तायां वाचि किं ज्योतिरेवायं पुरुषः'[२] इत्यादिना ज्ञानसाधनानामभावे किं ज्ञानसाधनमिति जनकेन पृष्टे याज्ञवल्क्येनोक्तम्, 'आत्मैवास्य ज्योतिर्भवति'[३] इति । अत्रोपक्रम आत्मशब्दो द्युभ्वाद्यधिकरणन्यायेनेशपरः । 'अत्रायं पुरुषः स्वयं ज्योतिः'[४] इत्युपसंहारस्य अत्र सुषुप्त्यादौ ज्ञानसाधनसामान्याभावे अस्य जीवस्यायं परेश एव स्वयं जोतिर्ज्ञानसाधनम् । 'वाचैवायं ज्योतिषाऽऽस्ते'[५] इति ज्योतिःशब्दस्य वाचि ज्ञानसाधने प्रयोगात्। त्वदभिमतस्वप्रकाशपरत्वे सदा स्वप्रकाशत्वेन श्रुतावत्रेत्यस्य वैय्यर्थ्यात् । न च जाग्रदवस्थायामादित्यादिज्योतिःसंभवेन दुर्विवेकतया अस्यामवस्थायां सुविवेकतयात्रेति सार्थकं । स्वप्रकाशनिर्विशेषस्याविवेकाद्यसंभवात् । अस्येति षष्ठ्या विषयत्वाभिधानाच्च। स्वविषयत्वरूपस्वप्रकाशज्ञानेन सविशेषाभिन्नः स्वप्रकाशश्च जीवः परेशश्चासिद्धः ।।

।। इति स्वाभिमतस्वप्रकाशत्वोपपत्तिः ।।

---

१. बृ.उ. ६.३.३,४,५,
२. बृ.उ. ६.३.४.
३. बृ.उ. ६.३.६.
४. बृ.उ. ६.३.६
५. बृ.उ. ६.३.९

## २७. अथ अहमर्थस्यात्मत्वम्

### अहमर्थभिन्नस्वप्रकाशात्मनि प्रमाणाभावसमर्थनम्

ननु 'मामहं जानामि' इत्याद्यनुभवेन स्वविषयत्वरूपस्वप्रकाशत्वं स्यादात्मनो यद्यहमर्थ आत्मा स्यात् । स एव तु न । सुषुप्तौ स्वप्रकाशस्यात्मनः सत्वेऽप्यनेवंभूतस्याहमर्थस्यासत्वादिति चेन्न । अहमर्थभिन्नस्वप्रकाशात्मनि मानाभावात् । 'अहमस्वाप्स्वं' इत्यहमर्थनिष्ठतया सुषुप्तेः परामर्शात् । न चाहमर्थ इच्छादिगुणविशिष्ट एव गृह्यत इत्यावयोः समम् । सुषुप्तौ च नेच्छादिरिति कथं तदाऽहमर्थानुभवः । अहं सुखी दुःखी स्वामीति प्रतीतिभिन्नात्ममात्रविषयकप्रतीतेरसत्वेनात्मनोऽपीच्छादिविशिष्टतयैव ग्रहणात् । इच्छादिग्रहं विनाऽऽत्मग्रहाङ्गीकारे अहमर्थस्यापि तदङ्गीकारे क्षतेरभावात् । सुखत्वेनाननुभूतस्याहमर्थस्य 'सुखमस्वाप्सं' इति सुखत्वेनैव परामर्शाच्च । 'न किञ्चिदहमवेदिषं' इत्यज्ञानाश्रयत्वेन सुषुप्तावनुभवादहमर्थ आत्मा ॥

### सुषुप्तौ अहमर्थात्मानुभवसमर्थनम्

ननु सुषुप्तौ नाहमर्थोऽनुभूतः । न च परामर्शानुपपत्तिः । जागरे सत्युत्पन्नेऽनुभूयमानेऽहमर्थे परामृश्यमानात्माभेदारोपात् परामर्श्यत्वोपपत्तेरिति चेन्न । इदं रूप्यमित्यादावरोप्यरूप्याभिन्नतयेदमर्थस्येवाहमित्यत्राहमर्थाभिन्नतया ऽत्मनो प्रतीतिः । अन्यथा 'एतावन्तं कालं सुप्तोऽहमन्यो वा' इति कदाचित्संशयः स्यान्न त्वहमेवेति निश्चयः । न च सुषुप्तिकालानुभूतात्मैक्याध्यासान्निश्चयोपपत्तिः । अहमर्थातिरिक्तात्मानुभवस्यालीकत्वात् । 'एतावन्तं कालं स्वप्नं पश्यन्नासं' 'जाग्रदासं' इत्यत्रेव 'अहमस्वाप्सं'

इत्यत्राप्यहमंशे परामर्श्यत्वानुभवात् । न च परामृश्यमानात्मैक्यारोपात्तदुपपत्तिः । अपरामर्शे परामर्शत्वारोपस्य काप्यदर्शनात् । सिद्धे अहमर्थस्यात्मान्यत्वे परामृश्यमानात्मैक्यारोपः । सिद्धे च तस्मिन् सुषुप्तावप्रकाशेनाहमर्थस्यात्मान्यत्वसिद्धिरित्यन्योन्याश्रयापत्तेः ।।

श्रुतिविरोधपरिहारः

'न विजानात्ययमहमस्मि'[1] इति श्रुतिः 'नात्मानं न पारांश्च'[2] इति सुषुप्तावात्माज्ञानश्रुतिवद्विशेषाज्ञानपरा । न च 'अहरहः ब्रह्म गच्छन्ति'[3] 'सति सम्पद्य न विदुः'[4] इत्यात्मवेदनबोधकश्रुतिविरोधेन विशेषाज्ञानपरत्वं युक्तमिति वाच्यम् । एतच्छ्रुतेरीशपरत्वात् । 'योऽहमस्वाप्सं सोऽहं जागर्मि' इति प्रत्यभिज्ञाविरोधस्य सुषुप्तावहमर्थस्याज्ञानेऽपि सत्वात् ।।

सुषुप्तावहमर्थाभावे बाधकप्रदर्शनम्

किञ्च सुषुप्तावहमर्थाभावे 'अहं निर्दुःखः स्यां' इतीच्छया सुषुप्त्यर्थं प्रवृत्त्यनुपपत्तिः । न च 'कृशोऽहं स्थूलः स्यां' इतिवत् प्रवृत्त्युपपत्तिः। कार्श्यस्य परंपरासंबन्धेनानारोपितस्यारोपितस्य वाऽहमर्थे विद्यमानत्वेन प्रवृत्त्युपपत्तावपि सुषुप्तावहमर्थस्य नाशात्तदानीन्तनसुखादिसम्बन्धाभावेन प्रवृत्त्यनुपपत्तेः । विवेकिनां 'मम देहः स्थूलः स्यां' इतीच्छयैव प्रवृत्तेश्च । न हि 'ममात्मा निर्दुःखः स्यां' इतीच्छया कस्यापि सुषुप्तौ प्रवृत्तिः । 'योऽहं सुप्तः सोऽहं जागर्मि'

---

१. छा.उ. ८.११.१.
२. माण्डू.उ. २.४.
३. छा.उ. ८.३.२.
४. छा.उ. ६.९.१.

'योऽहं पूर्वेद्युरकार्षं सोऽहमद्य करोमि' इति प्रत्यभिज्ञानुपपत्तेश्च । कर्तुर्भोक्तुरहमर्थस्य भेदेन कृतहानाकृताभ्यागमप्रसङ्गाच्च । न च सुषुप्तौ कारणात्मना स्थितस्यैवोत्पत्त्यङ्गीकारान्नानुपपत्तिः। कर्तृभोक्तृकारणस्य कर्तृत्वादिशून्यस्य स्थितावपि कृतहानादेरनुद्धारात्। 'अथ हैतत्पुरुषः स्वपिति' इत्यारभ्य [१]'गृहीतं चक्षुर्गृहीतं श्रोत्रं गृहीतं मनः' इत्यादिश्रुतौ मनआदीनमेवोपरमोक्तेः ।।

पृथगुपदेशः आत्माहमर्थयोः भेदे प्रमाणमिति पक्षखण्डनम्

न च 'अथातोऽहङ्कारादेशः'[२] 'अथातः आत्मादेशः'[३] इति पृथगुपदेश आत्माहमर्थयोर्भेदे मानम् । आत्मनस्त्वन्मते 'स एवाधस्तात्'[४] इत्युपदिष्टेन भूम्नेवाहंकारेणाप्यैक्येऽपि पृथगुपदेशसंभवात्। न च भूमात्मनोर्भिन्नत्वेन प्रत्यक्षसिद्धयोः पृथगुपदेश ऐक्यार्थः । अहङ्कारात्मनोरभेदस्य प्रत्यक्षसिद्धत्वेन तदुपदेशो भेदार्थ इति वाच्यम्। अहमर्थादन्यस्यात्मनो भूमाख्यब्रह्मभिन्नत्वेन प्रत्यक्षासिद्धतया तयोरुपदेशो भेदार्थः । अहमर्थस्य ब्रह्मभिन्नतया प्रत्यक्षसिद्धत्वेन तयोरुपदेश ऐक्यार्थ इत्यापत्तेः । न चाहंकाराद्भिन्नात्मनो भूमरूपब्रह्मभिन्नत्वस्य प्रत्यक्षासिद्धत्वे तदभिन्नत्वस्याप्यसिद्धतया तयोः सार्वात्म्योपदेशानुपपत्तिसहकारेण इयं श्रुतिस्तयोरभेदपरेति वाच्यम् । 'स एवेदं सर्वं'[५] 'अहमेवेदं सर्वं'[६]

---

१. बृ.उ. ४.१.१७.
२. छा.उ. ७.२५.१.
३. छा.उ. ७.२५.२
४. छा.उ. ७.२५.१.
५. छा.उ. ७.२५.१.
६. छा.उ. ५.१.६.

'आत्मैवेदं सर्वं'[१] इत्याद्युपसंहारे 'स एवाधस्तात्' 'अहमेवाधस्तात्'[२] 'आत्मैवाधस्तात्' इत्युपक्रमे च 'सर्वं समाप्नोषि ततोऽसि सर्वः'[३] इत्यादिस्मृत्यनुसारात् सर्वगतत्वस्यैवोक्तेः । जडादिना सहैक्यस्य ब्रह्मणि सर्वमानविरुद्धत्वात् । भूमात्मोपदेशाभ्यामेवैक्यसिद्धौ अहङ्काकारोपदेशवैय्यर्थ्याच्च । न च ब्रह्मण आपरोक्ष्यायाहङ्कारैक्योक्तिः । त्वन्मते प्रत्यगर्थरूपस्यात्मन एवापरोक्षैकरसत्वेन तदैक्येनैवा-परोक्ष्यसिद्धेः । न चाहंकारस्यापरोक्ष्यं सुप्रसिद्धम् । देहापरोक्ष्यस्य ततोऽपि सुप्रसिद्धत्वेन तदैक्योपदेशापत्तेः ।।

किञ्च–

'भूमा नारायणाख्यः स्यात्स एवाहंकृतिः स्मृतः ।
जीवस्थस्त्वनिरुद्धो यः सोऽहङ्कार इतीरितः ।।

अणुरूपोऽपि भगवान् वासुदेवः परो विभुः ।
आत्मेत्युक्तः स च व्यापी...............।।'

इत्यादिस्मृत्या भगवद्रूपपरतया व्याख्यातत्वात् । मोक्षधर्मेऽपि[४]–

अनिरुद्धो हि लोकेषु महानात्मा परात्परः ।
योऽसौ व्यक्तत्वमापन्नो निर्ममे च पितामहम् ।।
सोऽहङ्कार इति प्रोक्तः सर्वतेजोमयो हि सः ।। इत्युक्तेः ।

न चैकविषयकोपदेशत्रयम् व्यर्थम् । मुमुक्षुज्ञेयैकनिष्ठात्मत्व-भूमात्वाद्यनेकधर्मबोधकतया उपदेशत्रयसार्थक्यात् ।।

१. छा.उ. ७.२५.२.
२. छा.उ. ७.२५.१.
३. भग.गी. ११.४०
४. शान्ति. ३२७.२६

### अहंकार-अहंशब्दयोः भेदकथनम्

'अहङ्कारश्चाहं कर्तव्यं च'[१] इति श्रुतौ 'महाभूतान्यहंकारः'[२] इति स्मृतौ चाहङ्कारशब्दो मान्ताव्ययरूपकारप्रत्ययान्तः । 'दम्भाहंकारः'[३] इत्यादौ देहेऽहंबुद्धौ गर्वे च प्रयोगेण नानार्थः । आत्मवाच्यहंशब्दोऽस्मच्छब्दसिद्धः । न च शब्दद्वयस्याहङ्कारे शक्तिस्तद्भिन्नेऽनिरुद्धादौ लक्षणा । अहङ्कारशब्दस्य तुल्यतयाऽनेकप्रयोगादेकत्र शक्तेर्नियन्तुमशक्यत्वात् । अहंशब्दस्याहंकारशब्दवदात्मभिन्ने प्रयोगप्राचुर्याभावात् ।।

### अहमर्थस्यानात्मत्वसाधकानुमाननिराकरणम्

न च 'अहमर्थो नात्माऽहंधीविषयत्वात् देहवत्' इति वाच्यम् । अहमर्थान्तर्गते तद्धीविषये चैतन्ये व्यभिचारात् । न च येन रूपेणाहंधीविषयता तेन रूपेणानात्मत्वं स्वरूपेणात्मत्वमिति न व्यभिचारः । 'अहमात्मा गुडाकेश'[४] इत्यात्मत्वेनाप्यहंधीविषयत्वात् । स्वरूपेणात्मत्वे मानाभावाच्च । न च 'अहमर्थ आत्मान्यः अहंशब्दाभिधेयत्वात् अहंकारशब्दाभिदेयवत्' इति वाच्यम् । 'अहमात्मा गुडाकेश' इत्यहंशब्दाभिधेये हरौ व्यभिचारात् ।।

### अहमर्थस्यानात्मत्वे श्रुत्युक्तानुपपत्तिकथनम्

किञ्च 'मा न भूवं भूयासं' इत्यहमर्थस्यानात्मत्वे प्रेमास्पदत्वमनुपपन्नम् । न च प्रेमास्पदात्मतादात्म्यारोपेण प्रेमास्पदत्वोपपत्तिः ।

---

१. षट्.उ. ४.५.
२. भग.गी. १३.६,७.
३. भग.गी. १७.५.
४. भग.गी. १०.२०.

समारोप्यस्वरूपेण विषयो रूपवान् भवेत् ।
विषयस्य तु रूपेण समारोप्यं न रूपवत् ।।

इति वचस्पत्युक्तेरन्तःकरणगताप्रेमास्पदत्वस्यैवात्मनि प्रतीत्यापत्तेः ।।

अन्तःकरणगताप्रेमास्पदत्वस्यात्मन्यभानमित्यद्वैतसिद्ध्युक्तिनिराकरणम्

ननु किमधिष्ठानगतधर्मस्यारोप्ये अभानमापाद्यते । आरोप्यधर्मस्याधिष्ठाने भानं वा । नाद्यः । यद्धर्मवत्तया ज्ञायमानमधिष्ठानं तस्येदंत्वादेरारोप्यनिष्ठतया भानात् । यद्धर्मवत्तयाऽधिष्ठाने ज्ञाते आरोप्यनिवृत्तिस्तस्यैवासाधारणधर्मस्यारोप्ये अभाननियमात् । अधिष्ठाननिष्ठस्य प्रेमास्पदत्वस्यासाधारणधर्मत्वान्नारोप्ये तस्य भानम् ।

न द्वितीयः । आत्मैक्याध्यासकाल एव प्रेमास्पदत्वसंभवेनारोप्येऽप्यप्रेमास्पदत्वाप्रतीतेः । कुतो विषये तत्प्रतीतिरिति चेन्न । अनिदमि रूप्ये शुक्तिनिष्ठेदन्त्वादिभानवदधिष्ठाननिष्ठसाधारणधर्मस्यारोप्ये भानेऽप्यसाधारणधर्मस्य प्रेमास्पदत्वादेर्भानासंभवात् । आरोप्यासाधारणधर्माणां भीषणत्वादीनां रज्वामिवारोप्यासाधारणधर्माणामप्रेमास्पदत्वादीनामेवात्मनि भानापत्तेः । अहमर्थस्याप्रेमास्पदत्वेन कदापि भानाभावेनात्मैक्याध्यासकाल एवेत्युक्तेस्तुच्छत्वात् । अहमर्थनिष्ठतया कदाऽप्यननुभूतस्याप्रेमास्पदत्वस्य तद्धर्मत्वासंभवेन प्रेमास्पदत्वस्यैव स्वाभाविकतद्धर्मत्वोपपत्तेश्च । मोक्षेऽहमर्थाभावे बौद्धमतप्रवेशापत्तेः । प्रेमास्पदाहमर्थस्य त्वन्मतेऽपि नाशात्तदतिरिक्तशून्यस्य तन्मतेऽप्यनाशात् । न चाहमर्थभिन्नेऽऽत्मनि प्रेमधीः

कदाचिदस्ति । [1]'मामृतं कृधि ज्योतिरहं विरजा विपाप्मा भूयासं' इति श्रुत्याऽहमर्थामृतत्वोक्तेः । 'अहं मुक्तः स्यां' इतीच्छाया अपि तद्विषयत्वात् । न च 'अहं पुष्टः स्यां' इतीच्छावदुपपत्तिः । 'मम शरीरं पुष्टं स्यात्' इतिवत् 'ममात्मा मुक्तः स्यात्' इतीच्छाया अदर्शनात् । न च यद्यपीच्छा समयेऽन्तःकरणाध्याससंभवेनात्ममात्रमुक्तीच्छा नास्ति । तथापि विशिष्टगतमुक्तीच्छाया एव विवक्षितविवेकेन विशेष्यगतमुक्तिविषयत्वपर्यवसानमिति वाच्यम्। अहमर्थभिन्नतयाऽऽत्मनो भानस्य काप्यदर्शनेनैव तत्कल्पनस्याप्रामाणिकत्वात् । इदं रूप्यमित्यादाविव भ्रान्तेर्द्व्यंशत्वनियमात् । अहमित्यत्र द्व्यंशताया अननुभवात् । अननुभूयमानस्य द्व्यंशत्वकल्पने आत्मेत्यत्रापि तत्कल्पनापत्तेः । न च 'अहं स्फुरामि' 'अहमस्मि' इति द्व्यंशता भात्येव । 'ब्रह्म स्फुरति' 'आत्माऽस्ति' इत्यादावपि तदापत्तेः ।।

अहमर्थस्य मोक्षान्वयित्वसाधकानुमानकथनम्

'अमर्थो मोक्षान्वयी तत्साधनकृत्याश्रयत्वात् संमतवत्' इत्यनुमानात् । न च स्वर्गसाधनकृत्याश्रये ऋत्विजि व्यभिचारः । उद्देश्यतासंबन्धेन हि यत्र कृतिस्तत्र फलमित्येव नियमः । ऋत्विजां दक्षिणाया एवोद्देश्यत्वात् । 'अहमर्थोऽनर्थनिवृत्त्याश्रयः अनर्थाश्रयत्वात् संमतवत्' इत्यपि साधु । देहस्यानर्थाश्रयत्वाभावात् न व्यभिचारः।।

श्रुतिस्मृतिभ्यामहमर्थस्यात्मत्वसमर्थनम्

किञ्च 'किं न्वहमुत्क्रान्ते उत्क्रान्तो भविष्यामि । कस्मिन्वा प्रतिष्ठिते प्रतिष्ठास्यामि । स प्राणमसृजत'[2] । 'त हन्ताहमिमास्त्रिस्रो

१. ऋ.सं. ९.११३.११.
२. षट्.उ.३.

देवताः'[१] इत्यादौ जगत्कारणे सति प्राणनःसृष्टेः पूर्वमहंतोक्तेः । 'तदात्मानमेवावेदहं ब्रह्मास्मि'[२] इत्यवधारणेन शुद्धात्मनोऽहंत्वोक्तेः। 'मामेव ये प्रपद्यन्ते'[३] 'मत्तः परतरं नान्यत्'[४] 'मत्तः सर्वं प्रवर्तते'[५] 'अहमात्मा गुडाकेश'[६] 'ते प्राप्नुवन्ति मामेव'[७] 'ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरं'[८] 'मामेकं शरणं व्रज'[९] इत्यादिस्मृत्याऽहमर्थस्य परब्रह्मतोक्तेः ।

मोक्षहेतुकृतेर्योगात् सुषुप्तावन्वयात् तथा ।
अहमात्मेति गीतायामहंत्वम् स्थितमात्मनः ।।

।। इत्यहमर्थस्यात्मत्वम् ।।

## २८. अथ कर्तृत्वाध्यासभङ्गः

निरुपाधिकत्वसोपाधिकत्वाभ्यां विकल्प्य कर्तृत्वारोपनिराकरणम्

ननु स्यान्मोक्षसाधनकृत्याश्रयत्वेनाहमर्थस्यात्मत्वं यदि कृत्यादिकमात्मनि स्यत्, तदेव तु न । कृत्यादेर्बुद्धिधर्मस्यात्मन्यारोपादिति चेन्न । निरुपाधिरयमारोपः सोपाधिर्वा । आद्य उपाधिनिवृत्तिं विनैव सकृत्तत्त्वज्ञानेन निवृत्त्यापत्तेः । द्वितीये 'रक्तं

१. छा.उ. ६.३.२.
२. बृ.उ. ३.५.४.
३. भग.गी. ७.१४.
४. भग.गी. ७.६.
५. भग.गी. १०.८
६. भग.गी. १०.२०.
७. भग.गी. १२.४
८. भग.गी. १८.५५.
९. भग.गी. १८.६६.

कुसुमं' इति प्रमावत्कदाचित् 'मनः कर्तृ' इति प्रमाया 'लोहितः स्फटिकः' इतिवत् 'चैतन्यं कर्तृ' इति भ्रमस्य चापत्तेः । न च कर्तृत्वविशिष्टान्तःकरणस्य चैतन्यात्मनाऽध्यासान्न तथा ज्ञानम् । कुसुमस्य स्फटिकात्मनाऽनध्यासात्तथा धीरिति वाच्यम् । अधिष्ठानात्मनाऽनध्यस्ते जपाकुसुमस्थानीयमुपाधिं विना भीषणत्वादियुक्तस्य रज्वात्मनेव कर्तृत्वादियुक्तबुद्धेश्चिदात्मना अध्यासे रज्जौ भीषणत्वान्तरस्येवात्मनि कर्तृत्वान्तरस्यानध्यासेन सोपाधिकत्वानुपपत्तेः । न चात्मनि कर्तृत्वान्तरमेवाध्यस्तम् । कदाचित्कर्तृत्वद्वयस्य विविच्य प्रतीत्यापत्तेः । न चात्मान्तःकरणयोरैक्याध्यासान्न तथा धीः । अध्यस्यमानधर्माश्रयस्याभेदारोपे औपाधिकत्वानुपपत्तेः। न च रज्जुसर्पादावध्यस्यमानभीषणत्वादिविशिष्टसर्पापेक्षया अधिकसत्ताकसर्पान्तरस्य संभवेन नायमुपाधिरतो निरुपाधिकत्वम्। अत्राध्यस्यमानान्तःकरणापेक्षया कर्तृत्वादिधर्मविशिष्टमन्यदधिकसत्ताकं नास्त्येवेत्यन्तःकरणमात्रोपाधिरिति वाच्यम् । स्फटिकेऽध्यस्यमानप्रातिभासिकलौहित्यापेक्षया अधिकसत्ताकलौहित्यान्तरस्य सत्वेन तस्यापि निरुपाधिकत्वापत्तेः । न च यत्र धर्मी तादात्म्येनारोपितस्ततोऽधिकसत्ताकातिरिक्तश्चास्ति स निरुपाधिक आरोपः । 'लोहितः स्फटिकः' इत्यत्र तु धर्मी न तादात्म्येनारोपितस्ततः सोपाधिकलौहित्योपपत्तिरिति वाच्यम् । 'मम मनः' 'मम बुद्धिः' 'ममान्तःकरणं' इति समानेन्द्रियजन्यभेदधिया प्रतिबन्धात् समानेन्द्रियजन्याभेदारोपासंभवेन धर्ममात्रस्येव[1] वक्तव्यत्वेन लौहित्यादेरिव कर्तृत्वादेरुभयत्र प्रतीतेर्दुर्वारत्वात् । सोपाधिकस्थले धर्मारोपेणैवोपपत्त्या धर्म्यारोपस्याप्रामाणिकत्वाच्च । 'समीपस्थित उपदधाति स्वीयं धर्ममन्यत्र' इति ह्युपाधिलक्षणम् ॥

१. 'धर्ममात्रस्यैव' इति स्यादिति भाति ।

### परसम्मत्यापि कर्तृत्वमनारोपितमात्मनिष्ठमिति समर्थनम्

अभेदग्रहदशायामपि 'अयं भीषणः' 'सर्पो भीषणः' 'अहं गौरः' 'शरीरं गौरं' इतिवत् 'मनः कर्तृ' 'चैतन्यं कर्तृ' इति प्रतीत्यापत्तेश्च। 'कर्ता शास्त्रार्थवत्वात्'[१] इति नये त्वयापि सांख्यरीत्या बुद्धेः कर्तृत्वप्राप्ते जीवस्यैवेति सिद्धान्तितत्वाच्च । अविवेकनिबन्धनं जीवनिष्ठत्वं हि सांख्यस्याप्यस्ति । न च बुद्धेरेव कर्तृत्वं भोक्तृत्वं चैतन्यस्येति प्राप्ते कर्तृत्वभेक्तृत्वयोरैकाधिरण्यनियमेन भोक्तृत्ववत्कर्तृत्वस्याप्यात्मन्यस्तीति सिद्धान्त इति वाच्यम् । आरोपितकर्तृत्वादेः सांख्येनाप्यत्मन्यङ्गीकारात् ।।

### कर्तृत्वस्य बुद्धिनिष्ठत्वे बन्धमोक्षयोर्वैय्यधिकरण्यापादनम्

मुक्त्यन्वयिनः शुद्धस्य कदापि नानर्थाश्रयत्वेन प्रतीतिः भ्रमकाले 'अहं भोक्ता' प्रमाकाले 'बुद्धिर्भोक्त्री' इति प्रतीतेरिति बन्धमोक्षयोर्वैय्यधिकरण्यापत्तेः । न च शुद्धोपहितयोः स्वाभाविकभेदाभावेन बन्धबोक्षयोः सामानाधिकरण्योपपत्तिः । उपहितगतानर्थस्य शुद्धगतत्ववत्तद्गतदृश्यत्वमिथ्यात्वादेरपि शुद्धगतत्वोपपत्तेः । बुद्धेः कर्तृत्वे मोक्षस्यापि तत्रापत्तेः । 'शास्त्रफलं प्रयोक्तरि' इति न्यायात् । न च जातेष्टिपितृश्राद्धादौ व्यभिचारः । कृतिफलयोः सामानाधिरण्योपपादकोद्देश्यताख्यसंबन्धस्य फलाधिकरणे पुत्रपित्रादौ सत्वात् । आरोपितानारोपितसाधारणकर्तृत्वस्य फलं प्रति प्रयोजकत्वे बुद्धिदेहयोर्मोक्षान्वयापत्तेः ।।

---

१. ब्र.सू. २.३.३३.

कर्तृत्वादेर्बुद्धिनिष्ठत्वे श्रुत्यादिविरोधोद्भावनम्

किञ्च 'तन्मनोऽकुरुत'[१] इत्यादौ मनसः कृतिकर्मत्वस्य, 'शृण्वन्ति श्रोत्रेण विद्वांसो मनसा'[२] इति करणत्वस्य, 'मन उदक्रामन्मीलित इव अश्नन् पिबन्नास्त इव'[३] इत्यादिश्रुतौ मन-उत्क्रमेऽप्यात्मनः कर्तृत्वस्य, 'परंज्योतिरुपसंपद्य स्वेन रूपेणाभि-निष्पद्यते स तत्र पर्येति जक्षन् क्रीडन् रममाणः'[४] इत्यादौ स्वरूपाविर्भावरूपपरममुक्तावपि कर्तृत्वस्य, 'विज्ञानं यज्ञं तनुते'[५] 'विज्ञानमात्मा'[६] 'यो वेदेदं जिघ्राणीति स आत्मा'[७] 'आनन्दभुक् तथा प्राज्ञः'[८] इत्यादिश्रुतौ विज्ञानकर्तृत्वस्य च श्रवणान्न बुद्धिः कर्त्री। विज्ञानपदं च ब्रह्मपरं 'विज्ञानं ब्रह्म चेद्वेद तस्माच्चेन्न प्रमाद्यति । शरीपे पाप्मनो हित्वा सर्वान् कामन् समश्नुते'[९] इति वाक्यशेषात् । न च 'प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः। अहङ्कारविमूढात्मा कर्ताहमिति मन्यते ।।'[१०] इत्यादिस्मृतिविरोधः । 'तत्रैवं सति कर्तारमात्मानं केवलं तु यः । पश्यत्यकृतबुद्धित्वान्न

---

१. बृ.उ. ३.२.१.
२. बृ.उ. ८.१.८-१२.
३. ऐ.उ. २.१.४.
४. तैत्त.उ. ३.१३
५. तैत्त.उ. २.११.
६. षट्.उ. ४.६.
७. छा.उ. ८.१२.४.
८. छा.उ. ८.१२.४.
९. तैत्त.उ. २.११.
१०. भग.गी. ३.२७.

स पश्यति दुर्मतिः[१] ।।' इत्यनुसारात्केवलस्य स्वतन्त्रस्य कर्तृत्वस्य निषेधात् । अत एव 'ध्यायतीव लेलायतीव'[२] इत्यत्रेवशब्दः परतन्त्रप्रभौ प्रभुरिवेति जीवकर्तृत्वे परतन्त्रतामात्रपरः ।।

चेतनस्य कर्तृत्वे श्रुत्यादिविरोधपरिहारः

न च चेतनस्य कर्तृत्वे निर्विकारश्रुतिविरोधः । श्रुतेर्द्रव्यान्तररूपतया परिणामाभावपरत्वात् । न च निष्क्रियत्वश्रुतिविरोधः । 'स्वाभाविकी ज्ञानबलक्रिया च'[३] इति श्रुत्यनुसारात् प्राकृतक्रियानिषेधपरत्वात् । परिस्पन्दरूपक्रियाभावस्येष्टत्वात् । अस्तीत्यादिधात्वर्थरूपक्रियाया ब्रह्मण्यपि सत्वाच्च । न च क्रियापदं कृतिपरम् । 'रुग्मवर्णं कर्तारमीशं'[४] इति श्रुत्या 'कर्ता शास्त्रार्थवत्वात्'[५] इति सूत्रेण चेतने कृतेर्विहितत्वात् । 'कामः सङ्कल्पः' इत्यारभ्य 'हीर्धीर्भीः सर्वं मन एव'[६] इत्यन्ता श्रुतिर्मनःकरणत्वपरा । 'आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः'[७] इति श्रुतेः । क्षेत्रोत्पन्नधनेन वृक्षोत्पन्नदण्डेन पुरुषस्य धनित्वदण्डित्ववत् अन्तकःरणोत्पन्नकृतिसुखदुःखादिना पुरुषस्याविद्यासहकृतस्वामित्वसंबन्धेन कर्तृत्वदुःखित्वाद्युपपत्तिः । ईशमुक्तानामविद्याभावान्न दुःखादिभोगः । ईशस्य नित्यज्ञानेच्छाकृत्यादिमत्वरूपं कर्तृत्वादिकं सदैवास्ति । न च सदा सृष्ट्याद्यापत्तिः । प्रधानादाविच्छादिसंबन्धसंपादकसृष्टिकालादेः सदाऽसत्वात् ।

१. भग.गी. १८.६
२. गी.भा. २.१९ इत्यत्रोदाहृता श्रुतिः ।
३. श्वेता.उ. ६.८.
४. आथ.उ. ५.३.
५. ब्र.सू. २.३.३३.
६. बृ.उ. ३.६.९.
७. काठ.उ. १.३.४.

सृष्टिप्रलयकालाभ्यां सम्बद्धाया एकस्या एवेश्वरेच्छायाः सिसृक्षात्व-जिहीर्षात्वसंभवात् । यथा अद्वैतिनां वृत्तिश्चिदुपरागार्थेति मते व्यापकस्यापि चैतन्यस्य वृत्तिद्वारक एव घटादिषु संबन्धः । यथा चान्येषां सर्वगतस्यापि गोत्वादेः सास्नादिमत्येव संबन्धो नान्यत्र, तथा नित्यस्यापीश्वरेच्छादेः सृष्टिकालादिना प्रधानादिषु संबन्धो न स्वतः । मुक्तजीवस्य च प्राकृतान्तःकरणादेरभावेऽपि संसारदशा-यामविद्यावृतस्वरूपज्ञनेच्छाकृत्यादेराविर्भावेन स्वाभाविकं कर्तृ-त्वादिकमस्त्येव । 'स तत्र पर्येति जक्षन् क्रीडन् रममाणः'[१] 'संकल्पादेवास्य पितरः समुत्तिष्ठन्ति'[२] इत्यादिश्रुतेः । 'विहारोपदेशात्'[३] 'संकल्पादेव तच्छ्रुतेः'[४] इत्यादिसूत्राच्च ॥

॥ इति कर्तृत्वाध्यासभङ्गः ॥

## २९. अथ देहात्मैक्यारोपभङ्गः

देहैक्यारोपासम्भवोपपादनपूर्वमद्वैतसिद्ध्युक्तसमाधानखण्डनं च

ननु 'अहं गौरः' 'अहं स्थूलः' इति स्थौल्यविशिष्टदेहस्या-हमर्थेऽभेदारोपवत् 'चेतनोऽहं करोमि' इति कृत्यादिविशिष्टाहमर्थस्यापि चेतनेऽभेदारोपः स्यादिति चेन्न । 'योऽहं बाल्ये पितरावन्वभूवं सोऽहं स्थविरो नप्तृननुभवामि' 'योऽहं स्वप्ने व्याघ्रादिदेहः सोऽहमिदानीं मनुष्यदेहः' इति देहभेदपूर्वकं स्वस्यैक्यानुसन्धानादात्मनि देहैक्यारोपासंभवेन दृष्टान्तासिद्धेः । न च प्रत्यभिज्ञारूपं

---

१. छा.उ. ८.१२.३
२. छा.उ. ८.२.१.
३. ब्र.सू. २.३.३४.
४. ब्र.सू. ४.४.८.

भेदकप्रत्यक्षमिदं न भेदप्रत्यक्षव्याप्तम् । न चैक्यधीविरोधि । 'नीला बलाका' इत्यत्र नीलाद्भेदकस्य बलाकात्वस्य ग्रहेऽपि नीलभेद-साक्षात्काराभावस्य तदभेदसाक्षात्कारस्य च दर्शनादिति वाच्यम् । दोषविशेषाजन्यारोपस्यैव विशेषधीप्रतिबध्यत्वात् । नीलधियो दोषविशेषजन्यत्वेन तदप्रतिबध्यत्वात् । न च प्रकृतेऽपि दोषविशेषजन्य आरोपः। भेदज्ञानेन निवृत्यनुपपत्तेः । समानेन्द्रिय-जन्यविरोधिधियः सामानेन्द्रियजन्यां दोषजन्यामपि विरोधिधियं प्रति प्रतिबन्धकत्वाच्च ।।

वस्तुतस्तु यदा यदा भेदकप्रत्यक्षं तदा भेदप्रत्यक्षमिति न कालिकव्याप्त्यङ्गीकारः । किन्तु यत्र यत्र च भेदकप्रत्यक्षं तत्र भेद-प्रत्यक्षमिति दैशिकव्याप्त्यङ्गीकारः । भवति हि बलाकायां दिवा नीलभेदप्रत्यक्षम् । न च देहनाशकाले तद्भेदसिद्धावपि तद्देहकाले तदैक्यारोपसंभवेन मदिष्टसिद्धिरिति वाच्यम् । देहनाशे मृतस्य प्रत्यक्षसामग्र्यभावात् । म्रियमाणस्य जीवद्दशाव्यावृत्तभेदप्रत्यक्षसामग्र्य-भावाच्च । मृतं पश्यतामचाक्षुषात्मप्रतियोगिकात्माधिकरणकभेदस्या-परोक्ष्यासंभवात् ।।

'ब्राह्मणो यजेत' इत्यत्र ब्राह्मणपदार्थकथनम्

'ब्राह्मणो यजेत' इत्यादौ देहविशेषविशिष्ट आत्मैव ब्राह्मणशब्दार्थः। साक्षात्तत्प्रयत्नजन्यक्रियाश्रयत्वं वा तद्भोगायतनत्वं वा तत्कर्मार्जितत्वं अविद्यासहकृतसाक्षात्स्वामित्वं वा संबन्धः । न च कर्मार्जितत्वं पुत्रादिदेहसाधारणम् । पुत्रदेहस्य तददृष्टेनैवोत्पत्तेः । सिद्धग्रामादिष्विव पित्रदृष्टेन संबन्धस्य जननात् । अन्यथा ब्रह्मज्ञानात् पितुर्मुक्तौ पुत्रदेहारंभकपितृकर्मक्षयेण पुत्रदेहनाशापत्तेः ।।

### श्रुतिस्थब्राह्मणपदस्य देहविशेषाध्यासवत्परत्वे दोषकथनम्

श्रुतिस्थं ब्राह्मणपदं लक्षणया देहविशेषाध्यासवत्परं यदि तदा 'पुत्रमित्रादिषु विकलेषु सकलेष्वहमेव विकलः सकलो वा' इति त्वयाऽध्यासाङ्गीकारेण ब्राह्मणमित्रस्य शूद्रस्याधिकारप्रसङ्गात् । शूद्रमित्रस्य ब्राह्मणस्यानधिकारप्रसङ्गाच्च । 'ब्राह्मणो न हन्तव्यः' इत्यादिविधेः सुप्तजीवन्मुक्तविषयकत्वानुपपत्तेश्च । कादाचित्काध्यासस्य नियामकत्वे उत्पन्नज्ञानिन उक्तनिषेधविषयत्वानुपपत्तेः । पातकेन नष्टब्राह्मणस्य तद्विषयतापत्तेश्च । न च पातकमेव तत्रानधिकार-प्रयोजकम्। 'पतितो ब्राह्मणः' इति व्यवहारादिति वाच्यम् । शापादिना यवनचाण्डालादितां प्राप्तस्य तथा व्यवहाराभावात् ।।

### चार्वाकादीनां देह एवात्मा इति प्रतीत्युत्पत्तौ कारणकथनम्

न च प्रत्यक्षैकप्रामाण्यवादिनां चार्वाकादीनां देह एव आत्मेति कथं प्रवादः । अनुगतविषयकप्रत्यभिज्ञारूपप्रत्यक्षस्य देहात्मनोर्भेदस्य भेदकानां चावगाहिनः सविकल्पकस्य चार्वाकादिभिरप्रामाण्या-भ्युपगमात्। अत एवैतादृशकुसमयनिरासकतया देहात्मभेदबोधकश्रुतिः सार्था ।।

### ब्राह्मणत्वस्य प्रत्यक्षत्वोपपादनम्

न च मनुष्यत्वब्राह्मणत्वादेर्देहविशेषविशिष्टात्मवृत्तित्वे चाक्षुषत्वं न स्यात् । केवलात्मनोऽचाक्षुषत्वेऽपि देहविशेषविशिष्टस्य विशिष्टनिष्ठधर्मस्य च प्रतीतिबलाच्चाक्षुषतायाः स्वीकारे क्षतेरभावात्। विशिष्टस्यातिरिक्तत्वेन केवलस्य चक्षुरयोग्यत्वेऽपि देहविशेषविशिष्टस्य तद्योग्यत्वसंभवात् । न चात्मनोऽणुत्वेन चाक्षुषत्वानुपपत्तिः । नव्यतार्किकैरप्यणुद्रव्यनङ्गीकारात् । त्र्यसरेणोरेव नित्यताङ्गीकाराच्च।

देहविशिष्टात्मनिष्ठब्राह्मणत्वादिप्रत्यक्षं प्रति विजातीयचक्षुःसंयोगो हेतुः । न चात्मवृत्तिजातिविषयकत्वेनोक्तधियः सन्दिग्धतया क्लृप्तैः देहचक्षुसंयोगैरेव तन्निर्वाहेऽनन्तानां विजातीयसंयोगानां विशिष्टात्मनि कल्पने मानाभाव इति वाच्यम् । 'त्वां ब्राह्मणं पश्यामि' 'त्वमपि मां ब्राह्मणं पश्य' 'तव ब्राह्मणस्य देहे इदं पश्यामि' इत्यादिव्यवहारैरात्मवृत्तितयैव ब्राह्मणत्वप्रतीतेः । 'दण्डिनो दण्डोऽयं' इत्यादेरिव 'ब्राह्मणस्येदं शरीरं' इति व्यवहारस्याप्युपपत्तेः । देहस्यैव ब्राह्मणत्वे तु मृतब्राह्मणदेहस्य प्रमादात्पदादिताडनेन विप्रताडनपापापत्तेः । न चेष्टापत्तिः । शिष्टैस्तत्र शवस्पर्शप्रायश्चित्तातिरिक्तप्रायश्चित्तानाचरणात् । ब्राह्मणत्वस्य देहमात्रनिष्ठत्वे 'ब्राह्मणस्य हि देहोऽयं क्षुद्रकामाय नेष्यते' इत्यादिस्मृतिविरोधापत्तेः । अस्माकं तु दण्डिनो दण्ड इतिवदुपपत्तेः । मृतब्राह्मणदेहशिरच्छेदादिना ब्रह्महत्याद्यापत्तेः । देहविशेषाध्यासवत्यात्मनि ब्राह्मणत्वादिस्वीकारे चाक्षुषत्वाद्यनुपपत्तेस्तवापि तौल्यात् । अतः कर्दमलिप्तवस्त्रे 'कृष्णं वस्त्रं' पुत्रे सकले विकले च 'अहं सकलो विकलश्च' इत्यादिवत् 'अहं गौरोऽहं स्थूलः' इत्याद्यौपचारिको व्यवहारः न चारोपः । भेदधियो विद्यमानत्वात् । अन्यथा 'मञ्चाः क्रोशन्ति' इत्यत्रारोपापत्यौपचारिकव्यवहारोच्छेदापत्तेः ॥

॥ इति देहात्मैक्यारोपभङ्गः ॥

॥ इति श्रीरामाचार्यविरचितायां श्रुतिसिद्धान्ततत्त्वरत्नप्रकाशिकायां प्रथमः परिच्छेदः ॥

# अथ द्वितीयः परिच्छेदः

## १. अथ मिथ्यात्वनिरुक्तिभङ्गः

न क्षमन्ते विमतयः कटाक्षेण निरीक्षितुम् ।
यत्पदं तमहं वन्दे श्रीहरिं हयकन्धरम् ।।

### जगज्जन्मादिकारणत्वलक्षणस्य स्वरूपलक्षणत्वकथनम्

अलौकिकं वस्तु लक्षणमुखेन ज्ञेयम् । ब्रह्म चालौकिम् । तज्ज्ञानाय 'यतो वा इमानि भूतानि जायन्ते । येन जातानि जीवन्ति । यत्प्रयन्त्यभि संविशन्तीति । तद्ब्रह्म'[१] इत्याद्याः श्रुतयस्तल्लक्षणं वदन्ति । न च तटस्थलक्षणमिदम् । शाखोपस्थाप्य-चन्द्रगतप्रकृष्टप्रकाशस्येव विश्वकर्तृत्वाद्युपस्थाप्यधर्मस्य निर्विशेषेऽभावेन तटस्थत्वासंभवात् । वास्तवविश्वोदयादिकर्तृत्वं विना सार्वज्ञ्याद्यसिद्ध्यापत्तेः । अतः सत्याशेषविश्वोदयादिकर्तृत्वं स्वरूपलक्षणं मुमुक्षुज्ञेयम् ।।

### विश्वमिथ्यात्वसाधकदृश्यत्वादिहेतुकथनम्

ननु स्याद्विश्वकर्तृत्वादिकं स्वरूपलक्षणम् यदि विश्वं सत्यं स्यात्। तदेव तु न । तस्य मिथ्यात्वात् । तथा हि– 'ब्रह्मप्रमान्येन सप्रकारेण वा अबाध्यत्वे सत्यसद्भिन्नत्वे सति चिदन्यत् मिथ्या दृश्यत्वाज्जडत्वात् परिच्छिन्नत्वात् शुक्तिरूप्यवत्' इति चेन्न । मिथ्यात्वाद्यनिरुक्तेः ।।

---

१. तैत्त.उ. ३.१

### सदसत्वानधिकरणत्वरूपमिथ्यात्वखण्डनम्

ननु सदसत्वानधिकरणत्वं मिथ्यात्वम् । तच्च सत्वविशिष्टासत्वाभावो वा सत्वात्यन्ताभावासत्वात्यन्ताभावरूपं धर्मद्वयं वा सत्वात्यन्ताभववविशिष्टासत्वात्यन्ताभावरूपं विशिष्टं वेति चेन्न । आद्ये सदेकस्वभावे जगति विशिष्टाभावस्येष्टत्वात् । द्वितीये, सत्वासत्वयोरेकाभावेऽपरस्य सत्वावश्यकत्वेन व्याघातात् । निर्धर्मकब्रह्मवत् सत्वराहित्येऽपि सद्रूपत्वेनामिथ्यात्वोपपत्त्याऽर्थान्तराच्च। शुक्तिरूप्ये अबाध्यत्वरूपसत्वव्यतिरेकस्य सत्वेऽपि साध्यतावच्छेदकावच्छिन्नबाध्यत्वरूपासत्वस्याभावासिद्ध्या साध्यवैकल्याच्च । उक्तं हि बौद्धधिकारे– 'सदसत्वस्य विरोधेनैकत्र विधवन्निषेधस्याप्यनुपपत्तेः' इति । अत एव न तृतीयः ।।

### क्वचिदप्युपाधौ सत्वेनाप्रतीयमानत्वाभाव-त्रिकालाबाध्यत्वाभावयोः साध्यतेति पक्षखण्डनम्

ननु सत्वासत्वयोः परस्परविरहरूपत्वानङ्गीकारान्न व्याघातः । परस्परविरहव्याप्यत्वादिकं च न व्याहतिकरम् । गोत्वाश्वत्वयोः परस्परविरहव्याप्ययोरुष्ट्रे अभावसत्वात् । परस्परविरहव्यापकत्वमपि तथा । सत्वाभाववति शुक्तिरूप्ये बाध्यत्वरूपासत्वस्य विद्यमानत्वेऽपि क्वचिदप्युपाधौ सत्वेन प्रतीयमानत्वानधिकरणत्वरूपासत्वव्यतिरेकस्य विद्यमानत्वेन व्यभिचारितया सत्वव्यतिरेकं प्रत्यसत्वस्य व्यापकत्वाभावात् । किन्तु क्वचिदप्युपाधौ सत्वेनाप्रतीयमानत्वमसत्वम्। त्रिकालावध्यत्वं सत्वम् । तयोरभावः साध्य इति चेन्न । असल्लक्षणस्यासंगे ब्रह्मण्यतिव्याप्तेः । तस्याप्युक्तासत्वाङ्गीकारे लक्षणे सद्भिन्नेत्यस्य वैय्यर्थ्यापत्तेः । शब्दाभासेन तुच्छस्यापि क्वचिदुपाधौ

सत्वेन धीसंभवाच्च । उक्तासत्वाभावस्य शून्यवादिनापि जगति स्वीकाराच्च । लाघवात्सत्वासत्वयोः परस्पराभावत्वस्यैवौचित्याच्च। न चैकेनैव सर्वानुगतेन ब्रह्मसत्वेन सर्वत्र सदिति ज्ञानोपपत्तौ न ब्रह्मवत्सत्वराहित्येऽपि प्रत्येकं सद्रूपत्वकल्पनं युक्तम् । अन्यथाऽनुगतव्यवहारानुपपत्तेरिति वाच्यम् । सत्ता त्रैविध्यस्य त्वयाऽप्यङ्गीकारात्, लाघवेन प्रामाणिकपदार्थापलापे प्रातीतिकसत्तयैव सज्ज्ञानोपपत्तौ सद्रूपब्रह्मणोऽप्यपलापापत्तेः । 'घटो रूपी' 'पटो रूपी' इत्यननुगमेनाप्यनुगतधीदर्शनाच्च । घटादिविषयकवृत्तिविषयत्वेन सद्रूपब्रह्मणो मिथ्यात्वापत्तेश्च ।।

### सत्प्रतियोगिकासत्प्रतियोगिकभेदद्वयं साध्यमिति पक्षनिराकरणम्

एतेन सत्प्रतियोगिकासत्प्रतियोगिकभेदद्वयं साध्यमिति निरस्तम्। निर्धर्मके ब्रह्मण्यतिव्याप्तेश्च । न च सद्रूपं ब्रह्म न तदभावाधिरकणम्। प्रपञ्चेऽपि तुल्यत्वात् । न च ब्रह्मणो निर्धर्मकत्वात् सत्वासत्ववत्तदनधिकरणत्वमपि नास्ति । निर्धर्मकत्वहेतुसत्वासत्वाभ्यां व्याघातात् । सत्वाद्यनधिकरणत्वनिषेधे सदसत्वाधिकरणत्वापत्तेः ।।

### सार्वत्रिकत्रैकालिकनिषेधप्रतियोगित्वं मिथ्यत्वमिति पक्षदूषणम्

नापि सार्वत्रिकत्रैकालिकनिषेधप्रतियोगित्वं मिथ्यात्वम् । निषेधस्य तात्विकत्वेऽद्वैतहानेरतात्विकत्वे सिद्धसाधनतापत्तेः । व्यावहारिकत्वेऽपि तस्य बाध्यत्वेन तात्विकसत्वाविरोधित्वेनार्थान्तराच्च। अद्वैतश्रुतेरतत्वावेदकत्वापाताच्च । तत्प्रतियोगिप्रपञ्चस्य पारमार्थिकत्वापत्तेश्च । न च ब्रह्मस्वरूपो निषेधः । भ्रमकालानिश्चितस्य सापेक्षस्य निषेधस्य भ्रमकालनिश्चितनिरपेक्षनिर्विशेषब्रह्मरूपत्वासंभवात् ।।

### सदसत्वानधिकरणत्वरूपमिथ्यात्वखण्डनम्

ननु सदसत्वानधिकरणत्वं मिथ्यात्वम् । तच्च सत्वविशिष्टासत्वाभावो वा सत्वात्यन्ताभावासत्वात्यन्ताभावरूपं धर्मद्वयं वा सत्वात्यन्ताभवविशिष्टासत्वात्यन्ताभावरूपं विशिष्टं वेति चेन्न । आद्ये सदेकस्वभावे जगति विशिष्टाभावस्येष्टत्वात् । द्वितीये, सत्वासत्वयोरेकाभावेऽपरस्य सत्वावश्यकत्वेन व्याघातात् । निर्धर्मकब्रह्मवत् सत्वराहित्येऽपि सद्रूपत्वेनामिथ्यात्वोपपत्त्याऽर्थान्तराच्च। शुक्तिरूप्ये अबाध्यत्वरूपसत्वव्यतिरेकस्य सत्वेऽपि साध्यतावच्छेदकावच्छिन्नबाध्यत्वरूपासत्वस्याभावासिद्ध्या साध्यवैकल्याच्च । उक्तं हि बौद्धधिकारे– 'सदसत्वस्य विरोधेनैकत्र विधवन्निषेधस्याप्यनुपपत्तेः' इति । अत एव न तृतीयः ।।

### क्वचिदप्युपाधौ सत्वेनाप्रतीयमानत्वाभाव-त्रिकालाबाध्यत्वाभावयोः साध्यतेति पक्षखण्डनम्

ननु सत्वासत्वयोः परस्परविरहरूपत्वानङ्गीकारान्न व्याघातः । परस्परविरहव्याप्यत्वादिकं च न व्याहतिकरम् । गोत्वाश्वत्वयोः परस्परविरहव्याप्ययोरुष्ट्रे अभावसत्वात् । परस्परविरहव्यापकत्वमपि तथा । सत्वाभाववति शुक्तिरूप्ये बाध्यत्वरूपासत्वस्य विद्यमानत्वेऽपि क्वचिदप्युपाधौ सत्वेन प्रतीयमानत्वानधिकरणत्वरूपासत्वव्यतिरेकस्य विद्यमानत्वेन व्यभिचारितया सत्वव्यतिरेकं प्रत्यसत्वस्य व्यापकत्वाभावात् । किन्तु क्वचिदप्युपाधौ सत्वेनाप्रतीयमानत्वमसत्वम्। त्रिकालाबध्यत्वं सत्वम् । तयोरभावः साध्य इति चेन्न । असल्लक्षणस्यासंगे ब्रह्मण्यतिव्याप्तेः । तस्याप्युक्तासत्वाङ्गीकारे लक्षणे सद्भिन्नेत्यस्य वैय्यर्थ्यापत्तेः । शब्दाभासेन तुच्छस्यापि क्वचिदुपाधौ

सत्वेन धीसंभवाच्च । उक्तासत्वाभावस्य शून्यवादिनापि जगति स्वीकाराच्च । लाघवात्सत्वासत्वयोः परस्पराभावत्वस्यैवौचित्याच्च। न चैकेनैव सर्वानुगतेन ब्रह्मसत्वेन सर्वत्र सदिति ज्ञानोपपत्तौ न ब्रह्मवत्सत्वराहित्येऽपि प्रत्येकं सद्रूपत्वकल्पनं युक्तम् । अन्यथाऽनुगतव्यवहारानुपपत्तेरिति वाच्यम् । सत्ता त्रैविध्यस्य त्वयाऽप्यङ्गीकारात्, लाघवेन प्रामाणिकपदार्थापलापे प्रातीतिकसत्तयैव सज्ज्ञानोपपत्तौ सद्रूपब्रह्मणोऽप्यपलापापत्तेः । 'घटो रूपी' 'पटो रूपी' इत्यननुगमेनाप्यनुगतधीदर्शनाच्च । घटादिविषयकवृत्तिविषयत्वेन सद्रूपब्रह्मणो मिथ्यात्वापत्तेश्च ।।

सत्प्रतियोगिकासत्प्रतियोगिकभेदद्वयं साध्यमिति पक्षनिराकरणम्

एतेन सत्प्रतियोगिकासत्प्रतियोगिकभेदद्वयं साध्यमिति निरस्तम्। निर्धर्मके ब्रह्मण्यतिव्याप्तेश्च । न च सद्रूपं ब्रह्म न तदभावाधिरकणम्। प्रपञ्चेऽपि तुल्यत्वात् । न च ब्रह्मणो निर्धर्मकत्वात् सत्वासत्ववत्तदनधिकरणत्वमपि नास्ति । निर्धर्मकत्वहेतुसत्वासत्वाभ्यां व्याघातात् । सत्वाद्यनधिकरणत्वनिषेधे सदसत्वाधिकरणत्वापत्तेः ।।

सार्वत्रिकत्रैकालिकनिषेधप्रतियोगित्वं मिथ्यत्वमिति पक्षदूषणम्

नापि सार्वत्रिकत्रैकालिकनिषेधप्रतियोगित्वं मिथ्यात्वम् । निषेधस्य तात्विकत्वेऽद्वैतहानेरतात्विकत्वे सिद्धसाधनतापत्तेः । व्यावहारिकत्वेऽपि तस्य बाध्यत्वेन तात्विकसत्वाविरोधित्वेनार्थान्तराच्च। अद्वैतश्रुतेरतत्वावेदकत्वापाताच्च । तत्प्रतियोगिप्रपञ्चस्य पारमार्थिकत्वापत्तेश्च । न च ब्रह्मस्वरूपो निषेधः । भ्रमकालानिश्चितस्य सापेक्षस्य निषेधस्य भ्रमकालनिश्चितनिरपेक्षनिर्विशेषब्रह्मरूपत्वासंभवात् ।।

### निषेधस्य व्यावहारिकत्वे दोषकथनम्

ननु व्यावहारिक एवायं निषेधः । न च प्रतियोगिनः पारमार्थिकसत्यत्वापत्तिः । स्वाप्नगजगजाभावयोरुभयोर्जागरे बाधदर्शनात् । तथा च प्रपञ्चतदभावयोर्निषध्यतावच्छेदकस्य दृश्यत्वादेः सत्वादुभयोर्निषेध इति चेन्न । स्वाप्नगजस्य बाधेऽपि तदभावस्याबाधात् । स्वप्नदृष्टात्मादेरबाधाच्च । स्वाप्निकाभावस्य बाधेऽपि स गजो नास्तीति धीनियामकस्याभावान्तरस्य सत्ववत् प्रपञ्चो नास्तीति धीनियामकस्याभावस्यावश्यकत्वात् ।।

### स्वरूपेण पारमार्थिकत्वाकारेण वा प्रपञ्चनिषेधपक्षे दोषोद्भावनम्

किञ्च स्वरूपेण निषेधे सत्वापत्तेः । पारमार्थिकत्वेन निषेधप्रतियोगित्वस्य निर्धर्मके ब्रह्मण्यपि सत्वात् । अबाध्यत्वरूपपारमार्थिकत्वस्य बाध्यत्वरूपमिथ्यात्वनिरूप्यत्वेनान्योन्याश्रयाच्च ।।

### स्वात्यन्ताभावाधिकरणे एव सत्वेन प्रतीयमानत्वं मिथ्यात्वमिति पक्षखण्डनम्

एनेन स्वात्यन्ताभावाधिकरण एव सत्वेन प्रतीयमानत्वं मृषात्वमिति निरस्तम् । 'स एवाधस्तात् स एवोपरिष्टात्'[१] इति प्रतीयमानोपाधिके असंगत्वात् केवलान्यय्यत्यन्ताभावप्रतियोगिनि ब्रह्मण्यतिव्याप्तेः । न च साधिकरणत्वेन ब्रह्मणो मृषात्वेऽपि स्वरूपेण सत्यत्वम् । प्रपञ्चेऽपि तुल्यत्वात् । न च प्रपञ्चस्य साधिकरणतयैव भानं न स्वरूपेण । ब्रह्मणोऽप्यस्तीति कालसंबन्धितयैव भानात् ।।

---

१. छा.उ. ७.२५.१.

### अद्वैतसिद्धिपरिष्कृतज्ञाननिवर्त्यत्वं मिथ्यात्वमिति पक्षनिराकरणम्

ननु ज्ञाननिवर्त्यत्वं मिथ्यात्वम् । तच्च ज्ञानप्रयुक्तावस्थितिसामान्यविरहप्रतियोगित्वम् । दण्डादिना घटादेः स्वरूपेण नाशेऽपि सत्कार्यवादाभ्युपगमेन कारणात्मनोऽवस्थितिरस्त्येवेति न दण्डादिना नष्टेऽपि घटादावव्याप्तिरिति चेन्न । शुक्तिरूप्यस्यापि कारणात्मनाऽवस्थानसंभवेन दृष्टान्तासिद्धिः । न च तत्कारणस्याज्ञानस्य नाशात्तस्यापि नाशः । एकाज्ञानपक्षे ब्रह्मज्ञानात्प्राक् शुक्त्यज्ञाननिवृत्तेरप्यसंभवात् त्वयाऽनङ्गीकाराच्च । 'रूप्यं निवृत्तं' इत्यप्रतीतेः 'शुक्त्यज्ञानं नष्टं' 'भ्रमो नष्टः' इति शुक्तिवत्सत्यस्यैवाज्ञानादेस्तत्प्रतीतेश्च। स्मृतिनिवर्त्यसंस्कारेऽतिव्याप्तेश्च । न च साक्षात्कारत्वेन ज्ञाननिवर्त्यत्वं तत् । परोक्षप्रमानिवर्त्यपरोक्षभ्रमविषयेऽव्याप्तेः । जीवन्मुक्तानुवृत्ताज्ञानलेशे चिरसञ्चिताद्वैतसंस्कारेण निवर्त्येऽव्याप्तेः ॥

### सद्भिन्नत्वं मिथ्यात्वमिति पक्षनिराकरणम्

नापि सद्भिन्नत्वं मिथ्यात्वम् । सत्वं च प्रमाणसिद्धत्वम् । प्रमाणत्वं च दोषासहकृतज्ञनकरणत्वम् । घटादेरपि क्लृप्तदोषहीनप्रत्यक्षादिसिद्धत्वात् । कल्प्यदोषस्य ब्रह्मबोधकवेदेऽपि संभवात् । सर्वप्रमाणगम्ये त्वदभिप्रेते शुद्धेऽतिव्याप्तेश्च ॥

### स्वसमानाधिकरणानधिकरणकात्यन्ताभावप्रतियोगित्वं मिथ्यात्वमिति पक्षखण्डनम्

यत्तु स्वानधिकरणानधिकरणकात्यन्ताभावप्रतियोगित्वं मिथ्यात्वम्। भवति हि शुक्तिरूप्यादिकं स्वाधिकरणातिरिक्तदेशानधिकरणकस्य स्वाधिष्ठानीभूतस्वात्यन्ताभावात्मकचैतन्यस्य प्रतियोगि । एवं

घटादिकमपि चैतन्यरूपाभावप्रतियोगि, चैतन्यस्य निरधिकरणत्वादिति। तन्न । रजताभावस्य व्यावहारिकपारमार्थिकत्वान्यतरास्वीकारे रजतस्य स्वसमसत्ताकाभावेन सह युगपदेकत्र स्थित्यसंभवात् । घटाद्यभावस्य चक्षुरयोग्यचैतन्यात्मकत्वस्वीकारे चाक्षुषत्वानुपपत्तेः। चाक्षुषस्य कृतचैतन्यनामकस्य भूतलादितुल्यस्य मिथ्यात्वेन घटाद्यधिष्ठानत्वासंभवात् । रूप्याधिष्ठानस्य शुक्त्यवच्छिन्नचैतन्यस्य दृश्यस्य मिथ्यात्वेन साधिकरणत्वाच्च । 'इदं रूप्यं भूलतेऽस्ति' इति रूप्याधिष्ठानेदमर्थादेः साधिकरणत्वप्रतीतेश्च ।।

।। इति मिथ्यात्वनिरुक्तिभङ्गः ।।

## २. अथ मिथ्यात्वमिथ्यात्वभङ्गः

### मिथ्यात्वस्य सत्यत्वमिथ्यात्वविकल्पाभ्यां दूषणम्

मिथ्यात्वस्य मिथ्यात्वे प्रपञ्चः सत्यः स्याद्ब्रह्मवत् । मिथ्यात्वस्य सत्यत्वे तेनैवाद्वैतहानिः । तद्वदेव विश्वस्यापि सत्यत्वोपपत्त्या दृश्यत्वादिकमप्रयोजकं स्यात् ।।

### अद्वैतसिद्ध्युक्तपरिहारखण्डनम्

ननु मिथ्यात्वमिथ्यात्वेऽपि न जगत्सत्यत्वोपपत्तिः । तत्र हि विरुद्धयोर्धर्मयोरेकमिथ्यात्वेऽपरसत्यत्वं यत्र मिथ्यात्वावच्छेदकमुभयवृत्ति न भवेत् । यथा परस्परविरहरूपयो रजततदभावयोः । यथा वा परस्परविरहव्यापकयो रजतभिन्नत्वरजतत्वयोस्तत्रैव । तत्र निषेध्यतावच्छेदकभेदनियमात् । प्रकृते तु निषेध्यतावच्छेदकमेकमेव दृश्यत्वादि, यथा गोत्वाश्वत्वयोरेकस्मिन् गजे निषेधे गजत्वात्यन्ताभवव्याप्यत्वनिषेध्यतावच्छेदकमुभयोस्तुल्यमिति नैकतरनिषेधेऽन्य-

तरसत्वं तद्वदिति चेन्न । लाघवात् परस्परविरहरूपयोः सत्यत्वमिथ्यात्वयो रूप्यतदभावयोरिवैकस्य निषेध्यतावच्छेदकस्यासंभवात्। न च संयोगतदत्यन्ताभावयोरिव सत्यत्वमिथ्यात्वयोः समुच्चयोपपत्तिः। तद्वदत्रावच्छेदकभेदाभावात् । अन्यथोभयोरपि तात्त्विकत्वापत्तिः ।।

।। इति मिथ्यात्वमिथ्यात्वभङ्गः ।।

## ३. अथ दृश्यत्वहेतुभङ्गः

शुद्धस्य वृत्तिव्याप्यत्वसमर्थनपूर्वं वृत्तिव्याप्यत्वं दृश्यत्वमिति पक्षनिराकरणम्

दृश्यत्वमपि न वृत्तिव्याप्यत्वम् । वेदान्तजन्यवृत्तिविषये ब्रह्मणि व्यभिचारात् । अन्यथा वेदान्तवैय्यर्थ्यापत्तेः । न च शुद्धं न दृश्यं 'यत्तदद्रेश्यं'[१] इति श्रुतेः । किन्तूपहितमेव । तच्च मिथ्यैव । न हि वृत्तिदशायामनुपहितं तद्भवतीति वाच्यम् । उपहितभाने उपधेयभानावश्यकत्वात् । अज्ञाते धर्मिणि कस्यचिद्धर्मस्य विधाननिषेधयोरसंभवेन दृश्यत्वनिषेधाय शुद्धस्यापि ज्ञेयत्वाच्च । प्रसिद्धार्थकयत्तच्छब्दयोरयोगाच्च । स्वतःसिद्धेर्निरासात् शुद्धासिद्ध्यापत्तेश्च । शुद्धं स्वप्रकाशमिति शब्दजन्यविशिष्टवृत्तौ शुद्धाप्रकाशे तस्य स्वप्रकाशत्वासिद्धेः । प्रकाशे सुतरां तदसिद्धेः । न च शुद्धं स्वप्रकाशमित्यस्य लक्षणया अशुद्धत्वमस्वप्रकाशत्वव्यापकमित्यर्थः। तथा चाशुद्धत्वव्यावृत्त्या शुद्धे स्वप्रकाशत्वं पर्यवस्यति । यथा भेदनिषेधेनाभिन्नत्वमिति वाच्यम् । अशुद्धत्वव्यावृत्तिसंबन्धितया शुद्धस्य ज्ञानाभावे तत्र स्वप्रकाशत्वपर्यवसानासंभवात् । न हि व्यापकाभाववत्त्वेनाज्ञाते व्याप्याभावः सिद्ध्यति । न च 'विष्णवे

१. आथ.उ. १-६.

शिपिविष्टाय' इत्यादौ देवतात्ववद्विषयत्वमपि विशिष्ट एव नतु विशेष्येऽपीति युक्तम् । देवतात्ववदेव विषयत्वस्य विशेषणेऽप्यभावेन भागासिद्धेः । घटत्वादिविशिष्ट एव दृश्यत्वं नतु विशेष्य इत्यापाताच्च। विशिष्टे ज्ञातेऽपि कदाचिद्विशेष्येऽज्ञानाद्यापाताच्च ।।

किञ्च विशिष्टभाने विशेष्यविषयकत्वमावश्यकम् । न हि दण्डीति ज्ञानविषता पुरुषे नास्ति । न च विशेष्यतापन्नं मिथ्यैव । अधिष्ठानस्याधिकसत्ताकत्वनियमेन विशेष्यतापन्नस्य मृषात्वेऽधिष्ठानत्वासंभवात् । न हि विशेष्यतानापन्नं सर्वथा ज्ञानाविषयमधिष्ठानं भवति । जगतोऽपि विशेष्यतापन्नत्वादिना मिथ्यात्वं स्वरूपेण तु सत्यत्वमित्यापत्त्या अद्वैतहानिः स्यात् । शशशृङ्गं तुच्छमिति शाब्दधीविषये तुच्छे त्वन्मते व्यभिचारश्च स्यात् ।।

शब्दाजन्यवृत्तिविषयत्वं दृश्यत्वमिति अद्वैतसिद्ध्युक्तवस्तुतस्तुपक्षखण्डनम्

न च शब्दाजन्यवृत्तिविषयत्वं दृश्यत्वम् । तुच्छशुद्धब्रह्मणोः शब्दाजन्यवृत्त्यविषयत्वान्न व्यभिचारः । सत्यस्य शुद्धस्यैव व्यावहारिकघटाद्यधिष्ठानस्य घटादिगोचरचाक्षुषादिवृत्तिविषयतायाः सत्वात् । न ह्यधिष्ठानमविषयीकृत्याध्यस्तं वृत्तिर्विषयीकरोति । 'मनसैवानुद्रष्टव्यं'[1] 'दृश्यते त्वग्र्यया बुद्ध्या'[2] इति ब्रह्मणोऽपि शब्दाजन्यवृत्तिविषयत्वोक्तेश्च । शब्दैकगम्ये धर्मादौ भागासिद्धेश्च ।।

सप्रकारकवृत्तिविषयत्वं दृश्यत्वमिति पक्षनिराकरणम्

अत एव सप्रकारकवृत्तिविषयत्वं दृश्यत्वमिति निरस्तम् । निश्चितसाध्याभाववति ब्रह्मणि हेतुसन्देहे सन्दिग्धानैकान्त्याच्च ।

१. बृ.उ. ६.४.१९.
२. काठ.उ. १.३.१२.

### चिद्विषयत्वं दृश्यत्वमिति पक्षविमर्शः

नापि चिद्विषयत्वम् । तच्च यथाकथञ्चित् चित्सम्बन्धित्वम् । चितः संयोगादिसम्बन्धोक्तावप्रयोजकत्वादाध्यासिकसंबन्धोक्तावसिद्धेः ।।

### स्वव्यवहारे स्वभिन्नचिदपेक्षानियतिः दृश्यत्वमिति पक्षनिराकरणम्

नापि स्वव्यवहारे स्वभिन्नचिदपेक्षानियतिः दृश्यत्वम् । वृत्तिभिन्नचिदपेक्षाया घटादावसिद्धेः । न च स्फुरणरूपे ब्रह्मणि वृत्तिभिन्नचितः कृत्यभावेऽप्यस्फुरणरूपे घटादौ प्रकाशाय चिद्विषयत्वमावश्यकम् । अज्ञानविरोधिस्फुरणत्वस्य ब्रह्मण्यप्यभावात्। तदविरोधिस्फुरणत्वस्य घटादावपि वक्तुं शक्यत्वात् । न च स्वतो विरोध्यपि वृत्त्यारूढं सदज्ञानविरोधि । स्वाकारवृत्त्यारूढः सन् घटोऽप्यज्ञानविरोधीति वक्तुं शक्यत्वात् ।

न च विषयापरोक्षत्वाय चिद्विषयत्वम् । चित्प्रतिफलनं प्रति प्रयोजकतयाऽऽवश्यकेन वृत्तिगतेन ज्ञानाकरणकत्वादिना विशिष्टेन ज्ञानेन विषयीकृतत्वेन विषयस्यापरोक्ष्योपपत्तेः ।।

### अद्वैतसिद्ध्युक्तपरिष्कृतास्वप्रकाश्यत्वं दृश्यत्वमिति पक्षनिराकरणम्

नाप्यस्वप्रकाश्यत्वं दृश्यत्वम् । तच्चान्यानधीनापरोक्षत्वावच्छिन्नप्रतियोगिताकभेदाश्रयत्वम् । ब्रह्म त्वन्यानधीनापरोक्षं 'यत्साक्षादपरोक्षाद् ब्रह्म' इति श्रुतेरिति वाच्यम् । अन्यं प्रति ब्रह्मापरोक्षत्वस्य प्रमाणाधीनत्वात् स्वविषयत्वानङ्गीकारेण स्वं प्रत्यपरोक्षत्वस्यैवाभवात्। स्वप्रकाशत्वाप्रसिद्ध्या तदभावरूपहेतोरसिद्धेः । स्वविषयस्यापि स्वं प्रत्यपरोक्षत्वे घटादेरपि घटं प्रत्यन्यानधीनापरोक्षत्वस्य

वक्तुं शक्यत्वात् । निर्विशेषे ब्रह्मणि स्वरूपभिन्नापरोक्षत्वस्याभावेन व्यभिचाराच्च । न चान्यानधीनापरोक्षज्ञानरूपस्वप्रकाशत्वाभावो हेतुरिति शङ्क्यम् । सम्प्रत्येव निरसिष्यमाणत्वात् ।।

स्वप्रकाशत्वभिन्नत्वं दृश्यत्वमति पक्षविमर्शः

नाप्यज्ञाननिवर्तकवृत्तिविषयत्वे सति यच्चिदविषयत्वरूपफलाव्यप्यत्वं स्वप्रकाशत्वं तद्भिन्नत्वं हेतुः । अतीतादावसिद्धेः । तदपि स्वसत्ताकाले फलव्याप्यमिति चेत् न । नित्यातीन्द्रियेऽसिद्धेः । तदपि योगिनं प्रति फलव्याप्यमिति चेन्न । चित्सुखेन 'न च योगिप्रत्यक्षगम्यतयाऽपरोक्षत्वम् । धर्मादीनां चोदनैकप्रमाणयोग्यत्वात्'[१] इत्युक्तत्वेन तद्विरोधात् । मदुक्तरीत्या वृत्तिविषये चिदवेद्ये च घटादावसिद्धेश्च । पक्षैकदेशे साक्षिवेद्यान्तःकरणतद्धर्मसुखादौ दृष्टान्ते शुक्तिरूप्ये चासिद्धेश्च ।।

।। इति दृश्यत्वहेतुभङ्गः ।।

## ४. अथ जडत्वहेतुभङ्गः

अज्ञानत्वं जडत्वमिति पक्षनिरासः

नापि जडत्वं हेतुः । तद्धि नाज्ञानत्वम् । आत्मनि व्यभिचारात्। तथा हि– ज्ञानं स्वविषयं परविषयम् वा । नाद्यः । त्वयाऽनङ्गीकारात्। नान्त्यः । मोक्षे पराभावात् । न चार्थोपलक्षितप्रकाशस्यैव ज्ञानत्वात्तस्य मोक्षेऽप्यनपायः । यदा कदाचिद्विषयसंबन्धान्मोक्षे ज्ञानत्ववद्यदाकदाचिद्दुःखादिसम्बन्धात् दुःखित्वाद्यापत्तेः । अभावादिषु सप्रतियोगित्वादेरिव ज्ञाने सविषयत्वस्यापि स्वाभाविकस्य धर्मिसमसत्ताकस्य दर्शनात् ।।

१. तत्त्वप्रदीपिका- पु. १०

### ज्ञानस्य विषयेणाध्यासिकसम्बन्ध इत्यद्वैतसिद्ध्युक्तपक्षनिराकरणम्

न च सविषयत्वं ज्ञानस्य स्वविषयेण सहाध्यासिकः सम्बन्धः। स च न स्वाभाविकः । एतद्धेत्वधीनमिथ्यात्वसिद्धेः प्रागाध्यासिकसंबन्धासिद्धेः । अज्ञानेच्छादेरिव ज्ञानस्यापि सविषयतायाः स्वाभाविकत्वात् । भोक्तृभोज्यं विना भुजेरिव ज्ञातृज्ञेयं विना ज्ञानासंभवाच्च । न चानादौ तदनपेक्षा । अनादेः प्रागभावस्य प्रतियोग्यपेक्षाया जात्यादेर्व्यक्त्यपेक्षाया अज्ञानस्य विषयाश्रयापेक्षाया दर्शनात् । ज्ञानस्य सज्ञेयत्वं हि ज्ञेयोल्लेखित्वम् । तच्चातीतादिविषयकं ज्ञानस्याप्यक्षतम् । तच्च तावानिष्टम् । उल्लेखस्यैव तव संसारत्वेन मोक्षे तदुल्लेखे तद्विप्लवापत्तेः ।।

### आत्मरूपज्ञानविकल्पपूर्वमद्वैतसिद्ध्युक्तिखण्डनम्

किञ्चात्मरूपं ज्ञानं प्रमा भ्रमो वा । नाद्यः । तद्वेद्यस्याविद्यादेः सत्यत्वापत्तेः । नान्त्यः । भ्रमस्य दोषजन्यत्वनियमेनात्मनस्तदभावात्। उभयभिन्नत्वे ज्ञानमेव न स्यात् । न च तार्किकाभिमतेश्वरज्ञानवत् घटादिनिर्विकल्पकवच्चोभयवैलक्षण्येऽपि ज्ञानत्वोपपत्तिः । ईश्वरज्ञानस्य प्रमात्वे गुणजन्यत्वस्य भ्रमत्वे दोषजन्यत्वस्य चापत्तेः । निर्विकल्पकस्य तद्वति तत्प्रकारकत्वाभावादिति वाच्यम् । अबाधितार्थकत्वरूपप्रामाण्यस्येश्वरीयज्ञानादावप्यक्षतेः । विशेष्यावृत्त्यप्रकारकत्वरूपप्रामाण्यस्येश्वरज्ञानविर्विकल्पयोरक्षतत्वाच्च । एतस्य स्वतो ग्राह्यत्वविप्रतिपत्तिरूपव्यवहारानङ्गत्वेन प्रमात्वाप्रयोजकत्वेऽपि विशेष्यावृत्त्यप्रकारकज्ञानविषयस्याबाधितत्वाच्च । प्रमासामान्ये न च गुणजन्यत्वं नियामकम् । किन्तु तद्विशेष एव। 'प्रमामात्रे नानुगतो गुणः' इति मणिकृतोक्तेः । किन्तु

दोषाजन्यत्वमेव हि तन्नियामकम् । वस्तुतस्तु आत्मरूपं ज्ञानं भ्रमस्तद्भिन्नं वेत्यस्मिन् विकल्पे तात्पर्यम् ।।

ज्ञानपदजन्यप्रतीतिविशेष्यभिन्नत्वं जडत्वमिति अद्वैतसिद्ध्युक्तपक्षखण्डनम्

न च ज्ञानपदजन्यप्रतीतिविशेष्यभिन्नत्वं हेतुः । वृत्त्यात्मकज्ञाने भागासिद्धेः । लाक्षणिकज्ञानपदजन्यधीविशेष्यत्वस्य देहेन्द्रियादावपि सत्वेनासिद्धेः । तत्पदजन्यशाक्तबोधविशेष्यत्वाभावस्य ब्रह्मण्यपि सत्वेन व्यभिचारात् ।।

अनानन्दत्वं जडत्वमिति पक्षे दोषकथनम्

न चानानन्दत्वं हेतुः । वैषयिकानन्दे भागासिद्धेः । न च वैषयिकानन्दोऽपि ब्रह्मानन्दः । क्षीरनीरादिपानजानन्दानां तारतम्येनोपलब्धेर्ब्रह्मत्वासंभवात् । न च दुःखनिष्ठोत्कर्षापकर्षयोरानन्दे उपचारः । दुःखलेशाप्रतीतावप्यानन्दतारतम्यप्रतीतेरिति ।।

।। इति जडत्वहेतुभङ्गः ।।

## ५. अथ परिच्छिन्नत्वहेतुभङ्गः

परिच्छिन्नत्वहेतोः व्यभिचारभागासिद्धिकथनम् अद्वैतसिद्ध्युक्तपरिहारखण्डनं च

ननु देशतः कालतो वस्तुतः परिच्छिन्नत्वं हेतुः । तच्चात्यन्ताभावप्रतियोगित्वं ध्वंसप्रतियोगित्वमन्योन्याभावप्रतियोगित्वं च यथायथोक्तमिति चेन्न । आद्यन्तयोर्ब्रह्मणि व्यभिचारात् । मध्यमस्य ध्वंसकालादौ भागासिद्धेः । न चात्यन्ताभावान्योन्याभावयोः प्रतियोगिसमसत्ताकत्वविशेषणान्न ब्रह्मणि व्यभिचारः । तदभावस्य मिथ्यात्वेन तत्समसत्ताकत्वाभावादिति वाच्यम् । अनृतादौ

ब्रह्मात्यन्ताभावान्योन्याभावयोर्मिथ्यात्वे तत्र ब्रह्मसंसर्गस्याभेदस्य च तात्त्विकत्वापत्या पारमार्थिकस्यैवाभावस्याङ्गीकार्यत्वात् । सन्दिग्धा-नैकान्त्यस्य दुर्वारत्वाच्च । अप्रयोजकत्वाच्च । 'आकाशवत्सर्वगतश्च नित्यः'[1] इति श्रुत्युक्ते नित्येऽऽकाशे ध्वंसप्रतियोगित्वासिद्धेश्च । न च 'आत्मन आकाशः सम्भूतः'[2] इति श्रुत्युक्तोत्पत्या तन्नाशोऽनुमेयः। भूताकाशस्योत्पत्तिनाशादिसंभवेऽपि अव्याकृताकाशस्य तदसंभवात्। न हि पूर्तिं विनाऽवकाशनाशः संभवति ।।

### मिथ्यात्वसाधकविभक्तत्वहेतुखण्डनम्

एतेन 'विमतं मिथ्या विभक्तत्वात्' । 'सन् घटः सन् पटः' इति हि घटादिकमननुगतमनुगतसद्रूपे विभज्यत इति निरस्तम् । 'नीलो घटः' 'नीलः पटः' 'घटश्चलति' 'पटश्चलति' 'असन्नृशृङ्गं' 'असत्खपुष्पं' इत्यादौ नीलादिषु घटादीनां असति नृशृङ्गादीना-मध्यासापत्तेः । 'अयं सर्पोऽयं सर्पः' इति रज्जुमालादिष्वननु-गतेष्वनुगतस्य सर्पस्यारोपवदननुगतेषु घटादिष्वनुगतसद्रूपस्या-रोपापत्तेश्च । 'खण्डो गौर्मुण्डो गौः' इत्यादावनुगतगोत्वादौ व्यक्तेरारोपापत्तेश्च । न च सद्रूपब्रह्मभिन्नं गोत्वादिकं नोपेयते । अगवादिव्यावृत्तस्य सकलगवादिविषयव्यवहारस्यानुपपत्तेः । सद्रूपस्य सर्वानुगतत्वेन व्यावृत्तेरसंभवात् । न च तत्तद्व्यक्तिविशिष्टं सत्सामान्यमेव तत्तद्व्यवहारजनकम् । तत्तद्व्यक्तिविशिष्टस्य मिथ्याभूतस्य व्यक्त्यनधिष्ठानत्वेन तत्र व्यक्तेरनध्यासात् । सत्सामान्यव्यक्त्योराध्यासिकातिरिक्तसंबन्धस्य त्वयाऽनङ्गीकारात् ।।

---

१. भाग.ता. २.२.३१.

२. तैत्त.उ. २.३

### सद्रूपे कल्पितत्वसाधकप्रत्येकं तदनुविद्धतया प्रतीयमानत्वहेतुनिराकरणम्

एतेन 'घटादिकं सद्रूपे कल्पितं प्रत्येकं तदनुविद्धत्वेन प्रतीयमानत्वात् । प्रत्येकं चन्द्रानुविद्धजलतरङ्गचन्द्रवत्' इति निरस्तम् । रूपादिहीनस्य ब्रह्मणश्चाक्षुषत्वायोगाच्च । आसंसार-मज्ञानावृतत्वाच्च । शब्दैकगम्यत्वाच्च । न च स्वरूपेणाप्रत्यक्षस्यापि राहोश्चन्द्रावच्छेदेनेव ब्रह्मणोऽपि घटाद्यवच्छेदेन प्रत्यक्षतेति युक्तम्। शब्दाद्यवच्छिन्नस्य गगनादेः श्रावणत्वाद्यापातात् । राहोस्तु दूरदोषेणाज्ञातस्य नीलस्य शुक्लभास्वरचन्द्रसंबन्धाच्चाक्षुषत्वाच्च । न च प्रतिनियतेन्द्रियग्राह्येष्वेव रूपाद्यपेक्षा । सद्रूपं तु सर्वेन्द्रियग्राह्यं यथा मीमांसकमते काल इति न तद्ग्रहे रूपाद्यपेक्षा । चक्षुरादिगृहीतस्य दृश्यस्य मिथ्यात्वेन घटाद्यनधिष्ठानत्वात् ।।

### द्रव्यप्रत्यक्षे रूपाद्यनपेक्षत्वमित्यद्वैतसिद्ध्युक्तपक्षखण्डनम्

एतेन द्रव्यग्रहे रूपाद्यपेक्षा ब्रह्म तु न द्रव्यम् । 'अस्थूलमनणु'[१] इति परिमाणनिषेधादिति निरस्तम् । एतच्छ्रुतेः प्राकृतपरिमाण-निषेधपरत्वाच्च । अन्यथा 'अणोरणीयान्महतो महीयान्'[२] इति श्रुतिविरोधापत्तेः ।

एतेनाध्यस्तद्रव्यत्ववति गुणादौ रूपानपेक्षया चाक्षुषत्वदर्शनेन धर्म्यन्यूनसत्ताकद्रव्यत्ववद्ग्रहे चक्षुषो रूपापेक्षा । ब्रह्मणि च द्रव्यत्वं धर्म्यपेक्षया न्यूनसत्ताकमिति न तद्ग्रहे चक्षुषो रूपापेक्षेति निरस्तम्। स्याद्ध्येषो नियमो यथाऽऽकाशपरिमाणशब्दादीनां द्रव्यत्वेन कदाचिच्चाक्षुषत्वं चक्षुर्योग्यानां गुणादीनां द्रव्यत्वेन गुणत्वादिना

---

१. ब्र.सू.भा. २.३.१२

२. काठ.उ. १.२.२०.

चक्षुषा ग्रहणे स्वाश्रयसमवेतत्वादिसंबन्धेन रूपस्य हेतुत्वमस्त्येवेति ।।

।। इति परिच्छिन्नत्वहेतुभङ्गः ।।

## ६. अथांशित्वहेतुभङ्गः

अंशित्वहेतोः प्रतिपक्षाभाससाम्यादिदोषकथनम्

ननु 'अयं पट एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगी अंशित्वात्पटत्वात्पटान्तरवत्' इति चेन्न । 'अयं पट एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगी न एतत्तन्त्वारब्धद्रव्यत्वात् व्यतिरेकेण पटान्तरवत्' इति प्रतिरोधात् । 'अयं पट एतत्तन्त्ववृत्तिः पटत्वात् पटान्तरवत्' इत्याभाससाम्याच्च । न च यत्रैतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वं तत्रैतत्तन्त्वारब्धत्वाभाव इति व्यतिरेकव्यप्तावेतन्निष्ठप्रागभावप्रतियोगित्वमुपाधिः । उपाध्यभवेनैतत्तन्तुनिष्ठप्रागभवाप्रतियोगित्वेन त्रैकालिकव्याप्यवृत्यन्ताभावप्रतियोगित्वसाधने व्याघातात् । सत्प्रतिपक्षान्तरस्यादोषत्वाच्च ।

न च साध्याप्रसिद्धिः । एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वं किञ्चिन्निष्ठात्यन्ताभावप्रतियोगि संसर्गाभावप्रतियोगित्वव्याप्यत्वात् प्रागभवप्रतियोगित्ववदिति सामन्यतस्तत्प्रसिद्धेः ।।

ज्ञानव्यतिरेकेणासत्वसाध्यकचिदाभासे सत्येवोपलभ्यमानत्वहेतुनिराकरणम्

एतेन 'विमितं ज्ञानव्यवतिरेकेणासत् चिदाभासे सत्येवोपलभ्यमानत्वात्' इति निरस्तम् । ज्ञाने सत्येवोपलभ्यमानत्वस्य ब्रह्मणि व्यभिचारात् । न च ज्ञानं विना ब्रह्मोपलभ्यते । व्याघातात् । चिदाभासशब्देन चैतन्योक्तौ केवलवृत्त्यात्मकज्ञानविषये घटादावसिद्धेः ।।

।। इत्यंशित्वहेतुभङ्गः ।।

## ७. अथ दृश्यत्वादिषूपाधयः

सप्रकारकधीबाधार्हत्वं अध्यस्ताधिकदोषप्रयुक्तभानत्वं प्रतिभासमात्रशरीरत्वं चोपाधिः । देहात्मैक्याद्यध्यासस्यापि सप्रकारकभेदविषयकज्ञानेन बाधयोग्यत्वान्न तत्र साध्याव्याप्तिः । न च सप्रकारकेति अध्यस्ताधिकेति च विशेषणं व्यर्थम् । तद्विनैवोपाधेः साध्यव्यापकत्वात् । तावन्मात्रस्य तु साधनव्यापकत्वान्नोपाधित्वमति वाच्यम् । विशिष्टाभावस्यातिरिक्तत्वेन वैय्यर्थ्याभावात् ।।

।। इति दृश्यत्वादिषूपाधयः ।।

## ८. अथ प्रत्यक्षस्य सत्वग्राहित्वसमर्थनम्

'सन् घटः' 'सद्दुःखं' इत्यादिप्रत्यक्षबाधिताश्च दृश्यत्वादयः । सत्वं च व्याप्यवृत्तिसर्वदेशीयत्रैकालिकनिषेधाप्रतियोगित्वम् । वियदादेः कालिकसंबन्धेन काले वृत्तेर्न तदभावः केवलान्वयीति न तत्राव्याप्तिः ।।

### अद्वैतसिद्ध्युक्ताक्षेपपरिहारपूर्वं कालत्रयघटितसत्वस्य प्रत्यक्षयोग्यत्वसमर्थनम्

ननु च क्षुराद्ययोग्यानेकपदार्थघटितत्वेनैतादृशसत्वस्य ग्रहणे चक्षुरादेर्न सामर्थ्यं । न हि त्रैकालिकसर्वदेशीयव्याप्यवृत्तिनिषेधप्रतियोगित्वं कस्यचित्प्रत्यक्षं येन तदभावः प्रत्यक्षः स्यादिति चेन्न । स्वदेशकालवृत्तिनिषेधप्रतियोगित्वाभावे गृह्यमाणे कालत्रयमध्ये वर्तमानकालस्य सर्वदेशमध्ये प्रकृतदेशस्यापि प्रवेशेन तत्र निषेधप्रतियोगित्वाभावस्य गृहीतत्वात् तत्संवलितकालत्रयवर्तिसर्वदेशीयनिषेधप्रतियोगित्वरूपमिथ्यात्वानुमान प्रतिरोधसंभवात् । न च स्वदेशकालवृत्तिसकलनिषेधप्रतियोगित्वस्य चक्षुराद्ययोग्यत्वेन

तदभावः सुतरां तदयोग्यः । स्वदेशकालवृत्तियत्किञ्चिन्निषेधाप्रतियोगत्वं तु मिथ्यात्वाविरोधीति वाच्यम् । योग्याधिकरणे घटत्वावच्छिन्न-प्रतियोगिताकाभावस्य योग्यत्वनियमात् । एतदधिकरणवृत्तिघटे घटान्तरेष्विवैतदधिकरणवृत्यन्ताभावप्रतियोगित्वं स्यात् तर्ह्युपलभेत योग्यघटान्तरनिष्ठैतत्प्रतियोगित्ववदित्यापादनसंभवेन उक्तनिषेधप्रति-योगित्वाभावस्य घटे योग्यत्वात् ।।

### साक्षिणः कालत्रयाबाध्यत्वग्राहित्वेन तेन बाधकथनम्

किञ्च ज्ञानप्रामाण्यं गृह्णन् साक्षी घटादिगतमबाध्यत्वं गृह्णात्येव। न हि विषयाबाधमनन्तर्भाव्य प्रामाण्यग्रहणमस्ति । न च व्यवहारकालाबाध्यत्वमात्रेण प्रवृत्तौ अविसंवादोपपत्तेस्तद्रूपप्रामाण्यस्य साक्षिग्रहणेऽपि न विरोधः । वर्तमानमात्राबाध्यत्वग्रहेण त्रिकालगतनिषेधप्रतियोगत्वरूपमिथ्यात्वग्रहस्य प्रतिबन्धसंभवात् ।।

### प्रत्यक्षस्य कालान्तरीयबाधकनिषेधः

किञ्च कालान्तरीयबाधकं यत्कालावच्छेदेनाक्षेण स्वार्थो गृहीतस्तत्कालावच्छेदेन तन्निषेधत्युत अन्यकालावच्छेदेन । आद्ये सुस्थो विरोधः । द्वितीये त्वनित्यतैव । न च यदवच्छेदेनाक्षादिना स्वार्थो गृहीतस्तदवच्छेदेनैव निषेधत्यबाध्यत्वरूपप्रामाण्यस्य प्रपञ्चज्ञाने स मयाऽनङ्गीकारादिति वाच्यम् । क्लृप्तदूरादिदोषाभावस्य घटाद्यध्यक्षे सत्वेन स्वतःप्राप्ताबाधितार्थकत्वरूपप्रामाण्यत्यागे बीजाभावात् । कल्प्यदोषस्य त्वदभिमताद्वैतमानेऽपि संभवात् ।।

### 'सन् घटः' इत्यत्राधिष्ठानभूब्रह्मभाननिराकरणम्

ननु 'इदं रूप्यं' इत्यत्रानिदमि रूप्येऽधिष्ठानगतेदन्ताभानवत् 'सन् घटः' इत्यत्राप्यधिष्ठानभूतं सद्रूपं ब्रह्मैव भासत इति चेन्न ।

चाक्षुषादिसप्रकारकज्ञानविषयस्य त्वन्मते मिथ्यात्वनियमेन चाक्षुषधीविषयस्य घटाद्यधिष्ठानत्वासंभवात् । 'अनित्यो घटः' 'नीलो घटः' इत्यनित्यत्वादेरिव सत्यत्वस्यापि घटनिष्ठत्वाच्च ।।

### विवरणोक्तसमाधानखण्डनम्

एतेन घटोऽस्ति घटोऽस्ति (घटो नास्ति) इत्यादिप्रत्यक्षेणास्तित्व-शब्दितब्रह्मसत्तायामेव घटघटाद्यभावावगाहनमिति विवरणोक्तं निरस्तम् । घटादिनिष्ठकालसंबन्धतदभावावगाहनात् । न च नीलस्य घटसमसत्ताकत्वात् घटात्प्रागसत्वाच्च न घटाधिष्ठानत्वम् । चाक्षुषस्य ब्रह्मणोऽपि घटसमसत्ताकत्वात् । नीलस्य घटात्प्राग्विद्यमानतायाः कल्प्यत्वाच्च ।।

### 'सन् घटः' इत्यत्र ब्रह्मस्वरूपनिबन्धनसामानाधिकरण्यमिति पक्षखण्डनम्

किञ्च घटः सन्नित्यत्र सत्ताजातिस्फुरणनिबन्धनं स्वरूपसत्वनिबन्धनं वा कालत्रयाबाध्यत्वनिबन्धनं वा सामानाधिकरण्यं, न तु ब्रह्मरूपसत्वनिबन्धनम् । तस्याचाक्षुषत्वात् । न चाभावादिसाधारण-सत्प्रतीतौ जातिस्फुरणं न संभवति । क्वचित्साक्षात् क्वचित्परंपरा-संबन्धेन तत्प्रतीतेर्जातिविषयत्वात् । न च विजातीयसंबन्धेन समानाकारधियोऽनुपपत्तिः । 'रक्तं रूपं' 'रक्तः पटः' 'रक्तं पुष्पं' 'रक्तः स्फटिकः' इत्यत्र संबन्धभेदेऽपि प्रतीतेरेकाकारत्वात् । प्रकारतया भातं हि प्रतीत्याकारभेदकं न तु संसर्गतया भातम् । न च स्वरूपसत्वपक्षे अननुगतेन कथमनुगत-व्यवहारः । 'चैत्रो दण्डी' 'मैत्रो दण्डी' 'रूपी घटः' 'रूपी पटः' इतिवदुपपत्तेः । न च न त्रिकालाबाध्यत्वनिबन्धनं तस्याचाक्षुषत्वादिति वाच्यम् । घटादिव्यावहारिकाधिष्ठानस्यापि शुद्धस्याचाक्षुषत्वात् । तस्य

कथञ्चिच्चाक्षुषत्वे प्रकृतेऽपि तथा वक्तुं शक्यत्वात् । सत्यं ज्ञानमित्यत्रापि तथात्वापत्तेश्च । न च न सत्तासंबन्धेन ब्रह्मणि सत्वं किन्तु स्वरूपेणैव । घटादावपि स्वरूपेणैव सत्वसंभवात् ।।

।। इति प्रत्यक्षस्य सत्वग्राहित्वसमर्थनम् ।।

## ९. अथाक्षस्य जात्योपजीव्यत्वेन च प्राबल्यम्

प्रत्यक्षस्यानुमानादितो जात्यैव प्राबल्यम् । कथमन्यथा प्रत्यक्षेणाग्निशैत्यानुमितिप्रतिबन्धः । न च त्वाचप्रत्यक्षमुपजीव्यत्वेनैव शैत्यानुमितिप्रतिबन्धकम् । नतु जात्या । धर्म्यादेश्चक्षुरादिना प्रसिद्धावपि साध्यस्य त्वाचं विनाऽप्रसिद्धेरिति वाच्यम् । शब्दादिना साध्यप्रसिद्ध्यनन्तरप्रवृत्तानुमाने त्वचोऽनुपजीव्यत्वात् ।।

### चक्षुषः अनुमानाद्यगृहीतग्राहित्वेन तदनिवर्तितनिवर्तकत्वेन च प्राबल्यसमर्थनम्

किञ्च अनुमानाद्यगृहीतग्राहित्वेन तदनिवर्तितदिङ्मोहादिनिवर्तकत्वेन चाक्षुषस्य ततः प्राबल्यम् । न चाक्षगृहीतं धर्माधर्मादिकमनुमानेन गृह्यत इति तदपि प्रबलं स्यात् । धर्मादौ प्रत्यक्षाप्रवृत्तेः । एकत्र समावेशे हि प्राबल्यादिविचारः । न च त्वाचप्रत्यक्षानिवर्तितवंशोरगभ्रमनिवर्तकचक्षुषोऽपि त्वगपेक्षया प्राबल्यं स्यात् । ततश्च चित्रनिम्नोन्नतज्ञानस्य चाक्षुषस्य तद्विरोधित्वाचज्ञानाद्बाधो न स्यादिति वाच्यम् । क्वचित् तूलकपिण्डादौ पाषाणत्वादिभ्रमस्य चक्षुषाऽनिवर्तितस्य त्वाचज्ञानेनापि निवृत्तेर्विनिगमकाभावेनान्यतरस्य प्राबल्यासंभवात् ।।

### 'प्राबल्यमागमस्यैव' इति प्रमाणाभिप्रायकथनम् अद्वैतसिद्ध्युक्तपरिहारखण्डनं च

'प्राबल्यमागमस्यैव जात्या तेषु त्रिषु स्मृतं'[१] इति तु वैदिकविषयम्। न चाद्वैतमपि वैदिकम् । प्रत्यक्षसिद्धस्वरूपभिन्ना द्वैतस्य त्वयाऽनङ्गीकारात् । न च केवलवेदगम्ये प्रत्यक्षाप्राप्त्या कथं तत्राक्षत आगमस्य प्राबल्यम् । वेदोक्तकारीर्याद्यनुष्ठानेऽपि क्वचित्प्रत्यक्षेण फलाभावनिश्चयेऽपि नागमस्याप्रामाण्यमित्यर्थे प्राबल्यमागमस्यैवेत्यस्य तात्पर्यात् । अत एव प्रत्यक्षगृहीत-श्रीरामकृष्णादिनिष्ठशोकमोहक्षतपलायनादीनां तन्निर्दुष्टत्वग्राहकेणागमेन बाधः ।[२] 'क्व च प्रत्यक्षतः प्राप्तमनुमागमबाधितम्'[३] इति स्मृतेश्च ।।

### विशेषविषयत्वेन प्रत्यक्षस्य प्राबल्योपपादनम्

'यदावहनीये जुहोति' इत्यस्मात् 'पदे जुहोति' इत्यस्य विशेषविषयत्वेन प्राबल्यवत् घटविषयसत्वग्राहिणः प्रत्यक्षस्य सामन्यतो द्वैतनिषेधकात् प्राबल्यम् ।।

### बहुबाधान्याय्यत्वन्यायेन प्रत्यक्षस्य प्राबल्योपपादनम्

किञ्च पञ्चदशरात्रे प्रथमेऽहन्यग्निष्टुन्नामके नामातिदेशेनैकाह-ग्निष्टुद्धर्मभूतासु सुब्रह्मण्याग्नेयी प्राप्ता । तस्या अल्पविषयायाश्चतुर्दशाहस्सु चोदकेन प्राप्तया ऐन्द्र्या सुब्रह्मण्यया बहुविषयया बाधः ।

---

१. वि.त.नि. उदाहृतब्रह्मतर्कवचनम् ।

२. 'रामकृष्णादौ शास्त्रेण विष्णुत्वनिर्णयोत्तरमेव 'विष्णुरयं दोषवान्' इति प्रत्यक्षादिधीः स्यात् । सा च स्वोपजीव्यागमविरोधादप्रमा' इति कुण्डलितेयं पङ्क्तिः 'बाधः' इत्यनन्तरं कुण्डलीकृत्य मातृकायां दृश्यते ।

३. अनु. ३.२.६४

बहुबाधस्यान्याय्यत्वात् । तथा अद्वैतग्राहिप्रत्यक्षतदुपजीव्य-नुमानकर्मकाण्डसगुणोपासावाक्यादिरूपबहुमानाबाधाय अद्वैतवाक्यस्य प्रतीतीर्थत्याग उचितः । न च दृष्टान्ते बहुविषयबाधोऽत्र बहुभिरिति वैषम्यम् । बहुत्वमात्रस्यैव प्राबल्ये तन्त्रत्वेन प्रमेयगतत्वप्रमाण-गतत्वादिवैशिष्ट्यस्यातन्त्रत्वात् । उक्तं ह्याकाशाधिकरणे त्वदीयैः 'आकाश इति होवाचेति आकाशे निरूढप्रथमाऽनुपसञ्जात-विरोध्याकाशपदानुरोधेन बहून्यपि चरमाणि सर्वकारणत्वज्यायस्त्वा-नन्तत्वादीनि लिङ्गानि भूताकाशे कथञ्चित् योज्यानीति प्राप्ते सर्वकारणत्वादिबहुलिङ्गानुग्रहार्थमेकमाकाशपदं जघन्यवृत्त्या ब्रह्मपरम् 'त्येजेकं कुलस्यार्थे' इति न्यायात्' इति प्रमाणगतं बहुत्वं प्राबल्ये तन्त्रम् ।।

उपजीव्यत्वेन प्रत्यक्षस्यानुमानादितः प्राबल्यसमर्थनम्

किञ्चोपजीव्यत्वेनाप्यक्षमनुमानादिबाधकम् । यथा घटे विभुत्वानुमाने पक्षग्राह्यध्यक्षं, 'नरशिरः शुचि प्राण्यङ्गत्वात् शङ्खवत्' इत्यादौ साध्यग्राहिजातीयः 'नारं स्पृष्ट्वा सचैलो जलमाविशेत्' इत्याद्यागमः । मनोवैभवानुमाने ज्ञानासमवाय्याधारत्वहेतुग्राहक-मनुमानम् । किं वाच्यमपेक्षिताशेषग्राहिप्रत्यक्षं बाधकम् । चक्षुरादेः शब्दाद्यग्राहित्वेऽपि तद्ग्राहिश्रोत्रादिजातीयत्वेनोपजीव्यत्वम् । दृष्टं हि नरशिरःकपालाशुचित्वबोधकागमस्य तच्छुचित्वानुमोपजीव्य-शुचित्वागमसजातीयत्वेन तदनुमानात् प्राबल्यम् ।।

उपजीव्यत्वस्वरूपनिर्वचनपूर्वं प्रत्यक्षस्योपजीव्यत्वसमर्थनम्

न च यत्स्वरूपमुपजीव्यते तन्न बाध्यते बाध्यते च तात्विकाकारः। स नोपजीव्यत इति वाच्यम् । स्वरूपेणैव

### 'प्राबल्यमागमस्यैव' इति प्रमाणाभिप्रायकथनम् अद्वैतसिद्ध्युक्तपरिहारखण्डनं च

'प्राबल्यमागमस्यैव जात्या तेषु त्रिषु स्मृतं'[१] इति तु वैदिकविषयम्। न चाद्वैतमपि वैदिकम् । प्रत्यक्षसिद्धस्वरूपभिन्ना द्वैतस्य त्वयाऽनङ्गीकारात् । न च केवलवेदगम्ये प्रत्यक्षाप्राप्त्या कथं तत्राक्षत आगमस्य प्राबल्यम् । वेदोक्तकारीर्याद्यनुष्ठानेऽपि क्वचित्प्रत्यक्षेण फलाभावनिश्चयेऽपि नागमस्याप्रामाण्यमित्यर्थे प्राबल्यमागमस्यैवेत्यस्य तात्पर्यात् । अत एव प्रत्यक्षगृहीत-श्रीरामकृष्णादिनिष्ठशोकमोहक्षतपलायनादीनां तन्निर्दुष्टत्वग्राहकेणागमेन बाधः ।[२] 'क्व च प्रत्यक्षतः प्राप्तमनुमागमबाधितम्'[३] इति स्मृतेश्च ।।

### विशेषविषयत्वेन प्रत्यक्षस्य प्राबल्योपपादनम्

'यदावहनीये जुहोति' इत्यस्मात् 'पदे जुहोति' इत्यस्य विशेषविषयत्वेन प्राबल्यवत् घटविषयसत्वग्राहिणः प्रत्यक्षस्य सामन्यतो द्वैतनिषेधकात् प्राबल्यम् ।।

### बहुबाधान्याय्यत्वन्यायेन प्रत्यक्षस्य प्राबल्योपपादनम्

किञ्च पञ्चदशरात्रे प्रथमेऽहन्यग्निष्टुन्नामके नामातिदेशेनैकाह-ग्निष्टुद्धर्मभूतासु सुब्रह्मण्याग्नेयी प्राप्ता । तस्या अल्पविषयायाश्चतुर्दशाहस्सु चोदकेन प्राप्तया ऐन्द्र्या सुब्रह्मण्यया बहुविषयया बाधः ।

---

१. वि.त.नि. उदाहृतब्रह्मतर्कवचनम् ।

२. 'रामकृष्णादौ शास्त्रेण विष्णुत्वनिर्णयोत्तरमेव 'विष्णुरयं दोषवान्' इति प्रत्यक्षादिधीः स्यात् । सा च स्वोपजीव्यागमविरोधादप्रमा' इति कुण्डलितेयं पङ्क्तिः 'बाधः' इत्यनन्तरं कुण्डलीकृत्य मातृकायां दृश्यते ।

३. अनु. ३.२.६४

बहुबाधस्यान्याय्यत्वात् । तथा अद्वैतग्राहिप्रत्यक्षतदुपजीव्यनुमानकर्मकाण्डसगुणोपासावाक्यादिरूपबहुमानाबाधाय अद्वैतवाक्यस्य प्रतीर्थत्याग उचितः । न च दृष्टान्ते बहुविषयबाधोऽत्र बहुभिरिति वैषम्यम् । बहुत्वमात्रस्यैव प्राबल्ये तन्त्रत्वेन प्रमेयगततत्त्वप्रमाणगतत्वादिवैशिष्ट्यस्यातन्त्रत्वात् । उक्तं ह्याकाशाधिकरणे त्वदीयैः 'आकाश इति होवाचेति आकाशे निरूढप्रथमाऽनुपसञ्जातविरोध्याकाशपदानुरोधेन बहून्यपि चरमाणि सर्वकारणत्वज्यायस्त्वानन्तत्वादीनि लिङ्गानि भूताकाशे कथञ्चित् योज्यानीति प्राप्ते सर्वकारणत्वादिबहुलिङ्गानुग्रहार्थमेकमाकाशपदं जघन्यवृत्त्या ब्रह्मपरम् 'त्येजेकं कुलस्यार्थे' इति न्यायात्' इति प्रमाणगतं बहुत्वं प्राबल्ये तन्त्रम् ॥

### उपजीव्यत्वेन प्रत्यक्षस्यानुमानादितः प्राबल्यसमर्थनम्

किञ्चोपजीव्यत्वेनाप्यक्षमनुमानादिबाधकम् । यथा घटे विभुत्वानुमाने पक्षग्राह्यध्यक्षं, 'नरशिरः शुचि प्राण्यङ्गत्वात् शङ्खवत्' इत्यादौ साध्यग्राहिजातीयः 'नारं स्पृष्ट्वा सचैलो जलमाविशेत्' इत्याद्यागमः । मनोवैभवानुमाने ज्ञानासमवाय्याधारत्वहेतुग्राहकमनुमानम् । किं वाच्यमपेक्षिताशेषग्राहिप्रत्यक्षं बाधकम् । चक्षुरादेः शब्दाद्यग्राहित्वेऽपि तद्ग्राहिश्रोत्रादिजातीयत्वेनोपजीव्यत्वम् । दृष्टं हि नरशिरःकपालाशुचित्वबोधकागमस्य तच्छुचित्वानुमोपजीव्यशुचित्वागमसजातीयत्वेन तदनुमानात् प्राबल्यम् ॥

### उपजीव्यत्वस्वरूपनिर्वचनपूर्वं प्रत्यक्षस्योपजीव्यत्वसमर्थनम्

न च यत्स्वरूपमुपजीव्यते तन्न बाध्यते बाध्यते च तात्त्विकाकारः। स नोपजीव्यत इति वाच्यम् । स्वरूपेणैव

निषेधप्रतियोगित्वरूपमिथ्यात्वं बोधयताऽनुमानादिना स्वरूपग्राहकस्य प्रत्यक्षस्याविरोधासंभवात् । पारमार्थिकत्वमात्रनिषेधे प्रत्यक्षगृहीतस्वरूपानिषेधे च पारमार्थिकधर्महीनब्रह्मवत् पारमार्थिकत्वहीनस्यापि प्रपञ्चस्य सद्रूपत्वोपपत्तेः । न च नेदं रूप्यमिति ज्ञाने प्रतियोग्यर्पकतयोपजीव्यमिदं रूप्यमिति तद्बाधकं स्यात् । प्रतियोग्यनर्पकतयोपजीव्यस्यैव लोके प्राबल्यस्य दृष्टत्वेन तादृगुपजी० यत्वस्य प्राबल्ये तन्त्रत्वात् ।।

यत्प्रामाण्यं यत्प्रामाण्याधीनं तत्तस्योपजीव्यं इत्यर्थाद्वा । अस्ति च जीवेशैक्यधीप्रामाण्यमैक्यप्रतियोग्युपस्थापकप्रामाण्याधीनम् तत्तस्योपजीवकम् । नास्ति च निषेधधीप्रामाण्यं प्रतियोगिधीप्रामाण्याधीनमिति न तत्तस्योपजीवकम् ।।

यद्वा यद्विना यस्यानुत्थानं तत्तस्योपजीव्यम् । रूप्यज्ञानमुपजी० यमपि न प्रबलम् । परीक्षितस्यैवोपजीव्यस्य प्राबल्यात् । परीक्षा च सजातीयविजातीयसंवादविसंवादाभावौ । तौ च भ्रमे न स्तः। प्रकृते च स्तः । 'सन् घटः' इति विशेषदर्शनजन्यज्ञानानन्तरस्य घटार्थक्रियायाः क्लृप्तदूरादिदोषाभावस्य सत्वात् । न च परीक्षया स्वसमानदेशकालीनविषयाबाध्यत्वं प्रामाण्यस्य व्यवस्थाप्यते । तथा च व्यवहारदशामात्राबाध्यत्वं प्रामण्ये व्यवस्थितमिति कथमत्यन्ताबाध्यत्वाभावग्राहकानुमानागमयोर्न प्रवृत्तरिति वाच्यम् । परीक्षिताक्षगृहीतस्य वर्तमानकालेऽबाधेन स्वरूपेणैव त्रैकालिकनिषेधबाधकानुमानादेः प्रवृत्तेरसंभवात् । कालान्तरबाधस्यानित्यत्वपर्यवसन्नत्वेन विश्वमिथ्यात्वासिद्धेः ।।

अक्षस्याप्रामाण्येऽतिप्रसङ्गकथनम्

किञ्चाक्षस्याप्रामाण्ये तद्गृहीतयोग्यताप्राण्यादेर्मिथ्यात्वापत्त्या तत्तुल्ययोगक्षेमशब्दार्थस्य मिथ्यात्वापत्तेः । बोध्यवद्विशेष्यकत्वस्य परामर्शनिष्ठस्य मिथ्यात्वे तद्योगक्षेमानुमेयस्यापि मिथ्यात्वापत्तेश्च। न च प्रामाण्यमिथ्यात्वं न विषयमिथ्यात्वे तन्त्रम् । निर्विकल्पके प्रामाण्यासत्वेऽपि विषयमिथ्यात्वाभावात् । किन्तु तदभाववति तत्प्रकारकत्वरूपमप्रामाण्यम् । तच्चेह नास्तीति वाच्यम् । विशेष्यावृत्त्यप्रकारकत्वस्याबाधितार्थकत्वस्य च प्रामाण्यस्य मिथ्यात्वेऽर्थमिथ्यात्वावश्यकत्वात् । न च शाब्दार्थस्य ब्रह्मणः सर्वबाधावधेर्बाधासंभवेन नार्थबाधात्प्रामाण्यबाधः । किन्तु तद्विषयत्वरूपसंबन्धबाधात्तथा । तथा चाबाधितार्थविषयत्वरूप-प्रामाण्यमिथ्यात्वेऽपि नार्थो मिथ्या विशिष्टस्यैकांशमिथ्यात्वेऽप्य-परांशस्य सत्वात् । यथा दण्डबाधनिबन्धनदण्डपुरुषबाधेऽपि पुरुषो न बाधित एवेति वाच्यम् । ब्रह्मणः प्रमाविषयत्वाभावे प्रामाणि-कत्वापत्त्या बाधावश्यंभवेन बाधाबाधित्वासिद्धेः । अन्यथा शशशृङ्गादीनामपि बाधाबधित्वापत्तेः । मानाभावे दृष्टान्तमात्रेणा-र्थासिद्धेश्च ।।

।। इत्यक्षस्य जात्योपजीव्यत्वेन च प्राबल्यम् ।।

## १०. अथाक्षस्यानुमानबाध्यत्वे बाधकम्

प्रत्यक्षस्यानुमानबाध्यत्वेऽतिप्रसङ्गाभिधानम्

प्रत्यक्षस्य लिङ्गबाध्यत्वे वह्न्यौष्णप्रत्यक्षं शैत्यानुमानबाधकं,[1]

---

१. अत्र पङ्क्तिः लुप्ता । 'आत्मस्थायित्वप्रत्यभिज्ञानं च क्षणिकत्वानुमानस्य बाधकं न स्यात् । प्रत्युतानुमानमेव तयोर्बाधकं स्यात्' । इति अत्र पङ्क्तिः स्यादिति भाति ।

विश्वप्रत्यक्षेऽपि परीक्षायाः सत्वात् । किञ्च पशुत्वेन शशे शृङ्गानुमानं स्यात् । पशुत्वमेव शृङ्गित्वे तन्त्रं नतु तद्विशेषो गौरवात् । एवं पदार्थत्वादिनाऽनन्त्वादिकं सर्वत्र सिद्ध्येदिति व्यावहारिक्यपि व्यवस्था न स्यात् । न ह्यत्र प्रत्यक्षबाधादन्यो दोषोऽस्ति । न चायोग्यशृङ्गसाधने प्रत्यक्षबाधस्यासंभवेन तत्र व्याप्तिग्राहकतर्केष्वाभासत्वं त्वयापि वाच्यमिति वाच्यम् । शृङ्गस्य योग्यत्वनियमात् अयोग्यशृङ्गादि-निरूपितसहचारादेः क्वापि पशुत्वादावदर्शनेन तदनुमित्यापादना-संभवात्। योग्यशृङ्गनिरूपितव्यस्यादेर्गवादौ पशुत्वे गृहीतत्वेन शशादौ तदनुमित्यापादनसंभवात् ।।

।। इत्यक्षस्यानुमानबाध्यत्वे बाधकम् ।।

## ११. अथ प्रत्यक्षस्यागमबाध्यत्वे बाधकम्

प्रत्यक्षस्य शब्दबाध्यत्वेऽनुपपत्तिप्रदर्शनम्

यद्यक्षं शब्दबाध्यं स्यात् तदा जैमिनिना 'तस्माद्धूम एवाग्नेर्दिवा ददृशे नार्चिः' इत्याद्यर्थवादस्य 'अदितिर्द्यौः' इत्यादिमन्त्रस्य च दृष्टविरोधेनाप्रामाण्ये प्राप्ते 'गुणवादस्तु गुणादविप्रतिषेधः स्यात्' इत्यादिना गौणार्थता नोच्येत । 'यजमानः प्रस्तरः' इत्यादेर्गौणार्थता च नोच्येत । त्वया च प्रत्यक्षाविरोधाय तत्त्वंपदयोर्लक्षणा नोच्येत। श्रुतिविरोधे प्रत्यक्षस्यैवाप्रामाण्यसंभवात् । न च व्यवहारदशायामेव परीक्षितप्रत्यक्षविरुद्धग्राहिणो 'धूम एवाग्नेर्दिवा ददृशे' 'आदितिर्द्यौः' 'यजमानः प्रस्तरः' इत्यादेस्तद्विरोधेनामुख्यार्थत्वेऽप्यद्वैतागमस्य तद्विरोधाभावान्नामुख्यार्थत्वम् । प्रत्यक्षादेः परीक्षया हि व्यावहारिकप्रामाण्यमात्रं सिद्धम् । तच्च नाद्वैतागमेन बाध्यते । बाध्यते तु तात्त्विकं प्रामाण्यं तन्न परीक्षया सिद्धम् । धूम

एवाग्नेरित्यादेस्तु मुख्यार्थत्वे प्रत्यक्षादेर्व्यावहारिकं प्रामाण्यं व्याहन्येतेति वाच्यम् । स्वरूपेण त्रैकालिकनिषेधबोधकस्य वर्तमान-मात्रसत्वग्राहिप्रत्यक्षेणाविरोधावश्यकत्वात् । अक्षगृहीतस्यानिषेधे तस्य तात्विकत्वापत्याऽद्वैतहानेः । न चाखण्डे तात्पर्यस्य निर्वाहायैवोक्तलक्षणा न त्वक्षविरोधात् । अखण्डे तात्पर्यस्य निरासात् ।।

विवरणकारमतखण्डनम्

यत्तु तत्त्वंपदयोर्नामुख्यार्थकत्वम् । तद्धि प्रतीयमानार्थपरित्यागे-नार्थान्तरपरत्वं वा अशक्यार्थत्वम् वा । नाद्यः । सामानाधिकरण्येन प्रतीयमानस्यैक्यस्यात्यागात् । नान्त्यः । जहदजहल्लक्षणया शक्यैकदेशपरित्यागेऽपि विशेष्यांशस्यात्यागात् । अत एवोक्तं भामतीकृता– 'प्रस्तरादिवाक्यमन्यशेषत्वादमुख्यार्थं अद्वैतवाक्यं तु न तथा' इति । उक्तं शाबरभाष्येऽपि– 'न विधौ परः शब्दार्थः' इति ।

तन्न । त्वन्मते श्रुतेरखण्डार्थकत्वेन सखण्डार्थस्यैक्यस्य त्यागौचित्यात् । अशक्यांशस्य ग्रहणे अशक्यार्थपरत्वरूपामुख्यार्थ-त्वापरिहारात् । न हि छत्रिणो यान्ति इति शब्दः शक्यार्थोऽपि मुख्यार्थः । तद्ग्रहणे लक्षणावैय्यर्थ्यात् । न च प्रस्तरादिवाक्यस्यान्येशष-त्वाल्लक्षणयाऽमुख्यार्थत्वं युक्तम् । अनन्यशेषे 'सोमेन यजेत' इत्यादौ वैय्यधिकरण्येनान्वये उद्देश्यत्वोपादेयत्वानुवाद्यत्वविधेयत्व-गुणत्वप्रधानत्वरूप विरुद्धत्रिकद्वयापत्त्या सामानाधिकरण्येनान्वये सोमलतायागयोर्भेदग्राहकप्रत्यक्षाविरोधाय मत्वर्थलक्षणाश्रयणेन मानान्तरविरोधादेरेव लक्षणयाऽमुख्यार्थाश्रयणे बीजत्वात् । अवाच्ये ब्रह्मणि सर्ववेदस्य तव लक्षणयाऽमुख्यार्थकत्वात् ।।

## मुख्यार्थ-लाक्षणिकार्थयोः तात्पर्यबोध्यत्वतदभावाभ्यां भेदं वदतां अद्वैतसिद्धिकाराणां मतखण्डनम्

यत्तु सर्ववेदस्यावच्ये ब्रह्मणि लाक्षणिकत्वेऽपि नामुख्यार्थकत्वम्। तात्पर्यविषयीभूतार्थबोधकत्वं हि मुख्यार्थकत्वम् । न तु शक्यार्थमात्रबोधकत्वम् । अतात्पर्यार्थबोधकत्वं चामुख्यार्थकत्वं न तु लाक्षणिकत्वमिति ।

तन्न । 'मञ्चाः क्रोशन्ति' 'गङ्गायां घोषः' इत्यादौ पुरुषादितात्पर्यकमञ्चादिशब्दानां मुख्यार्थकत्वापत्तेः । लोके मुख्यार्थकत्वामुख्यार्थकत्वनियमस्य भङ्गापत्तेश्च । तात्पर्यस्यानियतत्वात् । 'गङ्गायां घोषः' इत्यादौ कदाचिद्गंगापदस्य तीरे घोषपदस्य मत्स्यादौ लक्षणाया दृष्टत्वात् । अतः शक्यार्थकत्वमेव मुख्यार्थकत्वं लाक्षणिकत्वमेवामुख्यार्थकत्वम् । अन्यथा 'न विधौ परः शब्दार्थः' इति विधौ लक्षणानिषेधोऽसंगतः स्यात् । तात्पर्यविषयीभूतार्थबोधनस्य लाक्षणिकेनापि संभवेनामुख्यार्थकत्वाभावात् । मुख्येऽर्थे शब्दवृत्तेर्जघन्यतायाः कैरप्यनङ्गीकारात् । अतो वेदस्यामुख्यार्थकत्वं तव दुर्वारम् । अन्यशेषीभूतार्थप्रतिपादके 'समिधो यजति' इत्यादौ वेदे तण्डुलान्यचेदित्यादौ लोके चामुख्यार्थकत्वाव्यवहाराच्च । मानान्तरविरुद्धेऽद्वैते सदा निर्णीते चाखण्डचैतन्ये तात्पर्यासंभवाच्च ।।

।। इति प्रत्यक्षस्यागमबाध्यत्वे बाधकम् ।।

## १२. अथापच्छेदन्यायवैषम्यम्

### अपच्छेदन्यायस्य विषयप्रदर्शनपूर्वं अक्षस्य सर्वथा बाध्यत्वाभावसमर्थनम्

ननु परेणागमेनापच्छेदन्यायेन पूर्वस्याक्षस्य बाध इति चेन्न । प्रतिहर्त्रपच्छेदनिमित्तकयागस्य प्रतिहर्तृमात्रापच्छेदे युगपदपच्छेदे क्रमेणापच्छेदे प्रतिहर्त्रपच्छेदस्य पश्चात्त्वे च सावकाशस्योद्गात्रपच्छेद-निमित्तकादक्षिणयागेन निरवकाशेन स्वविषयप्रयोगे बाधेऽपि सर्वथा बाधाभावात् । वृत्त्यन्तरादिना सावकाशेनागमेन निरवकाशाक्षस्य बाधासंभवात् । अत एव 'विप्रतिषेधाद्विकल्पः स्यात्'[१] इत्यधिकरणे द्वयोर्युगपदपच्छेदे विकल्प उक्तः ।।

### प्रतिहर्त्रपच्छेदनिमित्तकस्य यागस्य प्रयोगान्तरे निक्षेपात् न सर्वथा बाध इति समर्थनम्

किञ्च 'यद्युद्गाता जघन्यः स्यात् सर्ववेदसं दद्यात् यथेतरस्मिन्' इत्यधिकरणे उद्गात्रपच्छेदस्य प्रतिहर्त्रपच्छेदात्परत्वे उद्गात्रपच्छेदनिमित्तं पूर्वप्रयोगं दक्षिणाहीनं समाप्य कर्तव्ये ज्योतिष्टोमस्य द्वितीयप्रयोगे 'तत् दद्यात् यत्पूर्वस्मिन् दास्यन् स्यात्' इति श्रुत्युक्ता या दक्षिणा सा पूर्वभाविप्रतिहर्त्रपच्छेदनिमित्तकपूर्वप्रयोगस्था, सर्वस्वदित्साया अबाधात्सर्वस्वरूपैव । न तु ज्योतिष्टोमीया नित्या द्वादशशतरूपा। तस्मान्न प्रतिहरर्त्रपच्छेदस्य सर्वथा बाधः । किन्तु प्रयोगान्तरेनिक्षपः इत्युक्तत्वात् । उक्तं हि टुप्पटीकायां– 'तस्य प्रयोगान्तरे निक्षेपः' इति ।।

---

१. जै.सू. ६अ, ५पा, १८अधि, ५१सू.

निमित्तयोः क्रमिकत्वेन शास्त्रयोर्विरोधाभावसमर्थनम्

किञ्च क्रमिकनिमित्तद्वयेऽपि क्रमेणादक्षिणसर्वस्वदक्षिणयोः क्रमिकनिमित्तवतोः प्रयोगयोः संभवेन विरोधाभावात् । यथा बदरफले क्रमिकनिमित्तवतोः श्यामरक्तरूपयोस्तद्वत् । उक्तं हि 'निमित्तोपजननात्प्रागन्यथा कर्तव्योऽपि क्रतुर्निमित्ते सत्यन्यथा कर्तव्यः' इति । अतोऽपच्छेदन्यायः सावकाशविषयः । प्रत्यक्षं त्वागमेन बाधितं सदप्रमाणमेव स्यात् ।।

प्रत्यक्षस्य निरवकाशत्वसमर्थनम्

न च व्यावहारिकप्रामाण्ये प्रत्यक्षं सावकाशम् । तत्रैकप्रयोगेऽविरोधवदत्रापि तात्त्विकांशेऽविरोध इति वाच्यम् । प्रामाणद्वयस्य समसत्ताकविषयदानेनैव गत्यौचित्यात् । अन्यथैकस्मिन्नेव प्रयोगेऽदाक्षिण्यं तात्त्विकं सर्वस्वदाक्षिण्यं तु व्यावहारिकमिति गत्त्यापत्तेः । प्रत्यक्षगृहीतव्यावहारिकादिस्वरूपस्याबाधे तस्य तात्त्विकत्वापत्तेः ।।

एतेन श्रुतेरद्वैतपरत्वान्निर्दोषत्वात् परत्वाच्च पूर्वस्य बाधकत्वमिति निरस्तम् । मानान्तरविरोधेनाद्वैतपरत्वासिद्धेः । निर्दोषत्वस्यार्थान्तर-प्रामाण्येनान्यथासिद्धेः । परत्वस्य प्रमानन्तरभ्रमे व्यभिचारात् ।।

।। इत्यपच्छेदन्यायवैषम्यम् ।।

# १३. अथाक्षस्य लिङ्गादिबाध्यत्वे बाधकम्

प्रत्यक्षस्य बाध्यत्वेऽग्निशैत्यस्यापि सिद्धिः स्यादित्यापादनम्

यद्यक्षबाधितमनुमानं साध्यं साधयेत् तर्ह्यग्निशैत्यानुमानमपि स्वार्थं साधयेदिति बाधोच्छेदो वह्न्यौष्णप्रत्यक्षयजमानत्वप्रत्यक्षादेः विश्वसत्वप्रत्यक्षापेक्षया विशेषो वा वाच्यः । न च शैत्यौष्ण्यादेर्व्यावहारिकत्वेन तद्ग्राहिणोः समानविषयत्वेन विरोधेऽपि प्रकृते भिन्नविषयकत्वान्न विरोधः । अक्षगृहीतस्वरूपस्यागमेनानिषेधे तस्य तात्विकत्वापत्तेः । अप्रसक्तप्रतिषेधापत्तेश्च । तद्गृहीतस्य निषेधे तु वह्निशैत्यानुमित्यौष्ण्यस्यापि निषेधापत्तेः । परीक्षायाः प्रत्यक्षद्वयेऽपि तुल्यत्वात् । न च परोक्षतः प्रसक्तिः । श्रुत्या प्रसक्तौ विकल्पापत्तेः। अनुमानस्य श्रुत्यक्षाननुगृहीतस्यामानत्वात् । न चाक्षविषयव्यावहारिकसत्वाधिकरणस्यैव पारमार्थिकसत्वाभावबोधनान्नाक्षविषयस्य तात्विकत्वापत्तिः । निर्धर्मकमानेन ब्रह्मणः पारमार्थिकत्वाभावबोधनेऽपि तत्स्वरूपस्य सद्रूपत्ववदक्षादिगृहीतस्वरूपस्य पारमार्थिकसद्रूपत्वोपपत्तेः ।।

किञ्च अग्नेः शैत्यं प्रस्तरस्य यजमानत्वं यूपस्यादित्यत्वं च तात्विकम् । औष्ण्यमयजमानत्वमनादित्यत्वं त्वतात्विकमिति शैत्यानुमानं, 'यजमानः प्रस्तरः' 'आदित्यो यूपः' इत्याद्यागमश्चाक्षेण बोध्यो न स्यादिति मिथ्यात्वानुमनं शैत्यानुमिति समम् ।।

नभोनैल्य-चन्द्रप्रादेशत्व-आत्माणुत्वप्रत्यक्षस्य अनुमानाद्यबाध्यत्वसमर्थनम्

ननु नभोनैल्यचन्द्रप्रादेशिकत्वादिप्रत्यक्षस्य 'गौरोऽहं' 'अहमिहैव' इति देहात्मैक्यात्माणुत्वादिप्रत्यक्षस्येदंरजतमिति प्रत्यक्षस्य चानुमानागमाप्तवाक्यैर्बाधो दृश्यत इति चेन्न । नीरूपानुमानस्य

### निमित्तयोः क्रमिकत्वेन शास्त्रयोर्विरोधाभावसमर्थनम्

किञ्च क्रमिकनिमित्तद्वयेऽपि क्रमेणादक्षिणसर्वस्वदक्षिणयोः क्रमिकनिमित्तवतोः प्रयोगयोः संभवेन विरोधाभावात् । यथा बदरफले क्रमिकनिमित्तवतोः श्यामरक्तरूपयोस्तद्वत् । उक्तं हि 'निमित्तोपजननात्प्रागन्यथा कर्तव्योऽपि क्रतुर्निमित्ते सत्यन्यथा कर्तव्यः' इति । अतोऽपच्छेदन्यायः सावकाशविषयः । प्रत्यक्षं त्वागमेन बाधितं सदप्रमाणमेव स्यात् ।।

### प्रत्यक्षस्य निरवकाशत्वसमर्थनम्

न च व्यावहारिकप्रामाण्ये प्रत्यक्षं सावकाशम् । तत्रैकप्रयोगेऽविरोधवदत्रापि तात्त्विकांशेऽविरोध इति वाच्यम् । प्रामाणद्वयस्य समसत्ताकविषयदानेनैव गत्यौचित्यात् । अन्यथैकस्मिन्नेव प्रयोगेऽदाक्षिण्यं तात्त्विकं सर्वस्वदाक्षिण्यं तु व्यावहारिकमिति गत्त्यापत्तेः । प्रत्यक्षगृहीतव्यावहारिकादिस्वरूपस्याबाधे तस्य तात्त्विकत्वापत्तेः ।।

एतेन श्रुतेरद्वैतपरत्वान्निर्दोषत्वात् परत्वाच्च पूर्वस्य बाधकत्वमिति निरस्तम् । मानान्तरविरोधेनाद्वैतपरत्वासिद्धेः । निर्दोषत्वस्यार्थान्तरप्रामाण्येनान्यथासिद्धेः । परत्वस्य प्रमानन्तरभ्रमे व्यभिचारात् ।।

।। इत्यपच्छेदन्यायवैषम्यम् ।।

## १३. अथाक्षस्य लिङ्गादिबाध्यत्वे बाधकम्

### प्रत्यक्षस्य बाध्यत्वेऽग्निशैत्यस्यापि सिद्धिः स्यादित्यापादनम्

यद्यक्षबाधितमनुमानं साध्यं साधयेत् तर्ह्यग्निशैत्यानुमानमपि स्वार्थं साधयेदिति बाधोच्छेदो वह्न्यौष्णप्रत्यक्षयजमानत्वप्रत्यक्षादेः विश्वसत्वप्रत्यक्षापेक्षया विशेषो वा वाच्यः । न च शैत्यौष्ण्यादे-र्व्यावहारिकत्वेन तद्ग्राहिणोः समानविषयत्वेन विरोधेऽपि प्रकृते भिन्नविषयकत्वान्न विरोधः । अक्षगृहीतस्वरूपस्यागमेनानिषेधे तस्य तात्त्विकत्वापत्तेः । अप्रसक्तप्रतिषेधापत्तेश्च । तद्गृहीतस्य निषेधे तु वह्निशैत्यानुमित्यौष्ण्यस्यापि निषेधापत्तेः । परीक्षायाः प्रत्यक्षद्वयेऽपि तुल्यत्वात् । न च परोक्षतः प्रसक्तिः । श्रुत्या प्रसक्तौ विकल्पापत्तेः। अनुमानस्य श्रुत्यक्षाननुगृहीतस्यामानत्वात् । न चाक्षविषय-व्यावहारिकसत्वाधिकरणस्यैव पारमार्थिकसत्वाभावबोधना-न्नाक्षविषयस्य तात्त्विकत्वापत्तिः । निर्धर्मकमानेन ब्रह्मणः पारमार्थिकत्वाभावबोधनेऽपि तत्स्वरूपस्य सद्रूपत्ववदक्षादि-गृहीतस्वरूपस्य पारमार्थिकसद्रूपत्वोपपत्तेः ॥

किञ्च अग्नेः शैत्यं प्रस्तरस्य यजमानत्वं यूपस्यादित्यत्वं च तात्त्विकम् । औष्ण्यमयजमानत्वमनादित्यत्वं त्वतात्त्विकमिति शैत्यानुमानं, 'यजमानः प्रस्तरः' 'आदित्यो यूपः' इत्याद्यागमश्चाक्षेण बोध्यो न स्यादिति मिथ्यात्वानुमनं शैत्यानुमिति समम् ॥

### नभोनैल्य-चन्द्रप्रादेशत्व-आत्माणुत्वप्रत्यक्षस्य अनुमानाद्यबाध्यत्वसमर्थनम्

ननु नभोनैल्यचन्द्रप्रादेशिकत्वादिप्रत्यक्षस्य 'गौरोऽहं' 'अहमिहैव' इति देहात्मैक्यात्माणुत्वादिप्रत्यक्षस्येदंरजतमिति प्रत्यक्षस्य चानुमानागमाप्तवाक्यैर्बाधो दृश्यत इति चेन्न । नीरूपानुमानस्य

महापरिमाणागमस्य च प्रवृत्तावपि विपरीतप्रत्यक्षं विना नैल्यादिबाधादर्शनात् । आत्माणुत्वधियः प्रमात्वात् । देहात्मैक्यस्य निरस्तत्वात् । अपरोक्षभ्रमस्य परोक्षप्रमया बाधासंभवाच्च । अन्यथा वेदान्तानामपरोक्षजनकत्वप्रयासो व्यर्थः स्यात् । परोक्षादपि तन्निवृत्तिसंभवात् ।।

### अद्वैतसिद्ध्युक्तसमाधानखण्डनपूर्वं नायं सर्पः इत्याप्तवाक्यस्य भ्रमानिवर्तकत्वोपपादनम्

न च 'नायं सर्पः' इति वाक्यादिना सविलासाज्ञाननिवृत्तावपि भ्रमगताप्रामाण्यज्ञापनेन भ्रमे प्रामाण्यबुद्धेस्तद्विषयस्य सत्यत्वधियो निवर्तकत्वेनैव भ्रमनिवर्तकत्वव्यपदेशः । भ्रमे प्रामाण्यभ्रमस्य तद्विषये सत्यत्वभ्रमस्य च परोक्षत्वान्नापरोक्षबाधापेक्षा । न हि दुष्टकरणाजन्यत्वमबाधितविषयत्वं वा प्रामाण्यं सार्वकालिकदैशिक-निषेधाप्रतियोगित्वरूपं सत्त्वं च कस्यचित्प्रत्यक्षम् । अतस्तयोः परोक्षप्रमाबाध्यत्वमुचितमेव । तयोश्च बाधितयो रजतादिभ्रमस्वरूपेण सन्नपि स्वकार्याक्षमत्वादसन्नेवेति बाध एवेति वाच्यम् । आप्तः प्रत्यक्षतः सर्पाभावं गृह्णातीति जानत एव पुंस उक्तभ्रमद्वयनिवृत्ति-संभवेनाक्षमूलकशब्दादिनैव तन्निवर्तनात् । तदमूलकेन क्वाप्यनिवर्त-नाच्च। न ह्यन्धेनाप्तेन नायं सर्प इत्युक्तेऽपि रज्वादानादौ निःशङ्कं प्रवर्तते । अन्यथा प्रस्तरादिवाक्यमप्ययजमानत्वधियः प्रामाण्यज्ञापनेन तद्विषयः प्रामाण्यबुद्धेस्तद्विषयस्य सत्यत्वबुद्धेश्च निवर्तकं स्यात् । अत एव 'नायं सर्पः' इत्युक्तेऽपि 'किमेवं वदसि अपि पुनः परामृश्य पश्यसि' इति प्रश्नो दृश्यत इति न केवलानुमानादिकं सर्पाद्यपरोक्ष-भ्रमनिवर्तकं न वा तद्भ्रमत्वादिज्ञापकम् ।।

### 'सेयं दीपज्वाला' इत्यस्यौपचारिकत्वसमर्थनम्

'सेऽयं दीपज्वाला' इति ज्वालैक्यधीस्तु नारोपः । किन्तूपचार एव । निर्वापारोपणादिना भेदधीसत्वात् ।।

किञ्च शैलाग्रस्थवृक्षाल्पत्वधीः दूरादिदोषजन्या दृष्टेति दूरस्थचन्द्राल्पत्वधीरपि दोषहेतुकेति निश्चियते ।।

### 'नीलं नभः' 'शंखः पीतः' इत्यदीनां प्रत्यक्षेणैव बाध इति समर्थनम्

एवमाकाशे समीपे नीरूपत्वनिश्चयाद्दूरे रूपवत्वधीर्दोषजन्येति प्रागेव निश्चीयते । 'पीतः शङ्खः' इत्यादिप्रत्यक्षं तु प्राथमिकपरीक्षितप्रत्यक्षेण 'शङ्खो न पीतः' इत्यर्थाभावनिश्चयात् बाधितमेवाप्रामाण्यज्ञानास्कन्दितमेवोत्पद्यते । एवं सवितृसुषिरादिप्रत्यक्षमपि। तथा च चन्द्राल्पत्वप्रत्यक्षं दूरादिदोषनिश्चयात् 'पीतः शङ्खः' इत्यादिप्रत्यक्षं प्राथमिकार्थाभावनिश्चयादेव बाधितमिति दोषज्ञानविषयबाधाज्ञानादिना अप्रामाण्यज्ञानकलङ्कितेन स्वविषयपरिच्छेदपराङ्मुखेनाक्षेणावकाशे दत्तेऽनुमानादिकं प्रवर्तते । न त्वक्षस्य तद्बाधकम् । अप्रामाण्यज्ञानाकलङ्कितस्वार्थपरिच्छेदकं निःशङ्कप्रवृत्तिजननयोग्यम् । यथा 'अग्निरुष्ण एव' 'प्रस्तरो यजमानभिन्न एव' 'घटः सन्नेव' 'दुःखं सदेव' इत्यादि । नान्यावकाशदम् न वाऽन्येन बाध्यम् । अत्र प्रागेव दूरादिदोषधीर्वाऽर्थाभावनिश्चयो वाऽस्ति । उक्तं हि विवरणे– 'यत्राविचारपुरस्सरमेव प्रत्यक्षावभासमप्यनुमानादिना बाधितमुच्छिन्नव्यवहारं भवति तत्र तथा भवतु । यत्र पुनर्विचारपदवीमुपारूढयोर्ज्ञानयोर्बलाबलचिन्तया बाधनिश्चयस्तत्र नानुमानादिना प्रत्यक्षस्य मिथ्यात्वसिद्धिः' इति ।।

### जाग्रदादिज्ञानस्याप्रमात्वे दोषकथनम्

किञ्च जाग्रदादिज्ञानस्याप्रमात्वे स्वप्नदृष्टस्य शुक्तिरूप्यादेश्च बाधासिद्धौ दृष्टान्तासिद्धिः । उक्तं हि बौद्धं प्रति वार्तिके–

प्रतियोगिनि दृष्टे च जाग्रद्बोधे मृषा भवेत् ।
स्वप्नादिदृष्टिरस्माकं तव भेदोऽपि किं कृतः ।। इति ।

न चारोप्यसत्ताधिकसत्ताकविषयत्वेनापेक्षिक प्रमात्वेनान्यून-सत्ताकविषयत्वेन वा बाधकतेति वाच्यम् । स्वाप्निके शुक्ताविदं रूप्यमिति धियो बाधकेनेदं रूप्यमिति ज्ञाने त्वन्मते आरोप्याधि-कसत्ताकत्वाभावात् । स्वप्ने भातस्य कृत्स्नस्य तव प्रातिभासिक-त्वनियमात् । तदभाववति तत्प्रकारकत्वादिरूपाप्रामाण्ये सत्यप्या-पेक्षिकप्रमात्वेन बाधकत्वाङ्गीकारे वेदान्तजन्यब्रह्मधियो मिथ्यार्थ-कत्वेऽपि प्रपञ्चधीबाधकत्वोपपत्त्याऽधिष्ठानब्रह्मणः सत्वासिद्ध्यापत्तेः । वल्मीके स्थाणुत्वभ्रमस्य तदनन्तरं तत्र जातेन पुरुषत्वभ्रमेण निवृत्यापत्तेश्च ।।

### भाविबाधशङ्कानिराकरणम्

न चाक्षे भाविबाधकशङ्कासंभवेन तत् दुर्बलम् । शङ्काबीजाभावात्। निष्कारणशङ्काया वेदेऽपि संभवात् । शुक्तिरूप्यादिप्रत्यक्षे बाधदर्शनेन प्रत्यक्षमात्रे बाधशङ्काङ्गीकारे 'शून्यमेवाद्वैतं' इति स्वाप्निकश्रुत्यर्थ-बाधदर्शनेन वेदमात्रे बाधशङ्काया पुंश्चल्यां व्यभिचारदर्शनेन मातरि व्यभिचारशङ्कायाश्चापत्तेः ।

।। इत्यक्षस्य लिङ्गादिबाध्यत्वे बाधकम् ।।

# १४. अथ जगत्सत्यत्वानुमानानि

अप्रयोजकत्वपरिहारपूर्वं जगतः परमार्थसत्वसाधकहेतुकथनम्

सत्यत्वानुमानबाधिताश्च दृश्यत्वादयः। तथा हि– विमतं परमार्थसत् असत्वाभाववत्वे सति प्रातिभासिकत्वाभावात् ब्रह्मवत्। आरोपितत्वेनोभयसंमतं प्रातिभासिकपदेनोक्तमिति न सिद्धान्ते प्रातिभासिकाप्रसिद्धिर्दोषः । अन्यथा तवापि मिथ्यात्वानुमाने प्रातिभासिकान्यस्य पक्षीकृतत्वाद्दोषसाम्यम् । ब्रह्मण्यसत्प्रातिभासिक-व्यावृत्तिरूपं तत्त्वाभावरूपं वा हेतुं प्रति व्यावर्तकतया प्रयोजक-त्वेनापृथिवीव्यावृत्तिं प्रति पृथिवीत्वस्येव तद्विरुद्धपरमार्थसत्वस्यैव दृष्टत्वेन न काल्पनिकसत्वेन हेतूपपत्त्याऽप्रयोजकता । ज्ञानत्वानन्द-त्वादिकं च नासद्व्यावृत्तिप्रयोजकम् । साक्षादसदविरोधित्वात् । न चासद्व्यावृत्तेः प्रातिभासिकरूप्यव्यावहारिकविश्वपरमार्थसद्ब्रह्म-साधारण्येन तत्त्रितयनिष्ठमेकं प्रयोजकं, प्रातिभासिकव्यावृत्तेश्चा-सद्विश्वब्रह्मसाधारण्यात् तत्त्रितयसाधारणमेकं च वाच्यमिति न परमार्थसत्वं हेतुप्रयोजकमिति वाच्यम् । असद्व्यावृत्तिविशिष्टप्राति भासिकव्यावृत्तेर्हेतूकरणात् । विशिष्टव्यावृत्तिं प्रति परमार्थसत्वस्यैव प्रयोजकतया दृष्टत्वात् ।।

एतेन त्रितयसाधारणव्यावृत्तिप्रयोजकद्वयसमावेशादेव ब्रह्मण्युभय-व्यावृत्त्युपपत्तौ नीलत्वघटत्वरूपावच्छेदकद्वयसमावेशोपपन्ननील-घटत्ववन्न भिन्नप्रयोजककल्पनायां मानमस्तीति निरस्तम् । उभयत्वाश्रययोर्व्यावृत्त्योर्व्यभिचारित्वात् । उभयत्वपर्याप्तिनिवेशेस्य परस्परवैशिष्ट्यनिवेशस्य चावश्यकत्वात् । हेतुतावच्छेदकावच्छिन्नं प्रत्येव साध्यस्य प्रयोजकत्वात् ।

न च नित्यत्वमुपाधिः । उपाध्यभावस्यानित्यत्वस्य साध्याभावं विनाऽप्युपपत्त्याऽप्रयोजकत्वात् ।।

जगतः परमार्थसत्त्वसाधक प्रमां प्रति साक्षादनिषेध्यत्वेन विषयत्वहेतुकथनम्

प्रमां प्रति साक्षादनिषेध्यत्वेन विषयत्वं च हेतुः । प्रमात्वं च विशेष्यावृत्त्यप्रकारकज्ञानत्वम् ।।

सत्यत्वसाधकमिथ्यामिथ्यात्वकत्वसाधकहेतुविवरणम्

मिथ्यामिथ्यात्वकत्वमपि हेतुः । मिथ्यात्वं च परमार्थसद्भिन्नत्वादिकम्। तेन ज्ञाननिवर्त्यत्वादिरूपमिथ्यात्वस्य तुच्छे मिथ्यात्वेऽपि न व्यभिचारः ।।

जगत्सत्यत्वसाधककल्पकाभावहेतूपपादनम् अद्वैतसिद्ध्युक्तपरिहारखण्डनं च

कल्पकाभावोऽपि हेतुः । न चासिद्धिः । शुद्धं हि चैतन्यं न कल्पकं निर्दुष्टत्वात् । नोपहितं कल्पकम् । तस्य कल्पितत्वेनानवस्थापातात् । अतो यावद्विशेषाभावे कल्पकसामान्याभवसिद्धिः। न चानाद्यविद्योपधानवशेन शुद्धमेव कल्पकम् । कल्पकत्वं हि कल्पनां प्रत्याश्रयत्वं विषयत्वं भासकत्वं वा । तत्सर्वं कल्पनासमसत्ताकत्वेन न शुद्धत्वव्याघातकमिति वाच्यम् । अनाद्यविद्योपहितस्य शुद्धत्वासंभवात् । तदुपधानस्य दोषं विनैवाङ्गीकारे स्वाभाविकत्वापत्त्या त्वन्मते निवृत्त्यनुपपत्तेः । निरुपाधिकस्य सत्यत्वनियमाच्च । आश्रयत्वादेरसंगे ब्रह्मणि स्वतो दोषं विनाऽसंभवाच्च। न चोपहितस्य कल्पकत्वेऽपि नानवस्था । अविद्याध्यासस्याध्यासान्तरानपेक्षत्वात् । स्वपरसाधारणसर्वनिर्वाहकत्वोपपत्तेः । कल्पितप्रतिबिम्बविशिष्टादर्शादेरादर्शान्तरे

प्रतिबिम्बकल्पकत्वदर्शनाच्चेति वाच्यम् । येनोपहितं चैतन्यं कल्पकं तत्प्रत्यात्माश्रयदोषेणोपहितस्य कल्पकत्वासंभवात् । उपहितस्यापि त्वन्मते कल्प्यत्वेन स्वस्यैव कल्पकत्वे चात्माश्रयापत्तेः । उपहितान्तरस्य कल्पकत्वेऽनवस्थापत्तेः । अविद्याध्यासस्याध्यासान्तरानपेक्षत्वेऽनध्यस्तत्वापत्त्या सत्यत्वापत्तेः । प्रतिबिम्बस्थले आदिप्रतिबिम्बकल्पकस्य बिम्बस्याकल्पितस्याङ्गीकारेणानवस्थाद्यभावात् । प्रतिबिम्बस्य च्छायावत् सत्यवस्त्वन्तरत्वाच्च ।।

अद्वैतसिद्ध्युक्तव्यभिचारपरिहारपूर्वं आत्मन्यध्यस्तत्वाभावसाधकहेतूपपादनम्

विमतं नात्मन्यध्यस्तळङम् आत्मसाक्षात्कारवत्प्रवृत्तिविषयत्वात्। यदेवं तदेवं यथा घटसाक्षात्कारवत्प्रवृत्तिविषयः पटो न तत्राध्यस्तः। न चासिद्धिः । ईशजीवन्मुक्तयोरात्मसाक्षात्कारवतोरपि जगद्रक्षणभिक्षाटनादौ प्रवृत्तेः । शङ्खेऽध्यस्तमपि पीतत्वं न शङ्खतत्त्वश्वैत्यसाक्षात्कारवत्प्रवृत्तिविषय इति न व्यभिचारः । न च मुखैक्यसाक्षात्कारवत्प्रवृत्तिविषये मुखेऽध्यस्ते प्रतिबिम्बे व्यभिचारः । ऐक्यविशिष्टमुखसाक्षात्कारेण तदज्ञाननिवृत्तेः । अज्ञानं विनाऽध्यासासंभवात् । न च तद्व्यतिरेकेणोपलभ्यमानत्वमुपाधिः । सुखादावनध्यस्ते सुखत्वादौ व्यक्तिव्यतिरेकेणोपलभ्यमानत्वाभावेन साध्याव्यापकत्वात् । प्रातीतिकस्याधिष्ठानोपलंभं विनापि परोक्षोपलंभसंभवेन पक्षादौ साध्याभावसाधकोपाध्यभावस्यासंभवाच्च ।।

अद्वैतसिद्ध्युक्तव्यभिचारपरिहारपूर्वकं<br>ईश्वरमायाकल्पितत्वाभावसाधकहेतुद्वयोपपादनम्

विमतं नेश्वरमायाकल्पितं तं प्रत्यपरोक्षत्वात् । यथा चैत्रं प्रत्यपरोक्षो घटो न तन्मायाकल्पितः । नापि जीवमायाकल्पितम्।

तस्मिन् सुप्ते व्यवस्थितत्वात् । न चाद्ये ऐन्द्रजालिकं प्रत्यपरोक्षे तन्मायाकल्पिते व्यभिचारः । स्वमायया मोहं विना मायिकस्यापरोक्ष्यासंभवात् । यथा हि रोगाद्यापरोक्ष्याभावेऽपि गुरूपदेशादिना ज्ञातौषधादिप्रभावो वैद्यः 'इदमिमं रोगमाशु नाशयति पश्यन्तु' इति वदति । तथैन्द्रजालिकोऽस्मान् मन्त्रादितः 'इत्थं लोका भ्राम्यन्ति' इति ज्ञतमन्त्रादिप्रभव आपरोक्ष्याभावेऽपि 'इममाम्रं पश्यन्तु' इतिवदिति ।

न च द्वितीयेऽसिद्धिः । दृष्टिसृष्टिवादस्य निरसिष्यमाणत्वेन 'स एवायं घटादिः' इति प्रत्यभिज्ञया तत्सिद्धेः ॥

### आत्मनः परमार्थसदन्यत्वसाधकहेतूपपादनम्

आत्मा परमार्थसदन्यः पदार्थत्वादनात्मवत् । न च कल्पितात्मप्रतियोगिकभेदेनार्थान्तरं सिद्धसाधनं च । कल्पितमिथ्यात्वेन मिथ्यात्वानुमानेऽपि सिद्धसाधनापत्तेः । न च व्यावहारिकपदार्थमादायसिद्धसाधनेऽतिप्रसङ्गाभावः । मिथ्यार्थमादाय सिद्धसाधनस्य सर्वत्र संभवेन लालाया वक्त्रासववत् त्वदीयव्यावहारिकादिनामकरणस्याकिञ्चित्करत्वात् ॥

### आत्मधर्मिकसत्यानात्मसाध्यकहेतुकथनम्

आत्मा यावत्स्वस्वरूपमनुवर्तमानानात्मवान् तादृशभाववान् आत्मवान्वा स्वज्ञानाबाध्यतादृशानात्मवान्वा पदार्थत्वात् भावत्वाद्वा घटादिवत् । स्वपदं समभिव्याहृतपरमिति व्याप्तिग्रहदशायां दृष्टान्तस्वरूपं पक्षधर्मताग्रहदशायां चात्मस्वरूपमेव प्राप्यत इति न साध्याप्रसिद्धिसिद्धसाधने ॥

### आत्मधियः स्वविषयविषयकधीबाध्यत्वाभावसाधकहेतूपपादनम्

आत्मधीर्न स्वविषयविषयकधीबाध्या धीत्वात् शुक्तिधीवत् । न च स्वविरोध्यविषयकत्वमुपाधिः । ब्रह्मस्वरूपभिन्नविरोध्यविषयकत्वस्य पक्षेऽपि सत्त्वेन स्वरूपस्य भ्रमेऽपि भातत्वेन तन्मात्रज्ञानस्याविरोधित्वेन च साधनव्यापकत्वात् । न चान्धोऽयं रूपज्ञानवानित्यन्धस्य रूपविषयतया कल्पितं यत् ज्ञानं तस्य रूपं नान्धगम्यमिति स्वविषयविषयकप्रत्यक्षबाध्यत्वदर्शनात् व्यभिचार इति वाच्यम् । अन्धविशेष्यकरूपज्ञानप्रकारकभ्रमस्यांधविशेष्यक रूपज्ञानाभाव-प्रकारकज्ञानेनैव निवर्त्यत्वात् । असमानप्रकारकस्यापि विरोधित्वे रूपे अन्धज्ञानविषयत्वाभावज्ञानस्यापि तन्निवर्तकत्वापाताच्च । न ह्यन्धरूपधियाऽन्धरूपधीर्बाध्यते येन त्वत्प्रबलाववकाशः स्यात् ।।

### स्वकार्यभ्रमाधिष्ठानधीबाध्यत्वाभावसाधकभ्रमहेतुत्वलिङ्गसमर्थनम्

किञ्च आत्माधिष्ठानकभ्रमहेतुर्न स्वकार्यभ्रमाधिष्ठानधीबाध्यः भ्रमहेतुत्वात् । यदेवं तदेवं शुक्त्यधिष्ठानकभ्रमहेतुकाचादिवत् । न च व्यावृत्ताकाराधिष्ठानज्ञानानवधित्वं स्वकार्यभ्रमाधिष्ठानानारोपितत्वं चोपाधिरिति वाच्यम् । अखण्डार्थकवेदान्तजन्यनिष्प्रकारकधियो व्यावृत्ताकारत्वासंभवेन साधनव्यापकत्वात् । द्वितीयोपाध्यभावस्य पक्षे संन्दिग्धत्वात्ततः साध्याभावसिद्धिरूपोपाधिफलासंभवात् । न च दूरादिदोषादुपलादौ यत्र चाकचक्यकल्पना तेन च चाकचक्यदोषेण शुक्ताविव रजतकल्पना तत्र पाषाणधिया रूप्यचाकचक्योरुभयोर्बाधात् व्यभिचार इति वाच्यम् । पाषाणतत्वादिधियो रूप्यादिधीविरोधित्वेऽपि चाकचक्यस्य क्वचित्पाषाणेऽपि संभवेन तज्ज्ञानाविरोधित्वात् । प्रातीतिकचाकचक्यादिदोषस्याज्ञातस्यासंभवेन रूप्यादिभ्रमानुपपत्त्या

चाकचक्यादिज्ञानस्यैव दोषान्तरस्य वा अज्ञातस्याध्यस्ताधिकसत्ताकस्य हेतुताया अङ्गीकार्यत्वाच्च ।।

### ब्रह्मान्यदनादिपक्षकपरमार्थसत्वसाधकहेतुकथनम्

ब्रह्मान्यदनादि परमार्थसत् अनादित्वात् ब्रह्मवत् । अत्र पक्षे हेतौ वाऽनादिपदं अनादिभावपरं बोध्यम् । अत एव ध्वंसाप्रतियोगित्वं नोपाधिः । पक्षादव्यावृत्तेः ।।

### ब्रह्मणः देशकालसम्बन्धसाधकहेतूपपादनम्

ब्रह्म देशकालासंबद्धं नावतिष्ठते पदार्थत्वात् घटवत् । न च यदा ब्रह्म तदाऽवश्यं देशकालसंबन्ध इति व्याप्तौ सिद्धसाधनम् । परममुक्तौ तु न देशकालादिरिति वाच्यम् । अमुक्तिदशायां तौ स्तः मुक्तिदशायां न स्त इत्यस्यैव व्याहतत्वात् । 'तस्य तावदेव चिरं यावन्न मोक्ष्ये अथ संपत्स्यते'[१] 'अथ मर्त्योऽमृतो भवति'[२] 'ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरं'[३] 'ज्ञात्वा मां शान्ति मृच्छति'[४] 'ततस्त्रैगुण्यहीनास्ते परमात्मानमञ्जसा । विशन्ति विप्रप्रवराः सांख्या भागवतैः सह'[५] इत्यादिश्रुतिस्मृतिषु मुक्तेः कालसंबन्धस्य 'यत्र त्वस्य सर्वमात्मैवाभूत्'[६] 'सर्व एकीभवन्ति'[७] इति श्रुतौ देशसंबन्धस्य चोक्तेः । कालासंबन्धे तस्य तुच्छत्वापत्तेश्च ।।

---

१. छा.उ. ६.१४.२.
२. बृ.उ. ६.४.७ (शारीरब्राह्मणम्), काठ.उ. २.३.१४,१५
३. भग.गी. १०.२०.
४. भग.गी. ५.२९.
५. महा.शा.३३३-१७
६. बृ.उ. ६.५.१४ (मैत्रेयीब्राह्मणम्)
७. आथ.उ. ६.७.

### धर्मादिसत्यत्वसाधकानुमानकथनम्

ब्रह्मान्यत् वेदैकगम्यधर्मादिकं परमार्थसत् श्रुतितात्पर्यविषयत्वात् ब्रह्मवत् । न च पारमार्थिकत्वेन वेदतात्पर्यविषयत्वमुपाधिः । एतदभावस्य पक्षे सन्दिग्धत्वेन साध्याभावासाधकत्वात् ।।

### जगत्सत्यत्वसाधकस्वज्ञानपूर्वभावित्वहेतुकथनम्

विमतं परमार्थसत् स्वज्ञानात्पूर्वभावित्वात् ब्रह्मवत् । दृष्टिसृष्टिमतस्य निरसिष्यमाणत्वान्नासिद्धिः । न चानादित्वमुपाधिः। अप्रयोजकत्वात् । न हि परमार्थसत्त्वं विना स्वज्ञानात्पूर्वभावित्ववन्मिथ्यात्वं विनाऽनादित्वाभावोऽनुपपन्नः । अनाद्यविद्यादावुपाध्यभावस्य भागासिद्धेश्च । सामानाधिकरण्येनास्मत्साध्यासिद्धेरुद्देश्यत्वेन तत्रावच्छेदकावच्छेदेनैव त्वदीयोपाध्यभावलिङ्गकसाध्यसिद्धेरुद्देश्यत्वेऽस्मदनुमानप्रतिरोधः स्यात् । सामानाधिकरण्येनानुमितौ सामानाधिकरण्येन बाधबुद्धेरप्रतिबन्धकत्वात् । तथा चानाद्यविद्यादौ भागासिद्धो हेतुः ।।

।। इति जगत्सत्यत्वानुमानानि ।।

## १५. अथ सत्वश्रुतेरनुवादकत्वभङ्गः

### विश्वसत्यत्वप्रतिपादकश्रुतिस्मृत्युदाहरणम्

जगत्सत्यत्वागमबाधिताः दृश्यत्वादयश्च । तथा हि– 'विश्वं सत्यं[1] 'यच्चिकेत सत्यमित्तन्न मोघं'[2] 'यथातथ्यतोऽर्थान् व्यदधात्

१.ऋ.सं- २-२४-१२.

२.ऋ.सं. १०.५५.६.

शाश्वतीभ्यः समाभ्यः'[१] इत्यादिश्रुतिभिः, 'असत्यमप्रतिष्ठन्ते जगदाहुरनीश्वरम्'[२] इत्यादस्मृतिभिः 'नाभाव उपलब्धेः'[३] 'वैधर्म्याच्च न स्वप्नादिवत्'[४] इत्यादिसूत्रैश्च विश्वस्य सत्यत्वप्रतिपादनात् ।।

'विश्वं सत्यं' इति श्रुतेरद्वैतसिद्ध्युक्तस्तावकपरत्वानुवादः

ननु 'विश्वं सत्यं मघवाना युवोरिदापश्च न प्रमिनन्ति व्रतं वाम्। अच्छेन्द्राब्रह्मणस्पती हविर्नो अन्नं युजेव वाजिना जिगातम्।। इत्यस्य हे इन्द्रा ब्रह्मणस्पती मघवाना मघवानौ धनवन्तौ मस्ववताविति[५] वा विश्वं सर्वं कर्म सत्यं सद्भवत्वात्, फलस्यावश्यं-भावित्वाद्वा, तादृशं कर्म युवोरित् युवयोरेव युवाभ्यामेवोद्दिश्य सर्वकर्माण्यनुष्ठेयानीत्यर्थः । आपो व्यापनशीला देवता वां युवयोर्व्रतं संकल्पं कर्म वा न प्रमिनन्ति न हिंसन्ति मित्र हिसांयां, नोऽस्माकं हविर्दध्यादिकं अन्नं च पुरोडाशादिकं अच्छ अभिलक्ष्य वाजिना वेगवतावश्वाविव युजा युक्तौ सन्तौ, जिगातं देवयजनमागच्छतं । जिगातिर्गतिकर्मा जौहोत्यादिकः । यद्वा हे इन्द्राब्रह्मणस्पती विश्वं सर्वं सत्यं सत्वेन परिदृश्यमानं जगत् युवयोरित् युवाभ्यामेव सृष्टम्। यद्वा युवयोरेव विश्वं सर्वं स्तोत्रं सत्यं यथार्थं, तत्प्रतिपाद्यगुणानां युवयोः सत्वात् । आपो व्यापनशीला देवता अबुपलक्षितानि पञ्च भूतानि वां युवयोर्व्रतं जगदुत्पादनाख्यं कर्म न हिंसन्ति । इत्थं महानुभावौ युवां जिगातमित्यर्थ इति स्तावकमिदं वाक्यम् । न तु जगत्सत्यत्वपरमिति ।

१. ईश.उ. -८
२. भग.गी. १६.८
३. ब्र.सू. २.२.२८
४. ब्र.सू. २.२.२९
५. 'मनस्विनाविति' इति 'वस्वन्ताविति' इति वा स्यादिति भाति ।

### श्रुतेः परोक्तानुवादकत्वखण्डनम्

अत्रोच्यते । अबाध्यार्थकस्य सत्यशब्दस्य त्वदुक्तार्थकत्वे मानाभावः । अन्यथा 'तत्सत्यं' इत्यादेरपि सद्धेतुत्वात् सत्यमित्यर्थापत्तेः । युवयोः संबन्धि विश्वं सत्यमित् सत्यमेव, वां युवयोः जगत्सर्जनादि आपश्चन व्यापनशीला देवताः प्रमिनन्ति जानन्ति । दु मित्रप्रक्षेपणे । प्रक्षेपणं गतिविशेषः । गत्यार्थास्ते ज्ञानार्थाः । प्रोपसर्गाद्वा ज्ञानार्थः । अस्मदीयं हविरन्नं च प्रति अच्छ सम्यक् जिगातमागच्छतम् । युजेव सखायाविव चनशब्दस्य 'मम चन त्वा युवतिः परा सा मम चन त्वा कुषव जगार' इत्यादिषु चनशब्दस्यैकपदत्वेन माधवेन व्याख्यातत्वेनेहापि तथात्वस्यैवौचित्याच्च। 'नेह नानास्ति किञ्चन' इत्यत्र त्वयाऽप्यङ्गीकृतत्वाच्च । यच्चिकेत कृतवान् तन्न मोघं न मिथ्या किन्तु सत्यमेव । प्रेक्षावत्सृष्टत्वेन देवताप्रमाविषयत्वेन लिङ्गेन सत्यमिति श्रुत्या च जगतः सत्यत्वसिद्धिः । संभवति सार्थक्ये निर्थकस्तावकत्वं न युक्तम् ।।

### सत्वश्रुतेरनुवादकत्वनिषेधः

न च 'याथातथ्यतः' इत्यस्य पूर्वसृष्टप्रकारेण जगत्सर्जनमर्थो नतु जगत्सत्यत्वं, तत्सर्जनसत्यत्वं वाऽर्थः । यथार्थशब्दसमानार्थकात् तस्मादबाध्यार्थप्रतीतेः । न चाक्षगृहीतग्राहित्वाच्छ्रुतिरनुवादिनी । यथा 'पृथिवीतरभिन्ना' 'न हिंस्यात् सर्वा भूतानि' इत्यादौ च घटादावेकदेशप्रत्यक्षेणेतरभेदसिद्धावपि न पृथिवीत्वावच्छेदेन भूतत्वावच्छेदेन तत्सिद्धिस्तथा विश्वैकदेशे घटादौ प्रत्यक्षेण सत्यत्वग्रहणेऽपि विश्वत्वावच्छेदेन तदग्रहान्नानुवादकत्वम् । न च

दृष्टान्ते यथा पृथिवीत्वं भूतत्वं चैकोऽनुगतो धर्म इति तदवच्छेदेन विधेयस्याप्राप्तत्वेन तत्राननुवादकत्वं युक्तम् । इह तु विश्वत्वं नैकम्। विश्वशब्देन सर्वनाम्ना घटपटादीनां तेन तेन रूपेणोपस्थापनात् प्रत्यक्षेणापि तेनैव रूपेण सत्वग्रहणादनुवादकत्वमेवेति वाच्यम् । नव्यमते हि सर्वनाम्नां बुद्धिस्थवति शक्तिः । बुद्धिस्थत्वं शक्यतावच्छेदकतावच्छेदकम् । तमानयेत्यत्र बुद्धिस्थवन्तमानयेत्येव बोधः । कदाचिच्छक्यतावच्छेदकघटत्वादौ बुद्धिस्थत्वस्य मोषे घटमानयेत्यपि बाधः । शक्यतावच्छेदकतावच्छेदकं बुद्धिस्थत्वं शक्त्यनुगमकम् । यथा आकाशपदशक्तेः, कवत्वादिकमवच्छेदकं तदवच्छेदकतावच्छेदकं कत्वादिकं तदेव शक्त्यनुमगकम् नाना-शक्त्यपेक्षया लाघवात् तद्वत् । श्रुत्या धीस्थवत्वेनाक्षेण च घटत्वादिना बोधनान्न अनुवादकताश्रुतेः ।।

वस्तुतस्तु सर्वनामपदेषु तदादिषु प्रकृतानां तत्तद्रूपेणोपस्थापकत्वेऽपि जगदादिशब्दसमानार्थकविश्वादिशब्दैः सर्ववृत्तिधर्मप्रकारेणोपस्थापक-त्वस्यानुभवसिद्धत्वेन घटत्वादिप्रकारभिन्नप्रकारेण जगत्सत्यत्वस्य विश्वं सत्यमित्यादिना बोधनात् ।

ब्रह्म सत्यं तपः सत्यं सत्यं चैव प्रजापतिः ।
सत्याद्भूतानि जातानि सत्यं भूतमयं जगत् ।।

इत्याश्वमेधिके प्रपञ्चस्य जगत्वादिना सत्यत्वोक्तेः ।

किञ्चाक्षं वर्तमानतया घटादिसत्वं गृह्णाति । श्रुतिस्तु कालो-दासीनतया बोधयतीति त्रैकालिकमेव सत्वं गृह्णातीति नानुवादिनी श्रुतिः ।।

अप्रमाणप्राप्तानुवादकत्वेऽतिप्रसङ्गाभिधानम्

किञ्चाक्षं प्रमाणं चेत् तेनैव मिथ्यात्वमानबाधविश्वसत्वसिद्धी स्याताम् । अप्रमाणं चेन्न स्यादेव श्रुतेरनुवादकत्वम् । न च प्रत्यक्षाप्रामाण्येऽपि तद्गृहीतग्राहित्वेनैवास्त्वनुवादकत्वम् । अप्रामाणमात्रगृहीतग्राहित्वे न श्रुतेरप्रामाण्यापत्तिः । अन्यथा 'तत्सत्यं' इत्यादिब्रह्मसत्वश्रुतिरपि प्रत्यक्षेण विश्वाधिष्ठानत्वलिङ्गेन च प्राप्तं सत्वं 'असद्वा इदमग्रे' इत्यादि निषेधायानुवदतीति स्यात्। 'घटः सन्' इत्यादिप्रत्यक्षस्य ब्रह्मसत्वविषयतायास्त्वयाऽङ्गीकारात्। न च प्रत्यक्षं घटत्वादिसामानाधिकरण्येन श्रुतिर्ब्रह्मत्वसामानाधिकरण्येन गृह्णातीति नानुवादिनी ब्रह्मसत्वश्रुतिरिति वाच्यम् । अखण्डार्थकवेदान्तैरतिरिक्तब्रह्मत्वादेरबोधनात् । स्वरूपसत्वस्यैव बोधनाच्च। 'अदुःखमसुखं समं' इति निषेधाय सुषुप्त्यादौ प्रत्यक्षेण गृहीतब्रह्मानन्दानुवादिन्यानन्दश्रुतिः स्यात् । न च वैषयिकसुखमेवासुखमित्यनेन निषिध्यते । नेहनानेत्यादिना स्वतन्त्रसत्वस्य जगति निषेधेनैव श्रुतिद्वयाविरोधोपपत्तेः । न च निष्प्रपञ्चतायाः सुषुप्तौ पुरुषार्थत्वदर्शनेन तत्परं वाक्यं 'फलवत्सन्निधौ अफलं तदङ्गं' इति न्यायेन प्रपञ्चवाक्यं तदनुसारेण नेयमिति वाच्यम् । मूर्छायां निष्प्रपञ्चताया अपुरुषार्थत्वदर्शनात् । न च मूर्छायां न स्वरूपसुखस्फुरणम् । तर्हि सुखस्यैव पुरुषार्थत्वेन निष्प्रपञ्चत्वस्याकिञ्चित्करत्वात् । 'पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनामृतत्वमेति' इत्यादिश्रुत्या 'भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरं । सुहृदं सर्वभूतानां ज्ञात्वा मां शान्तिमृच्छति[1] ।।' इत्यादिस्मृत्या च स्वभिन्नसगुणज्ञानादेव मोक्षोक्तेः ।।

---

१.भग.गी. ५.२९.

### गृहीतमात्रग्राहित्वमनुवादकत्वे प्रयोजकमिति समर्थनम्

किञ्च गृहीतग्राहित्वं हि नानुवादकत्वे तन्त्रम् । किन्तु गृहीतमात्रग्राहित्वमिति प्रत्यक्षाप्राप्तातीन्द्रियसत्वांशेऽनुवादकत्वाभावेन तत्सत्वस्य मिथ्यात्वश्रुत्याऽपहारासंभवात् । श्रुतिविहितस्य श्रुत्या निषेधे विकल्पापत्तेः । न च वस्तुनि विकल्पासंभवेन सत्वश्रुतेर्निषेध्यसमर्पणद्वारा निषेधवाक्यशेषतोचिता । षोडशिग्रहण-वाक्यस्यापि तदग्रहणवाक्यशेषतापत्तेः । ग्रहणं व्यावहारिकमग्रहणं तात्विकमिति गत्यापत्तेश्च । अतोऽतीन्द्रियसाधारणपारमार्थिकसत्वपरा सत्वश्रुतिः । मृषात्वश्रुतिस्तु स्वतन्त्रद्वैतनिषेधपरेति समसत्ताक-विषयदानेनैव गतिर्वाच्या ॥

वस्तुतस्तु मिथ्यात्वश्रुतेर्लक्षणयाऽखण्डचिन्मात्रपरत्वान्न सत्व-श्रुतिविरोधः । न चावान्तरतात्पर्येण द्वितीयाभावसिद्धिः । द्वितीयाभावस्यैव तात्विकत्वापत्तेः ॥

### नाभावोपलब्धेः इति सूत्रस्य परोक्तार्थखण्डनम्

किञ्च यदि प्रत्यक्षं दुर्बलत्वाद्वर्तमानमात्रग्राहित्वाच्च न मिथ्यात्व-श्रुत्यर्थापहारक्षमं तर्हि सत्वश्रुत्यर्थापहारक्षममपि न स्यादिति कथमनुवादिका सत्वश्रुतिः । न च सतो ब्रह्मणो नाभावः, न शून्यत्वं, प्रमाणात् सत्वेनोपलब्धेः, तथा च किञ्चित् परमार्थसत् शून्यवादिनापि स्वीकार्यम् । अन्यथा बाधस्य निरवधित्वप्रसङ्गादिति सूत्रार्थ इति वाच्यम् । प्रमाणेन सत्वेन गृहीतस्य त्वया मिथ्यात्वाङ्गीकारात् असद्विलक्षणत्वात् शुक्तिरूप्यवत् ब्रह्म मिथ्या स्यात् इत्याशङ्क्य कचिदुपाधौ सत्वेन प्रतीत्यनर्हत्वरूपासत्वाभावः सत्वम् । तच्च शुद्धे ब्रह्मणि नास्तीति वदता त्वया ब्रह्मणोऽप्य-सत्वाङ्गीकाराच्च । सत्ताद्वैविध्यस्य बाह्येनाप्यङ्गीकाराच्च ।

द्वे सत्वे समुपाश्रित्य बुद्धानां धर्मदेशिना ।
लोके संवृतिसत्वं स्यात् सत्वं च परमार्थतः ।
सांवृतं व्यावहार्यं स्यान्निवृत्तौ पारमार्थिकम् ।। इति बौद्धोक्तेः ।

अतो न व्यावहारिकत्वमात्रेण स्वप्नवैलक्ष्यण्योक्तिर्युक्ता ।

न च ज्ञानभिन्नं विषयाभावं वदतो विज्ञानवादिनो वा मतं नाभाव इत्यादिना दूष्यते ज्ञानभिन्नार्थाभावो न घटस्य ज्ञानमिति ततो भिन्नतयोपलब्धेः । 'विमता धीः न ज्ञानभिन्नावलम्बनी धीत्वात्' स्वप्नधीवदित्यनुमाने बाध्यत्वस्योपाधित्वप्रदर्शनाय स्वप्नवैधर्म्योक्तिरिति वाच्यम् । ज्ञानभिन्नमात्रस्य बाध्यत्वमङ्गीकुर्वतो विज्ञानवादिनो मते साधनव्यापकत्वात् । त्वन्मतेऽपि ब्रह्मणः प्रमाणागम्यत्वादन्यस्य बाध्यत्वाच्च । साधनव्यापकत्वात् । अतः सत्यविविधविचित्रजगत्स्रष्टा सत्यानन्तगुणो हरिः सिद्धः ।।

।। इति सत्वश्रुतेरनुवादकत्वभङ्गः ।।

## १६. अथासतः साधकत्वभङ्गः

सत्वेन ज्ञातत्वस्य साधकत्वप्रयोजकत्वनिरासः

अर्थक्रियाहेतुत्वान्यथानुपपत्तिरपि जगत्सत्यत्वे मानम् । न च सत्वेन ज्ञातत्वमेव साधकत्वे तन्त्रम् । वह्नित्वेनाज्ञाते वह्नौ दाहकत्वदर्शनात् । तत्त्वेन ज्ञाते गुञ्जापुञ्जादौ दाहकत्वादर्शनाच्च ।

किञ्च क्लृप्तदोषरहितया यादृश्या धिया तव ब्रह्मणि सत्वसिद्धिस्तादृश्या क्लृप्तदूरादिदोषहीनेन्द्रियजन्यया मम जगति सत्यत्वसिद्धिरस्तु । क्लृप्तदोषबाधादेः प्रत्यक्षेऽभावात् । कल्प्यस्य श्रुतावपि संभवाच्च ।

न च तत्त्वेनेश्वरीयज्ञानविषयता वह्नावस्तीति तस्य दाहकत्वमिति वाच्यम् । गुञ्जारोपितवह्नेर्दाहकत्वस्य ब्राह्मणत्वेन ज्ञातशूद्रस्य वेदाधिकारस्य चापत्तेः ।।

ब्रह्मज्ञानेतराबाध्यत्वस्य साधकत्वनिरासः

न च ब्रह्मज्ञानेतराबाध्यत्वरूपव्यावहारिकत्वमेव तन्त्रम् । ब्रह्मण्यारोपितक्षणिकत्वादेरपि तदितरज्ञानाबाध्यस्य साधकत्वापत्तेः । अज्ञानादिसाधके परमार्थसति साक्षिणि साधकत्वदर्शनेन लाघवात् परमार्थसत्वेनैव साधकत्वौचित्याच्च । न चाज्ञानोपहितमेवाज्ञानसाक्षि। आत्माश्रयादिदोषेणाज्ञानानुपहितस्यैवाज्ञानादिसाक्षित्वादधिष्ठानत्वाच्च ।।

सत एव साधकत्वमिति व्याप्तेर्व्यभिचारपरिहारः

किञ्च येन मानेन तव जगतो व्यावहारिकत्वं तेनैवास्माकं तात्विकत्वं स्यात् । ननु सद्भिन्ने प्रतिबिम्बे बिम्बसाधकताऽस्ति । तस्य बिम्बात्मना सत्वेऽपि प्रतिबिम्बत्वाकारेणासत्वात् । स्वाप्नार्थस्यापि शुभादिसूचकत्वम् । यद्यपि तद्दर्शमेव साधकं तथापि दर्शनस्यातिप्रसक्तत्वेन विषयोऽप्यपेक्ष्यत एवेति चेन्न । बिम्बाभाववदवृत्तित्वरूपव्याप्तिज्ञानस्य परमरार्थसतो बिम्बानुमिति हेतुत्वात्। सतो ज्ञानस्य साधकत्वे विषयस्योपलक्षणत्वात् । एवं स्फटिकलौहित्यज्ञानमेवोपाधिसान्निध्यसाधकम् । तच्च सदेव ।।

रेखास्मारितवर्णस्य साधकत्वसमर्थनम्

न च तादात्म्येन रेखारोपितवर्णानामर्थसाधकत्वं दृष्टम् । रेखास्मारितवर्णानामेवार्थसाधकत्वात् । न च 'आशैशवमयं ककारोऽयं गकारः' इत्यभेदानुभवादभेदेनैव स्मरणम् । विवेकिनामपि

तथा वाक्यव्यवहारदर्शनेनारोपासंभवात् । किन्तु पदस्यार्थ इव वर्णानां रेखासु संकेत एव । न च वर्णारोपितानां ह्रस्वदीर्घत्वादीनां ध्वनिगतानां नगो नाग इत्यादावर्थविशेषप्रत्यायकत्वं दृष्टम् । वर्णेष्वनारोपितध्वनिसाहित्यस्य तदभिव्यक्तरूपदैर्घ्यस्य वा प्रत्यायकत्वात् । न च ध्वन्यस्फुरणेऽपि दीर्घो वर्ण इति व्यवहारादारोप एवायम् । ध्वन्यस्फुरणे दीर्घादिव्यवहारस्यालीकत्वात् ।।

वस्तुतस्तु दीर्घत्वादिज्ञानमेवार्थविशेषज्ञानहेतु, तच्च सदेव । केषांचिदनित्या नाना ह्रस्वदीर्घाः ककाराः । सिद्धान्ते तु नित्या एव नाना ककाराः ।।

### शङ्काविषस्य भयहेतुत्वनिराकरणम्

विशशङ्का भयमुत्पाद्य धातुव्याकुलतामुत्पाद्य मरणहेतुर्न तु शङ्काविषमपि । सवितृसुषिरज्ञानमेवारिष्टादिहेतुर्न त्वर्थोऽपि । ज्ञानं तु सदेव ।।

### अवच्छिन्नस्य यद्वत्ति अवच्छेदकस्यापि तद्वतीति नियमस्य व्यभिचारप्रदर्शनम्

न चार्थानवच्छिन्नज्ञानहेतुत्वेऽतिप्रसङ्गादवच्छिन्नमेव ज्ञानं हेतुरित्यर्थोऽपि हेतुरिति वाच्यम् । अर्थावच्छिन्नस्य हेतुत्वेऽप्यवच्छेदकस्य अर्थस्य 'कुरूणाां क्षेत्रे वसति' इतिवत् ताटस्थ्येनाहेतुत्वोपपत्तेः । घटावच्छिन्नस्य तदत्यन्ताभावतद्ध्वंसादेर्घटदेशकालभिन्न-देशकालादि वृत्तित्वेऽप्यवच्छेदकस्य घटस्य तदभाववत्, घटेच्छाब्रह्मज्ञानयोर्घटज्ञानवेदान्तसाध्यत्वेऽपि घटब्रह्मणोस्तदभाववत्, घटप्रागभावस्य घटं प्रति जनकत्वेऽपि घटस्याजनकत्ववत्, विशेषादर्शनस्य भ्रमं प्रति हेतुत्वेऽपि विशेषदर्शनस्य तदभाववत्, विहिताकरणस्य

प्रत्यवायजनकत्वेऽपि विहितकरणस्य तदभाववत्, स्वर्गकामनाया यागजनकत्वेऽपि स्वर्गस्य तदभाववत्, अतीतादिधियो दुःखादिहेतुत्वेऽप्यतीतादेस्तदभाववत्, चिकीर्षितघटबुद्धेर्घटहेतुत्वेऽपि घटस्य तदभाववत्, ब्रह्माज्ञानस्य जगत्परिणामिकारणत्वेऽपि ब्रह्मणस्तदभाववच्च। न च मिथ्यार्थे ज्ञानान्तरात् स्वज्ञानव्यावर्तकताऽस्तीत्यसतो हेतुत्वम् । न हि व्यावृत्तिधीहेतुत्वं व्यावर्तकत्वम् । किन्तु व्यावृत्तिधीहेतुधीविषयत्वम् । सत्यपि दण्डे तदज्ञाने व्यावृत्त्यज्ञानात्।

न चावच्छेदकस्य मिथ्यात्वेऽवच्छिन्नस्यापि मिथ्यात्वमिति ज्ञानमपि मिथ्यैव । अवच्छेदकस्य शशशृङ्गादेस्तुच्छत्वेऽपि तदभावस्य तज्ज्ञानस्य चातुच्छत्वात् । ब्रह्मण्यनृतभेदादेरनृतत्वाभावाच्च ।।

### विषयस्योपलक्षणत्वेऽद्वैतसिद्ध्युक्तानुपपत्तिपरिहारः

ननु विशेषणत्वे संभवत्युपलक्षणत्वमन्याय्यम् । अन्यथा 'दण्डी प्रैषवानन्वाह' 'लोहितोष्णीषा ऋत्विजः प्रचरन्ति' इत्यादावपि वेदे दण्डलौहित्यादेरुपलक्षणत्वापत्त्या तदभावेऽप्यनुष्ठानप्रसङ्गः । 'सर्वादीनि सर्वनामानि'[1] इत्यत्र सर्वशब्दस्य सर्वनामसंज्ञा न स्यात् । 'जन्माद्यस्य यतः'[2] इत्यत्र जन्म ब्रह्मलक्षणं न स्यात् । विशेषणार्थत्वेन तद्गुणसंविज्ञानबहुव्रीहिसंभवेऽप्युपलक्षणार्थत्वेनातद्गुणसंविज्ञान स्वीकरप्रसङ्गात् इति चेन्न । दण्डलौहित्यभिन्नस्य कत्स्नस्य प्राप्तत्वेन तयोरुपलक्षणत्वे विधिवैय्यर्थ्यापत्तेः । सर्वादीत्यत्र 'हलि सर्वेषां'[3] इति पाणिनिप्रयोगस्य विशेषणत्वे बीजत्वात् ।

---

१. पा.सू. १.१.२७.
२. ब्र.सू. १.१.२.
३. पा.सू. ८.३.२२.

'जन्मादि' इत्यत्र 'यतो वा इमानि भूतानि जायन्ते'[१] इत्यादिश्रुतेरेव जन्मनो विशेषणत्वे बीजत्वात् ।

न चोत्कृष्टकलधौतज्ञानादुत्कृष्टसुखमुत्कृष्टसर्पादिज्ञानाच्च उत्कृष्टं भयादिकं दृश्यते । विषयस्याहेतुत्वे तूत्कर्षाद्यसंभव इति वाच्यम् । भाविपुत्रादिज्ञानात् सुखस्योत्कृष्टतज्ज्ञानाच्च उत्कृष्टसुखस्यातीततज्ज्ञानाच्चोत्कृष्टादिदुःखस्य च जन्मदर्शनाद्विषयस्योपलक्षणत्वात् । न हि भाव्यतीतश्च विषयो निर्वाच्योऽपि कार्यप्रकालेऽस्ति ॥

अद्वैतसिद्ध्युक्तवस्तुतस्तुपक्षखण्डनम्

न च दण्डतन्त्वादिसाधारणं यत्रावच्छेदकं सत्वं...[२] । किन्तु कार्यतावच्छेदकं घटत्वादिकं कारणतावच्छेदकं दण्डत्वादीति वाच्यम्। कारणतानिविशिष्टव्यापकतायाः सत्वघटितत्वात् कार्यसमानाधिकरणप्रतियोगिव्यधिकरणात्यन्ताभावाप्रतियोगित्वादिरूपव्यापकत्वस्य केवलान्वय्यत्यन्ताभावप्रतियोगिन्यसत्यसंभवात् । न च कार्याधिकरणे दण्डाभावो न व्यधिकरण इति प्रतियोगिव्यधिकरणाभावाप्रतियोगित्वं तत्राक्षतम् । मिथ्यावादिमतेऽभावमात्रस्यैव केवलान्वयित्वेन प्रतियोगिव्यधिकरणाभावाप्रसिद्धेः कारणतावच्छेदकसंबन्धावच्छिन्नप्रतियोगिताकव्याप्यवृत्तिकार्यसमानाधिकरणात्यन्ताभावाप्रतियोगित्वं व्यापकत्वम् । तच्चोक्ताभावप्रतियोगित्वरूपमिथ्यात्वविरोध्येव ॥

---

१. तैत्त.उ. ३.१

२. अत्र मातृकायां पङ्क्तिः लुप्ता । अद्वैतसिद्ध्यनुसारेणैवं योजनीयम् । '...तत्र न मम तुच्छविलक्षणत्वादिकम्' ।

### ज्ञानस्य स्वतो व्यावृत्तत्वे अनुमानप्रमाणाभिधानम्

किञ्च सर्पज्ञानमसर्पज्ञानाद्धर्म्यन्तरसंबन्धमनपेक्ष्य स्वतो व्यावृत्तं तज्जनकविलक्षणजन्यत्वात् तज्जन्यविलक्षणजनकत्वाद्वा यवाङ्कुरात् कलमाङ्कुरवत् । यवबीजात् कमलबीजवत् । न च घटसंयोगः पटसंयोगान्न जात्या भिद्यते तदवृत्तिजात्यनधिकरणत्वात् । किन्तु घटरूपोपाधिनैवेति धर्म्यन्तरसंबन्धमपेक्ष्यैव विलक्षणे घसंयोगत्वावच्छिन्ने साध्याभाववति उक्तहेतुसत्वात् व्यभिचार इति वाच्यम् । हेतोः सन्दिग्धासिद्धत्वात् । तादृशजात्यनधिकरणत्वेऽपि कार्यतायाः कारणतायाश्चावच्छेदकधर्मस्यावश्यकत्वेन तत एव व्यावृत्तिसिद्धेः । एकघटसंयोगानां व्यावृत्त्यसिद्ध्यापत्तेश्च । शिलोद्धरणकृतितो माषोद्धरणकृतेरिव विषयमनपेक्ष्यैव व्यावृत्त्यौचित्याच्च । न हि कृतिकालेऽनिर्वाच्योऽपि विषयोऽस्ति ।।

किञ्च तव मते तत्तद्वृत्तेस्तदाकारत्वेन चैतन्यस्य तत्प्रतिबिम्बत्वेन तदभिव्यक्तत्वेन वा, मम तु तत्तज्ज्ञानस्य तत्तदीयस्वभावत्वेन तत्तद्व्यावहारजननशक्तत्वेन वा स्वत एव वैलक्षण्यसिद्धेः । न च विषय एवाकारसमर्पकः, स्वभावव्यवहारौ परिचायकौ । तुच्छस्यातीतादेश्च विषयस्याकारसमर्पकत्वासंभवेन स्वभावादेरेव व्यावृत्तिप्रयोजकत्वौचित्यात् ।।

।। इत्यसतः साधकत्वभङ्गः ।।

## १७. अथ दृग्दृश्ययोः संबन्धानुपपत्तिभङ्गः

कस्यचित् कदाचित् कश्चित्प्रति प्रकाशाय सत्यसम्बन्धः स्वीकार्य इत्युपपादनम्

ननु सर्वस्य दृश्यस्य दृगध्यस्तत्वात् सत्ययोस्त्वाध्यासिकसंबन्धासंभवादन्यतरस्य मिथ्यात्वं दृशो मिथ्यात्वाभावात् दृश्यस्य मिथ्यात्वमिति चेन्न । सर्वस्यापि दृश्यस्य ब्रह्मात्मकदृगध्यस्तत्वेऽपि कस्यचित्कदाचित्कश्चित् प्रति प्रकाशाय त्वयाऽपि तत्तत्संनिकृष्टेन्द्रियजन्यवृत्तिद्वारकसंबन्धस्यानावृतदृशि स्वीकारात । तस्य च सत्येऽप्यर्थे वृत्तिद्वारा संभवेनाध्यासिकसंबन्धव्यसनस्य निष्प्रयोजनत्वात् । न हि तव विज्ञानवादिनामिव तत्तज्ज्ञाने तत्तदर्थाध्यासस्वीकारः । शुद्धदृशः स्वतो भेदाभावात् । उपाधिविशिष्टाया भेदेऽपि घटादिवत् तस्या मिथ्यात्वेनाधिष्ठानत्वायोगात् । न च वृत्तेः पूर्वमाध्यासिकसंबन्धे विद्यमानेऽपि न प्रकाशः, वृत्त्या भग्नावरणचित एव प्रकाशकत्वादिति वाच्यम् । चरमसाक्षात्कारात् प्रागावरणभङ्गाभवेन शुद्धस्यानभिव्यक्तत्वात् । अभिव्यक्तस्य च घटाद्यवच्छिन्नस्य मिथ्यात्वादात्माश्रयापत्त्या चानधिष्ठानत्वात् । न च शुद्धविषयकमूलाज्ञानानिवृत्तावपि घटाकारवृत्त्या तूलाज्ञाननिवृत्त्या घटप्रकाशोपपत्तिः । घटाकारवृत्त्या विषयीकृतस्य चैतन्यस्य सत्यत्वे तत्र दृश्यत्वस्य व्यभिचारापत्तेः । मिथ्यात्वेऽध्यस्ताधिकसत्ताकत्वाभावेनाधिष्ठानत्वासंभवात् । क्षुद्राज्ञाननिवृत्तावपि महाज्ञानावृतस्य प्रकाशकत्वासंभवाच्च ॥

### चितोऽधिष्ठानत्वाभावसमर्थनम्

किञ्च चितो दोषाजन्यत्वेन प्रमात्वे तद्विषयस्य सत्यत्वापत्त्या सत्यं प्रत्यधिष्ठानत्वायोगात् । अप्रमात्वे दोषजन्यत्वापत्त्या सुतरामधिष्ठानत्वायोगाच्च । न च दोषाजन्यत्वं न प्रमात्वप्रयोजकम्। चितः सर्वत्र दोषाजन्यत्वात् । किन्तु दोषाजन्यवृत्त्यवच्छिन्नत्वम्। प्रकृते तदभावान्न विषयसत्यतेति वाच्यम् । दोषजन्यवृत्त्यवच्छिन्ने मृषाभूते घटाद्यध्यासासंभवेन तस्य घटाद्यप्रकाशकत्वात् ॥

### ज्ञानज्ञेययोरध्यासातिरिक्तसम्बन्ध इत्युपपादनम्

न च ज्ञानज्ञेययोः क्लृप्तसंयोगसमवायादिसंबन्धासंभवादाध्यासिकः सम्बन्धः स्वीकार्यः । ध्वंसादेरतीतादिना, मिथ्यात्वलक्षणान्तर्गतस्यात्यन्ताभावस्य प्रतियोगिना, शक्तेः शक्येन, अज्ञानस्याज्ञेयेन, इच्छाया इष्यमाणेन, व्यवहारस्य व्यवहर्तव्येन, वाक्यस्यार्थेन, वृत्तिरूपज्ञानस्य ज्ञेयेन, ज्ञानज्ञेययोः संबन्धो नेति त्वद्वाक्योक्तसंबन्धाभावस्य वाक्येनाध्यासिकसंबन्धाभावेऽपि संबन्धान्तरवत् ज्ञानज्ञेययोरपि संबन्धान्तरसंभवात् । न च मिथ्याजगदन्तर्गतत्वादुक्तसंबन्धा अपि मिथ्या । जगन्मिथ्यात्वसिद्ध्या सम्बन्धमिथ्यात्वसिद्धिः । संबन्धमिथ्यात्वसिद्धौ जगतस्तत्सिद्धिरित्यन्योन्याश्रयात् । चरमवृत्तौ ब्रह्मणोऽध्यासाभावेन ज्ञाने ज्ञेयाध्यासनियमाभावाच्च । न च तत्र ज्ञानमेव ज्ञेयेऽध्यस्तम् । ज्ञानज्ञेययोरन्यतरस्मिन्नन्यतराध्यासनियमात् । ब्रह्मण्यध्यस्तधियो ब्रह्मधीत्वे घटधियोऽपि तत्राध्यस्तायाः ब्रह्मधीत्वोपपत्त्या तत एव मोक्षापत्तेः । न चाध्यासविशेषः शुद्धब्रह्मविषयताप्रयोजको घटादिबुद्धौ नास्तीति वाच्यम् । करणविषययोः संबन्धविशेषस्यैव ज्ञानज्ञेययोः

विषयतानियामकत्वेन ज्ञानज्ञेयसम्बन्धस्य विषयतासमानयोगक्षेमस्य विषयत्वानियामकत्वात् ।।

### चरमज्ञानस्य शुद्धचिति नाध्यास इत्युपपादनम्

किञ्च चरमज्ञानस्यान्तःकरणावच्छिन्न एवाध्यासो नतु शुद्धचिति। अहं जानामीति प्रतीतेः । शुद्धं जानातीत्यप्रतीतेश्च । परोक्षज्ञाने स्मृतौ प्रातीतिकज्ञाने च विषयाध्यासाभावेन ज्ञानज्ञेययोराध्यासिक-संबन्धनियमभङ्गाच्च । प्रातीतिकज्ञानस्य त्वया मिथ्यात्वाङ्गीकारात्। न च नित्यपरोक्षस्थले स्मृतिस्थले च वृत्तावनध्यासेऽप्यधिष्ठान-विषयकवृत्त्या अभिव्यक्तचैतन्य एवाध्यास इति न काप्यनुपपत्तिः। अभिव्यक्तचैतन्यस्य परोक्षस्थले ज्ञानत्वाभावात् । ज्ञानभिन्ने ज्ञेयाध्यासे मानाभावात् त्वयाऽनङ्गीकारात् । ज्ञानज्ञेययोराध्यासिक-सबन्धाभावेऽपि विषयप्रकाशेऽध्यासिकसंबन्धस्यातन्त्रत्वापाताच्च । परोक्ष इवापरोक्षज्ञानेऽपि विषयानध्यासापाताच्च । परोक्षस्थलेऽभि-व्यक्तापरोक्षैकरसचैतन्यस्य ज्ञानत्वे विषयापरोक्ष्यापाताच्च ।।

### परमतसम्मत्या ज्ञानज्ञेययोरनाध्यासिकसम्बन्धप्रदर्शनम्

रूप्यादिकमिदमंशावच्छिन्नेऽध्यस्तं, भास्यते च अविद्यावृत्ति-प्रतिबिम्बितेनेति विषयणि ज्ञाने विषयाध्यासासंभवाच्च । रूप्यादेः स्वज्ञानेऽध्यासे रूप्यज्ञानस्याज्ञाने भ्रमोत्पत्तिस्तज्ज्ञाने तन्निवृत्ति-रित्यापत्तेश्च । अधिष्ठानतत्त्वाज्ञानज्ञानाभ्यामध्यासजन्यनिवृत्त्यो-र्नियतत्वात् । न चेदमंशावच्छिन्नचैन्यं रूप्याधिष्ठानं भ्रमहेतुः । तेनाकारेण ज्ञानं भ्रमविरोधीति वाच्यम् । उपाधिभेदेनोपहितभेदा-वश्यकत्वेनेदमंशावच्छिन्नभिन्ने रूप्याकाराविद्यावृत्त्यवच्छिन्ने रूप्यज्ञाने रूप्याध्यासासिद्धेः ।।

किञ्च वृत्त्युदयात् प्रागाध्यासिकसंबन्धस्य सत्वेऽपि विषयप्रकाशाभावादन्वयव्यतिरेकाभ्यां वृत्तिरेव ज्ञानम् । तत्राध्यासिकसंबन्धासंभवात् तदन्य एव सत्यः संबन्धो वाच्यः । न च वृत्त्युदयात् प्रागज्ञातार्थसिद्ध्यर्थं वृत्तिभिन्नज्ञानमवश्यमभ्युपेयम् । अन्यथा मानाभावेन तस्य तुच्छतुल्यतया सन्निकर्षतज्जन्यज्ञानहेतुत्वेन प्राक् सत्वकल्पना प्रमामाणिकी न स्यादिति वाच्यम् । तत्पुरुषस्य तज्ज्ञाने तं प्रति तस्याज्ञातत्वासंभवात् । सामान्यतस्तु नित्यसर्वज्ञेश्वरज्ञानस्यैव मानत्वात् । उत्तरकालीनानुमानस्यापि तत्र मानत्वाच्च ।।

घटोऽयमित्यसावुक्तिराभासस्य प्रसादतः ।
विज्ञातो घट इत्युक्तिर्ब्रह्मानुभवतो भवेत् ।।

इति वदता परेण वृत्तिप्रतिबिम्बितघटानधिष्ठानचित एव घटानुभवत्वोक्तेः । न च वृत्तिप्रतिबिम्बितस्य घटाधिष्ठानचैतन्येन सह भेदाभावादुपपत्तिः । शुद्धचैतन्याद्व्यावहारिकघटाधिष्ठानात् वृत्तिप्रतिबिम्बितस्य भेदाभावे तद्दृश्यत्वादिना शुद्धस्यापि दृश्यत्वाद्यापत्तेः ।।

अध्यासिकसम्वन्ध इति कोऽर्थ इति विकल्पपूर्वं खण्डनम्

किञ्च अध्याकिसंबन्धो नामाध्यस्तः संबन्धो वा अध्यस्तत्वमेव वा । आद्ये संबन्धस्य मिथ्यात्वेऽपि संबन्धिनो दृश इवामिथ्यात्वोपपत्तेः। द्वितीये ज्ञानस्याप्यध्यस्तत्वेन तत्रेतराध्यासानुपपत्तेः । न च वृत्त्यवच्छिन्नं ज्ञानं तत्रावच्छेदिकाया वृत्तेर्जडाया अध्यस्तत्वेऽप्यवच्छेद्यस्य चैतन्यस्यानध्यस्तत्वेन तत्र दृश्याध्यासोपपत्तिः । वृत्त्यवच्छिन्नस्य मिथ्यात्वे तत्र व्यावहारिकघटाद्यध्यासासंभवात् । तस्य सत्यत्वे दृश्यत्वादेस्तत्र व्यभिचारापत्तेः । न च संबन्धस्य संबन्धिभ्यां भिन्नत्वेऽनवस्थापत्तिरभिन्नत्वे संबन्धत्वहानिः ।

एतद्दोषस्याध्यासिकसंबन्धत्वेऽपि साम्यात् । न च तस्य मायिकत्वेन मायायाश्चाघटनापटीयस्त्वेन सर्वानुपपत्तिस्तत्र भूषणमेव । तर्ह्यविद्याया एवाविद्याद्यधिष्ठानत्वापत्तेः । घटादिभ्यो घटादेर्मृदादेश्चोत्पत्त्यापत्तेः । व्यावहारिकमर्यादायास्त्वद्गुरुणा सौगतेनापि स्वीकार्यत्वाच्च । ममाप्यचिन्त्यातर्क्याघटनघटनापटीयस्येश्वरशक्त्यैव सत्यसंबन्धोपपत्तेः । यादृशविषयत्वं तव वृत्तिं प्रति शुद्धे ब्रह्मणि तादृशविषयत्वमेव वृत्तिं प्रति घटादिष्वस्तु । न च वृत्तौ ब्रह्मानध्यासेऽपि वृत्तेरेव तत्राध्यासः । घटादिषु ज्ञानस्याध्यासापत्तेः ।।

सम्बन्धस्य मिथ्यात्वेऽपि सम्बन्धिनोरमिथ्यात्वमित्युपपादनम्

किञ्च दूरस्थासंयुक्तवृक्षयोः संयुक्ततया गृह्यमाणयोः संयोगस्य मिथ्यात्वेऽपि तयोरमिथ्यात्ववत् प्रकृतेऽपि संबन्धस्य मिथ्यात्वेऽपि संबन्धिनोरमिथ्यात्वोपपत्तेः ।।

निरुक्त्यभावेन सम्बन्धमिथ्यात्वे ब्रह्मानन्दादेरपि मिथ्यात्वापादनम्

किञ्च संबन्धस्य निरूक्त्यसंभवेन मिथ्यात्वाङ्गीकारे ब्रह्मण आनन्दत्वज्ञानत्वसत्यत्वस्वप्रकाशत्वादीनां खण्डनोक्तरीत्या दुर्वचत्वेन ब्रह्म तत्त्वतो नानन्दरूपम् । त्वयैव–

कीदृक् तत्प्रत्यगिति चेत् तादृगीदृगिति द्वयम् ।
यत्र न प्रसरत्येतत् प्रत्यगित्यवधारय ।।

इति ब्रह्मणोऽपि दुर्वचत्वमुक्तमिति तस्यासत्त्वं स्यात् । न चान्दत्वादिधर्मवत्तया दुर्निरूपत्वेऽपि दुःखप्रत्यनीकत्वाद्युपलक्षितस्वरूपसत्वेन सुनिरूपम् । तत्र दुःखादिप्रत्यनीकत्वसत्वादीनां त्वयाऽनङ्गीकारात् । दुर्निरूपत्वाच्च । तस्मादिक्षुक्षीरमाधुर्यादिवद्दुर्वचमपि

विषयत्वं सखण्डमखण्डं वा सत्यमेव ज्ञानज्ञेययोः संबन्धः प्रमाणबलादङ्गीकार्यम् । उक्तं च सुरेश्वरेणापि–

इक्षुक्षीरगुडादीनां माधुर्यस्यान्तरं महत् ।
तथापि न तदाख्यातुं सरस्वत्याऽपि शक्यते ।। इति ।।

चित्रदीपोक्तमिथ्यात्वखण्डनम्

एतेन प्रागभावयुक्तत्वे सति अचिन्त्यरचनात्वं मिथ्यात्वम् । द्वैतस्य प्रागभावयुतत्वात् मिथ्यात्वम् । ब्रह्मणश्च प्रागभावाभावादचिन्त्यरचनात्ववत्वेऽपि न मिथ्यात्वमिति चित्रदीपोक्तं निरस्तम् । अनाद्यविद्यादिकेऽव्याप्तेः ।।

।। इति दृग्दृश्ययोः संबन्धानुपपत्तिभङ्गः ।।

## १८. अथ प्रतिकर्मव्यवस्थाभङ्गः

अवान्तरभेदपुरस्सरं परमतानुसारेण घटादीनां प्रकाशोपपादनम्

यत्तु सर्वगतं जीवचैतन्यमावृतमनावृतं च । आद्यपक्षे वृत्त्यभिव्यक्तचैतन्यं विषयप्रकाशकम् । द्वितीये स्वतोऽसङ्गस्य वृत्त्या विषयसंबन्धः सम्पद्यते । अन्तःकरणावच्छिन्नो जीव इति पक्षे घटप्रकाशकाधिष्ठानचैतन्येन सह जीवस्याभेदं संपाद्य ततोऽधिष्ठानप्रकाशितेऽहं जानामीति प्रतीतेरिति ।

अद्वैतसिद्ध्युक्तसकर्मकवृत्त्यन्याकर्मकसंवित्खण्डनम्

तन्न । अन्तःकरणवृत्तिभिन्नघटादिज्ञाने मानाभावात् । ब्रह्माकारचरमवृत्तिस्थलेऽपि ज्ञानद्वयापत्तेश्च । न च घटं जानामि इत्यनुभूयमानसकर्मकवृत्तितोऽन्याऽकर्मिका संवित् घटप्रकाशरूपा

घटः प्रकाशत इत्याकारेति वाच्यम् । करोति यतते गच्छति चलतीत्यादावेकार्थत्वेऽपि यथा हि सकर्मकत्वाकर्मकत्वे स्वभाववशादेव, तथा अत्राप्येकार्थत्वेऽपि जानातिप्रकाशत्योः सकर्मत्वाकर्मकत्वे स्तः । न चानुकूलो यत्नः कृञोऽर्थः । यतेस्तु यत्नमात्रम् । एवं गमेरुत्तरसंयोगानुकूलः, स्यन्दश्चलेश्च स्यन्दमात्रमित्यर्थभेदनिबन्धनमेव सकर्मकत्वादिकमिति वाच्यम् । लाघवाद्यत्नत्वादेरेव शक्यतावच्छेदकत्वेनानुकूलत्वादेः संसर्गतया भानात् । अविवक्षाविरहविशिष्टत्वे सति कर्मसाकांक्षत्वमेव हि सकर्मत्वम् । अतः सकर्मकस्यापि वहतेः कर्माविवक्षया 'नदी वहति' इत्यत्राकर्मत्वेऽपि न सकर्मकत्वहानिः । 'अतीतः प्रकाशते' 'शास्त्रार्थो धर्मादिः प्रकाशते' 'शुद्धा चित्प्रकाशते' इत्यादौ चिद्रूपज्ञानाभावेऽपि प्रकाशव्यवहाराच्च । न ह्यत्र वृत्तिप्रतिबिम्बितविदस्ति । अतीतादेरपरोक्षैकरसचिद्विषयत्वे आपरोक्ष्यापत्तेः । शुद्धचितस्तद्विषयत्वे मिथ्यात्वापत्तेश्च ॥

### वृत्तेर्बहिर्निर्गमनप्रक्रियाखण्डनम्

किञ्च वृत्तेर्बहिर्निर्गमोऽपि तव व्यर्थः । न च विषयसंश्लेषार्थं सः। नेत्रान्निर्गच्छत् द्रुवाद्याकारवृत्त्यैव स्वसंश्लिष्टनेत्रस्थकज्जलादेः ध्रुवनेत्रमध्यवर्तिनः परमाण्वादेश्च आपरोक्ष्यापातात् । न च कज्जलादिसंश्लेशेऽपि तदाकारत्वाभावान्न तत्प्रकाशः । आवश्यकतदाकारत्वेनैवोपपत्त्या संश्लेषस्याकिञ्चित्करत्वात् । परोक्षस्थले वृत्तिनिर्गमाभावेऽपि प्रकाशादिवदपरोक्षस्थलेऽपि तथोपपत्तेश्च । न च प्रकाशस्य दीपालोकादेर्विषयसंश्लिष्टस्यैव व्यवहारहेतुत्वम् । परोक्षस्थले बहिर्निर्गतस्यैव ज्ञानस्य व्यवहारजननात् । न च तत्राज्ञानं न निवर्तते । न जानामीति प्रतीत्यापत्तेः । स्मृत्याद्यनुपपत्तेश्च ।

अज्ञाने सत्यपि व्यवहारोपपत्तावपरोक्षे तन्निवृत्यभावापत्तेः । विषये प्रमातरि चाज्ञानस्यैकत्वाच्च । आवृतं विषयमजानन् प्रमाताऽज्ञ इत्युच्यते । अत एव परोक्षस्थले विषयावच्छिन्नाभानावरण-तत्कार्यसद्भावेऽपि प्रमात्रवच्छिन्नासत्वावरणनिवृत्त्याऽनुमेयादौ व्यवहारोपपत्तिरिति निरस्तम् । सर्वथा विषयावच्छिन्नप्रमेय-चैतन्याज्ञानानिवृत्तेः निर्विवादत्वात् । ज्ञानाज्ञानयोः समानविषया-श्रयत्वाच्च । अज्ञानस्य त्वन्मते शुद्धचिद्भूतत्वाच्च ।।

ज्ञानं किमिति विकल्प्य खण्डनम्

किञ्च वृत्तिप्रतिबिम्बितचैतन्यं तदभिव्यक्तघटाद्यधिष्ठानचैतन्यं वा ज्ञानं । नाद्यः । अध्यासिकसंबन्धस्यातन्त्रतापातात् । वृत्तिप्रतिबिम्बि-चतोऽनधिष्ठानत्वात् । न द्वितीयः । आवश्यकेन विषयसंलग्नवृत्ति-प्रतिबिम्बितचैतन्येनैव तदज्ञाननिवृत्तिवत् तत्प्रकाशोपपत्तौ विषया-धिष्ठानचैतन्याभिव्यक्तिकल्पनाया निरर्थकत्वात् । घटाद्यधिष्ठानस्य चाक्षुषवृत्तिविषयीकृतस्य मिथ्यात्वेऽधिष्ठानत्वानुपपत्तेः । सत्यत्वे तत्र दृश्यत्वादेर्व्यभिचारापत्तेः ।।

जीवचैतन्यस्य ब्रह्मचैतन्यस्य वा विषयदृक्त्वे दोषकथनम् वृत्तेर्वैय्यर्थ्यापादनं च

किञ्च जीवचैतन्यं ब्रह्मचैतन्यं वा विषयदृक् । नाद्यः । विशिष्टे कल्पितेऽध्यासायोगात् । न द्वितीयः । तस्यासंसारावृतत्वेन जगदान्ध्यापत्तेः । न च मूलाविद्यानिवृत्त्यभावेन सर्वत आवरणाभि-भवाभावेऽपि घटावच्छेदेन तदभिभवेनाध्यासाभावोपपत्तिः । अभिव्यक्तस्य घटाद्यवच्छिन्नस्य घटाद्यनधिष्ठानत्वात् । शुद्धस्फुरणा-ङ्गीकारे वेदान्तवैय्यर्थ्यापत्तेः । न च वेदान्तजन्यज्ञानस्य चाक्षुषादि-घटादिज्ञानादनधिकविषयकत्वेऽप्युपाध्यभानार्थं तदावश्यकम् ।

ज्ञानेन स्वविरोधिनिवृत्तावधिकाभानस्यानपेक्षणात् । न हि दण्डिपुरुषज्ञानं पुरुषाज्ञानं न निवर्तयति । विषयप्रकाशकमधिष्ठानचैतन्यम् । अन्तःकरणावच्छिन्नो जीवः । तयोरभेदाभिव्यक्त्यर्थं वृत्तिरिति न युक्तम् । अन्तःकरणाद्युपाधिभङ्गं विनोपहिताभेदासंभवात्। घटादितादात्म्यतया भासमाने त्वदभिमताधिष्ठानचैतन्ये जीवाभेदाभिव्यक्तिस्वीकारेऽहं घट इति प्रतीत्यापत्तेश्च ।।

### आवरणाभिभवार्था वृत्तिरिति पक्षनिरासः

वृत्तिरावरणभङ्गार्थमित्यप्ययुक्तम् । न चाज्ञानादिसाक्षित्वेन प्रकाशेऽप्यशनायाद्यतीतत्वादिना प्रकाशाभावादावरणमावश्यकम् । अज्ञानादिसाक्षित्वाशनायाद्यतीतत्वादेः प्रकाशाप्रकाशोपपादकस्य धर्मस्य निर्विशेषेऽसत्वात् ।।

### चिदुपरागार्था वृत्तिरिति पक्षखण्डनम्

वृत्तिश्चिदुपरागार्थमित्यप्यशुद्धम् । घटादिषु स्वतःसंबन्धाभाववत् वृत्तावपि स्वतः संबन्धाभावात् ।।

किञ्च अज्ञानोपादेयभूतया वृत्त्या स्वोपादानाज्ञानाभिभवो न युक्तः। न च वृश्चिकादिना गोमयादेरभिभवो दृष्टः । स्वनिमित्तकारणगोमयत्वाद्यवस्थाया अभिभवात् ।।

### परपक्षे सर्वस्य सर्वभानापादनम्

किञ्च शुद्धचितः सर्वव्यावहारिकप्रपञ्चाधिष्ठानभूतायाश्चाक्षुषादिवृत्त्याऽभिव्यक्तिस्वीकारे सर्वं सर्वस्य भायात् । न च घटाद्यवच्छेदेनैव चितोऽभिव्यक्तिरिति न सर्वप्रकाशापत्तिः । घटाद्यवच्छेदेनाभिव्यक्तस्य विशिष्टस्य घटाद्यनधिष्ठानत्वात् । न च चैत्रावरणशक्तेरेवाज्ञानगतायाश्चै-

त्रार्जितया वृत्त्या नाशात् स पश्यति । मैत्रस्तु न पश्यति । तं प्रत्यावरणशक्तेरनाशात् । शक्तयस्तु द्रष्टृविषयाभ्यां भिन्नभिन्ना एवेति वाच्यम् । शक्तीनामज्ञानत्वे नानाऽज्ञानापातात् । तद्भिन्नत्वे ज्ञानेन साक्षान्निवृत्त्यनुपपत्तेः । रूप्यादेरज्ञानोपादानकत्वानुपपत्तेश्च ।।

अद्वैतसिद्ध्युक्तपरिहारखण्डनम्

न चैकाज्ञानपक्षे शुक्तिरूप्यादेः स्वकारणे विलय एव शुक्त्यादिज्ञानेन संपाद्यते नतु नाशः । ज्ञानाज्ञानयोरेव साक्षाद्विरोधादिति वाच्यम् । ज्ञाननिवर्त्यत्वं मिथ्यात्वमित्यत्र दृष्टान्तासिद्धेः । अतो रूप्यादिनिवृत्त्यर्थं शुक्तिज्ञानेनाज्ञाननिवृत्तिरावश्यकीत्येकाज्ञानमते शुक्तिज्ञानादेव मोक्षः स्यात् । न चास्त्वनेकाज्ञानपक्षः । एकया वृत्त्या सर्वाज्ञाननाशे शुक्त्यादेः सदा प्रकाशापत्तेः । एकस्यैवाज्ञानस्य नाशे वृत्तिकालेऽप्य-प्रकाशापत्तेः । एकावरणनिवृत्तावप्यावरणान्तरसत्वात्। न च यथा तवैकं ज्ञानमेकमेव प्रागभावं नाशयति । प्रागभावान्तरनिबन्धनम ज्ञातत्वादिव्यवहारं प्रतिबध्नाति तथा ममाप्येकं ज्ञानमेवाज्ञानं नाशयत्यज्ञानान्तरनिबन्धनं व्यवहारं प्रतिबध्नातीति वाच्यम् । अज्ञानवत् प्रागभावस्यावश्यकत्वाभावेनाज्ञानस्य यवनिकावदावर-कत्वेन दृष्टान्तवैषम्यात् । प्रागभावकाले ज्ञानाभावादेवाप्रकाशोपपत्तेः।।

।। इति प्रतिकर्मव्यवस्थाभङ्गः ।।

## १९. अथ मिथ्यात्वानुमाने प्रतिकूलतर्काः

सामान्यतो ज्ञातत्वे सति अज्ञातविशेषवत्वस्याधिष्ठानत्वप्रयोजकत्वसमर्थनम्

प्रतिकूलतर्कप्रतिहताश्च दृश्यत्वादयः । तथाहि– विश्वं यदि कल्पितं स्यात् तर्हि साधिष्ठानं स्यात् । न चैवम् । सामान्यतो ज्ञातत्वे

सत्यज्ञातविशेषवत्वस्याधिष्ठानत्वप्रयोजकस्य निर्विशेषे निस्सामान्ये ब्रह्मण्यसंभवात् । ननु स्वरूपेण ज्ञातत्वे सति विशेषेणाज्ञातत्वस्याधिष्ठानत्वप्रयोजकत्वेनाज्ञातविशेषवत्वमप्रयोजकम् । पुरुषो न वेति संशयधर्मिणः स्थाणोरप्यन्यत्र ज्ञातस्थाणुत्वरूपविशेषवत्वात्। तत्राज्ञातविशेषवत्वमपि न प्रयोजकम् । विशेषवत्वेनाज्ञातत्वमेव लाघवात् प्रयोजकम् । अतः स्वप्रकाशत्वेन ज्ञानात् पूर्णानन्दत्वादिना चाज्ञानादधिष्ठानत्वमुपपन्नमिति चेन्न । स्वरूपेण ज्ञातस्य निर्विशेषस्य विशेषेणाज्ञातत्वासंभवात् । उक्तं हि–

अधिष्ठानस्य कार्त्स्न्येन ज्ञानेऽज्ञाने च न भ्रमः ।
ज्ञाताज्ञातविभागस्तु निर्विशेषे न युज्यते ।। इति ।

स्वरूपतोऽज्ञातस्य धर्मविषयकमेव ह्यज्ञानम् । स्थाणुत्वादेः व्यक्त्यन्तरे ज्ञातत्वेऽपि भ्रमविशेष्यव्यक्तिनिष्ठत्वेनाज्ञातत्वात् । स्थाणौ पुरुषत्वारोपोपपत्तेः । स्वरूपभिन्नस्वप्रकाशत्वादेस्तव ब्रह्मण्यसत्वाच्च। न च सत्वादिकं कल्पितव्यक्तिभेदेन सामान्यं पूर्णानन्दत्वादिर्विशेषः । अज्ञानकल्पितस्याज्ञानतत्त्वज्ञानयोरविषयत्वात् । बाधकज्ञानेन विषयीकर्तव्यस्याज्ञातधर्मस्यैवाधिष्ठानत्वे तन्त्रत्वाच्च । स्वप्रकाशत्वाद्यारोपं प्रति स्वप्रकाशत्वाद्यन्तरस्य प्रयोजकत्वेऽनवस्थापत्तेश्च । पूर्वपूर्वाज्ञानकल्पितं ब्रह्मोत्तरोत्तराज्ञानाश्रयो विषयश्चेति ब्रह्मणोऽपि कल्पितत्वानित्यत्वाद्यापत्तेश्च ।।

अद्वैतसिद्ध्युक्ताधिष्ठानत्वप्रयोजकत्वनिराकरणम्

किञ्चाधिष्ठानतिरोधानं विना नाध्यासः । निर्विशेषस्य तिरोधाने त्वध्यस्ताविद्यादेः प्रकाशानुपपत्तिः । न च पूर्णानन्दत्वेनाज्ञानं स्वरूपेण ज्ञानम् । अज्ञानाकल्पितपूर्णानन्दत्वादेस्तावासत्वात् । न

च भ्रमविरोधिज्ञानाभाव एवाधिष्ठानत्वे तन्त्रम् । तदभावावगाहिनस्तदभावव्याप्यावगाहिज्ञानस्य तदभावावच्छेदकधर्मदर्शनादेश्च व्यावृत्ताकारस्यैव भ्रमविरोधित्वात् । न हि बाधकधीविषयो भ्रमकालेऽज्ञातो धर्मो ब्रह्मणि तवास्ति । तत्रासद्विशेषज्ञानाभावस्य बाधकालेऽपि सत्वात् ।।

यदि विश्वं कल्पितं स्यात्तदा सप्रधानकं स्यादिति तर्कोपपादनम्

किञ्च विश्वं यदि कल्पितं स्यात् तदा सप्रधानं स्यात् । न चैवं तस्मान्न कल्पितम् । ननु प्रधानं सजातीयमस्त्येव । पूर्वप्रपञ्चसजातीयस्यैवोत्तरप्रपञ्चस्य अध्यासात् । अध्यासो हि स्वकारणतया संस्कारमपेक्षते । न तु संस्कारविषयस्य सत्यत्वमनुपयोगात् । न हि प्रमाणजन्य एव संस्कारोऽध्यासहेतुरिति चेन्न। अनाद्यविद्यादेरध्यस्तत्वासंभवेन तात्त्विकत्वापत्तेः । तदध्यासस्य प्रधानादि विनैवाङ्गीकारे ब्रह्मणोऽपि प्रवाहानाद्यारोपापत्तेः । न च विश्वारोपाधिष्ठानतया ब्रह्मणः सत्यत्वम् । आरोपेऽऽधिष्ठानज्ञानमेव हि हेतुर्न तु तदपि येन तत्सत्वमपेक्ष्येत । न चाधिष्ठानस्य ज्ञानद्वारा भ्रमाहेतुत्वेन सत्यत्वसिद्धिः । भ्रमोपादानाज्ञानविषयो ह्यधिष्ठानं । अज्ञानेन तु स्वाकल्पितं सत्यमेव विषयिक्रियत इति वाच्यम् । अज्ञानविषयतया सिद्धसत्यत्वबोधकसत्यं ज्ञानमित्यादिश्रुतेरनुवादकतापत्तेः । स्वकल्पितस्य स्वेन विषयीकरणासंभवेऽपि पूर्वपूर्वाज्ञानकल्पितस्य ब्रह्मण उत्तरोत्तराज्ञानेन विषयीकरणासंभवात् ।।

जगद्भ्रमकारणसंस्कारस्याधिष्ठानसमसत्ताकत्वापादनम्

किञ्च चैत्रेण मैत्रे संस्काराध्यासे कृते मैत्रभ्रमादर्शनाज्जगद्भ्रमहेतुसंस्कारस्याधिष्ठानसमसत्ताकत्वं दुर्वारम् । न च स्वेनाध्यस्तं

स्वारोपे हेतुः । भ्रमात्पूर्वं स्वस्य कार्यानुमेयसंस्काराध्यासासंभवात् । न च संस्कारोऽज्ञातो व्यावहारिकः स्वेनारोपितः स्वाध्यासहेतुरस्त्येवेति वाच्यम् । अज्ञातस्याध्यस्तत्वे मानाभावेन पारमार्थिकत्वापत्तेः ॥

निर्गुणस्य ब्रह्मणः प्रधानसादृश्याभावेनाध्यासानुपपत्तिप्रदर्शनम्

किञ्च स्मर्यमाणारोपे सादृश्यधीरपि हेतुः । प्रकृते तु निर्गुणस्याधिष्ठानस्य प्रधानसादृश्याभावात् कथमध्यासः । न च कल्पितधर्मेण सादृश्यम् । निर्धर्मके ब्रह्मणि सत्याध्यासाधीनत्वेनान्योन्याश्रयाद्यापत्तेः। अनाद्यविद्यारोपे तदनपेक्षत्वे तत्र ज्ञानाज्ञनद्वाराऽधिष्ठानस्याप्यनपेक्षापत्त्या तस्यासत्वापत्तेः । न च पीतः शङ्खः इति सादृश्यज्ञानं विनापि भ्रमो दृष्टः । द्रव्यादिना तत्रापि सादृश्यधीसत्वात् । न च प्राधमात्रवृत्तितया प्रागवतमध्यासकाल एवाधिष्ठानवृत्तितया गृहीतं यत् तदेव सादृश्यं विपर्यहेतुः । न तु प्रागेव प्रधानाधिष्ठानोभयवृत्तितया गृहीतं, तस्य सांशयिकत्वात् । द्रव्यत्वं तूभयवृत्तितया प्रागेवावगतमिति वाच्यम् । चाकचिक्यादेः शुक्तिरूप्ययोर्वृत्तितया आरोपात् प्रागेवावगमेऽपि शुक्तौ रूप्यत्वाद्यारोपस्य दर्शनात् । आरोप्यविरोधिकोट्यन्तरोपस्थित्यभावेन सांशयिकत्वासंभवात् । न च सादृश्यज्ञानं संस्कारोद्बोधकतया न भ्रमहेतुः । सादृश्याभावेऽप्यदृष्टादिनापि तदुद्बोधः संभवतीति वाच्यम् । फलानुमेयस्यादृष्टस्याज्ञातस्यारोपात् प्राक् सत्वे मानाभावात् । अनाद्यविद्याध्यासस्य दोषानपेक्षत्वेऽप्रामाण्यस्य ज्ञप्तिस्वतस्त्वापत्तेः । इतरानपेक्षयावज्ज्ञानग्राहकग्राह्यत्वे हि स्वतस्त्वम् । प्रकृतेऽनुव्यवसायस्थानापन्नः साक्षी । उक्तं च सुरेश्वरवार्तिके–

तस्य द्रष्टुर्भासिकाया चिदेषा दृष्टिरुच्यते ।
तदेतत्साक्षिचैतन्यमित्याहुर्वेदवादिनः ।।१।।

साक्षी चेता केवलश्चेत्यादिवाक्यमधीयते ।
किश्चानुव्यवसायोऽयमित्याहुस्तार्किका अपि ।।२।।

व्यवसायो बुद्धिवृत्तिर्दृश्यमात्रस्य भासिका ।
द्रष्टृदर्शनदृश्यानि भान्त्यनुव्यवसायतः ।।३।।

जिघ्राणीममहं गन्धमिति यो वेत्ति तत्त्रयम् ।
स आत्मेति त्रयस्यास्य छन्दोगाः साक्षिणं जगुः ।।४।।

तद्ग्राह्यत्वात् दोषानपेक्षत्वाच्च । दोषानपेक्षावदधिष्ठानस्याप्यनपेक्षापत्तेश्च । न च जनकत्वेन तदनपेक्षत्वेऽपि परममहत्त्वादेराश्रयापेक्षावदध्यासमात्रस्य साश्रयत्वदर्शनादाश्रयतया तदपेक्षेति वाच्यम्। अध्यासमात्रस्य दोषजन्यत्वदर्शनादविद्याध्यासस्यानादित्वासंभवात्। अविद्यादिविषयकधियो भ्रमत्वाङ्गीकारे बाधकप्रमासामानाधिकरण्यं स्यात् । न चेष्टापत्तिः । अवृत्तेः स्वरूपचितस्तदसंभवात् । तस्या अबाध्यत्वात् । असामानाधिकरण्याच्च ।।

देहेन्द्रियादि विनाऽध्यासस्यानुपपन्नताकथनम्

देहेन्द्रियादि विना चाध्यासस्यादृष्टत्वेन त्वदीयानाद्यध्यासकल्पनायां मानाभावाच्च । शुक्तिरूप्यादिस्थले सर्वत्र दोषसंप्रयोगसंस्कारादीनामधिष्ठानसत्ताकत्वस्याध्यस्ताधिकसत्ताकत्वस्य च दर्शनात् कथमारोपितं जगत् । बाधकधियो बाधासंभवात् । कथं सर्वमिथ्यात्वं च विश्वबाधकज्ञानेन स्वेनैव कतकरजोन्यायेन स्वस्याबाधः । कतकरजसः कर्दमस्य चाधस्तादवस्थानेन कस्यापि नाशाभावात्

दृष्टान्तासिद्धेः । न च गुहायां न शब्द इति शब्दः स्वमपि निषेधति। गुहायां स्वाभावबोधनेऽपि स्वाधिकरणे गगनादौ स्वनिषेधबाधनस्य व्याहतत्वात् । नाश्यनाशकभावे एतस्यानुदाहरणत्वाच्च ।।

### बन्धस्य मिथ्यात्वे निदिध्यासनतत्साक्षात्कारनिवर्त्यत्वाभावापादनम्

किञ्च बन्धस्य ब्रह्मण्यध्यस्तत्वे तन्निदिध्यासनसाध्यतत्साक्षात्कारनिवर्त्यत्वं श्रवणादिसापेक्षब्रह्मज्ञाननिवर्त्यत्वं च न स्यात् । न हि देवतानिदिध्यासनतत्साक्षात्कारनिवर्त्यं दुरितं तत्राध्यस्तम् । न चाधिष्ठानब्रह्मज्ञानमेव निवर्तकम् । श्रवणादिनियमादृष्टं च न मुक्तौ हेतुः । किन्तु ब्रह्मापरोक्ष एवेति वाच्यम्। अधिष्ठानब्रह्मापरोक्षस्य नियमागृहीतैः स्वेनैव विचारितैर्वेदान्तैरत्रैवर्णिकस्यापि तदशमस्त्वमसीति लौकिकेनेव संभवात् श्रवणादिनियमवैय्यर्थ्यापत्तेः । यथा ह्यवघातनियमो वैतुष्यान्योत्पत्त्यपूर्व एवोपयुज्यते तथा परोक्षान्याविद्यानिवृत्तावेव श्रवणादिनियम उपयुज्यते । अन्यथा श्रवणादिनियमादृष्टसाध्ये साक्षात्कारे श्रवणनिरपेक्षस्योपायान्तरस्याप्रसक्त्या तत्प्रसक्ताधीननियमविध्ययोगात् ।।

### अद्वैतसिद्ध्युक्तनियमविधित्वसमर्थनखण्डनम्

ननु क्रत्वर्थनियमापूर्वस्य परमापूर्वसाधनत्वेऽपि पुरुषार्थहिरण्यधारणादिनियमादृष्टस्य तदभाववत् श्रवणादिनियमापूर्वस्य श्रवणादिसाध्यसाक्षात्कारान्यफलाभावेऽपि तेनैव फलवत्त्वोपपत्तिः । 'सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते'[1] इति स्मृत्या कर्मपदवाच्यापूर्वमात्रस्य ज्ञाने समाप्तिर्दर्शिता । अविद्यानिवृत्तिरूपा मुक्तिर्ज्ञानादेव।

---

१.भग.गी. ४.३३.

ज्ञाने त्वसंभावनादिनिवृत्तावदृष्टांशोपयोगः । सामान्याकारेण च प्रसक्तस्य साधनान्तरस्य निवृत्तिः । सर्वत्र नियमविधेः फलं विशेषरूपेण त्वपूर्वविधित्वमेव । तथा हि 'व्रीहीनवहन्ति' इत्यादावपूर्वसाधनीभूतव्रीहिवैतुष्ये अवघातातिरिक्तसाधनाप्रसक्तावपि व्रीहिवैतुष्यमात्रे प्रसक्तस्य विदलनादेर्निवृत्तिर्विशिष्य कार्यकारण-भावबोधनात् । तथा निर्विशेषब्रह्मात्माभेदसाक्षात्कारप्रतिबन्धनिवृत्तौ श्रवणादिभिः सह साधनान्तराप्रसक्तावप्यात्मज्ञानप्रतिबन्धनिवृत्तौ सांख्यादिशास्त्रस्यापि प्रसक्तिस्तन्निवृत्तिफलको नियमविधिरिति चेन्न।

हिरण्यधारणादेः नियमविधित्वे नियमादृष्टस्य क्रियाफलातिरिक्त-फलस्यावश्यकत्वात् । अन्यथा विधानवैय्यर्थ्यापत्तेः । पुरुषार्थस्य प्राङ्मुखभोजननियमादेः क्रियाफलभिन्नफलस्य घण्टाघोषत्वात् । उक्तं हि चतुर्थे द्रव्यर्जनोद्देशेन प्रतिग्रहादिनियमस्थले प्रतिग्रहादितोऽन्योपायेन द्रव्यार्जने प्रत्यवायजनकत्वम् तत्पुरुषार्थनियममात्रे तुल्यमिति भ्रातृव्यदुर्वर्णता हिरण्यधारणस्यैव फलम्, न नियमादृष्टस्य । सति हि नियमे भ्रातृव्यदुर्वर्णतोत्पादकेन दुरितमुत्पाद्येताऽतो दुरितोत्पात्ति-प्रतिबन्धो नियमफलमिति कल्प्यते ।।

वस्तुतस्तु हिरण्यधारणविधिरपूर्वविधिरेव । सत्यपि हिरण्यधारणादौ दूरस्थभ्रातृव्ये दुर्वर्णताऽनुत्पत्तेः । निकटस्थस्यापि कस्यचित् तदनुत्पत्तेश्च । स्वतः परोक्षस्यापि ब्रह्मणः स्वधर्मानुष्ठानादिना शोधितेन नियमादृष्टसहकृतश्रवणादिवासितेन मनसाऽऽपरोक्ष्यमिति स्वीकुर्वतामस्माकं स्मृत्यर्थोपपत्तावपि तव दशमस्त्वमसीति लौकिकवाक्यादप्यापरोक्ष्यमङ्गीकुर्वतस्तदर्थानुपपत्तेः । ज्ञानेन स्वप्रागभावनिवृत्ताविवाज्ञाननिवृत्तावप्यसंभावनादिनिवृत्यनपेक्षणाच्च। लौकिकापूर्वीयव्रीहिवैतुष्यादिष्वनुगतव्रीहित्ववैतुष्यादिवत् शब्दविशि-

ष्टानुगतधर्मस्याभावाच्च । येन रूपेण श्रवणादिप्राप्तिस्तेनैव रूपेणोपायान्तरप्राप्तावेव हि नियमविधिः ।।

विश्वस्य कल्पितत्वे श्रुतिसूत्रानुपपत्तिकथनम्

किञ्च यदि विश्वं कल्पितं स्यात्तदा 'जन्माद्यस्य यतः'[१] इति सूत्रे 'यतो वा इमानि भूतानि'[२] इत्यादिश्रुतौ च जन्माद्युक्तिः, 'ईक्षतेर्नाशब्दं'[३] इति सूत्रे 'तदैक्षत'[४] इत्यादिश्रुतौ च ईश्वरस्येक्षापूर्वककर्तृत्वोक्तिः, 'लोकवत्तु लीलाकैवल्यं'[५] इति सूत्रे 'आप्तकामस्य का स्पृहा'[६] इत्यादिश्रुतौ च प्रयोजनाभावेऽपि लीलया सृष्ट्युक्तिः, 'वैषम्यनैर्घृण्ये न सापेक्षत्वात्'[७] इति सूत्रे 'पुण्येन पुण्यं लोकं नयति'[८] इत्यादिश्रुतौ च कर्मसापेक्षत्वेनावैषम्योक्तिः, 'तेजोतस्तथा ह्याह'[९] इति सूत्रे 'वायोरग्निः'[१०] इत्यादिश्रुतौ च तेजआदेर्वाव्यादिजन्यत्वोक्तिः, 'विपर्येण तु क्रमोऽत उपपद्यते च'[११] इति सूत्रे 'पृथिव्यप्सु लीयते' इत्यादिश्रुतौ च पृथिव्यादीनामबादौ लयोक्तिरित्याद्ययुक्तं स्यात् । न हि कल्पिते तत्तद्विरोधशङ्का तन्निराकरणं च युक्तम् । तर्कहतत्वस्य मिथ्यात्वोपपादकत्वात् ।।

१. ब्र.सू. १.१.२.
२. तैत्त.उ. ३.१
३. ब्र.सू. १.१.५.
४. छा.उ. ६.२.३.
५. ब्र.सू. २.१.३४
६. मा.उ. १.१५.
७. ब्र.सू. २.१.३६
८. षट्.उ. ३.५.
९. ब्र.सू. २.३.१०
१०. तैत्त.उ. २.३.
११. ब्र.सू. २.३.१४

## अद्वैतसिद्ध्युक्तश्रुतिसूत्रविरोधपरिहारखण्डनम्

न च प्रपञ्चस्य कल्पितत्वेऽपि व्यावहारिकसत्वाङ्गीकारेण विरोधशङ्कापरिहारादिसंभवः । स्वरूपेण त्रैकालिनिषेधप्रतियोगिनो सत्कल्पस्य व्यावहारिकमिति नामकरणेऽपि विरोधस्य तत्परिहारस्य च तत्रासंभवात् । न चैन्द्रजालिकस्येक्षापूर्वककर्तृत्वं दृष्टम् । प्रतारकस्यैन्द्रजालिकस्य तथा कर्तृत्वं हि त्वयैवैन्द्रजलिकेन दृष्टम् । न च मायाविन ईश्वरस्य स्वप्रतिबिम्बभूतजीवभ्रामयितृत्वेन सर्वविरोधनिरासः । सपरिकरस्येशस्य जीवेनाध्यस्तत्वेन भ्रामयितृत्वासंभवात् । न चाविद्योपाधिकस्यानादेरीशस्यान्तःकरणोपाधिकजीवकल्पितत्वमसंभवि । जीवस्याप्यनादित्वात् । न च जीवेन तादृशभ्रामयितृत्वादिधर्मविशिष्टस्येशस्य कल्पनान्नानुपपत्तिः। वेदैकगम्यानन्तगुणानां कस्यापि ज्ञानाभावेन विशेषस्तद्धर्मविशिष्टतयाऽऽरोपानुपपत्तेः । ईश्वरकल्पकजीवस्य प्रपञ्चकल्पनायाः सुतरामसंभवेन जीवकारणतां निषेध्येशकारणत्वबोधकेन समन्वयाध्यायेन विरोधापत्तेश्च । स्वेनान्येन चाकल्पित एव ह्यैन्द्रजालिकः स्वाकल्पितानेव भ्रमयति । 'तान्यहं वेद सर्वाणि न त्वं वेत्थ परन्तप'[१] इत्यादिविरोधापत्तेश्च । आकाशादिभ्यो वा व्याद्युत्पत्तिभ्रान्तेः कुत्रापि नियमेनासंभवेन श्रुतेस्तदालम्बनासंभवात्। माया मोहं विना मायिकस्य दर्शनासंभवात् । मायामोहितस्य भ्रान्तस्येशत्वासंभवात् । न चाध्यस्तमध्यस्तत्वेन जानातीति भ्रान्तः। अध्यस्तत्वेन जानतः पालकत्वाद्यसंभवात् । अतः सत्यस्यैव जगतः कर्ता सत्यस्याविद्यादिबन्धस्य निवर्तको हरिरिति सिद्धम् ।।

।। इति मिथ्यात्वानुमाने प्रतिकूलतर्काः ।।

---

१. भग.गी. ४.५.

## २०. अथ ज्ञाननिवृत्यन्यथानुपपत्तिभङ्गः

### ज्ञानहेतुकप्रसादादेव मोक्ष इत्युपपादनम्

ननु–

भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे[१] ।।

इति ज्ञाननिवर्त्यत्वान्यथानुपपत्तिर्मिथ्यात्वे मानमिति चेन्न ।

एवं ज्ञातो हि भगवाननादिः पुरुषोत्तमः ।
प्रसीदत्यच्युतः तस्मिन् प्रसन्ने क्लेशसंक्षयः ।।

इत्याद्यनुसाराद्भगवदपरोक्षहेतुकतत्प्रसादादेव मोक्षोक्तेः । न च शुक्तिज्ञाननिवर्त्यरूप्यस्येवाधिष्ठानज्ञानत्वेन ब्रह्मज्ञाननिवर्त्यस्य बन्धस्य मिथ्यात्वोपपत्तिः । जगन्मिथ्यात्वसिद्धेः प्राक् भ्रमविषयत्वरूपाधिष्ठानत्वस्यैवासिद्धेः । भ्रमागृहीततत्त्वस्य ज्ञानं सप्रकारकं हि भ्रमादिनिवर्तकं दृष्टम् । व्यावृत्ताकारज्ञानत्वेनैव भ्रमनिवर्तकत्वात् । तच्च तावासंभवि ।।

### व्यावृत्ताकारत्वेन ज्ञानस्य भ्रमनिवर्तकत्वसमर्थनम्

न च व्यावृत्ताकारत्वेनैव ज्ञानस्य भ्रमनिवर्तकता नतु तत्र विशेषप्रकारकत्वनियमः । तथा हि– व्यावृत्ताकारता हि द्वेधा भवति। विशेषणादुपलक्षणाच्च । तत्राद्ये सप्रकारकत्वनियमः । द्वितीये धर्मान्तरस्य यदुपलक्षणं तस्माद्व्यावृत्ताकारत्वे सप्रकारतैव । यदि तु स्वरूपोपलक्षणाद्व्यावृत्ताकारता तदा निष्प्रकारकतैव । उपलक्षणस्य

---

१. आथ.उ. ४.११.

तत्राप्रवेशात् । स्वस्य स्वस्मिन्नप्रकारत्वादिति वाच्यम् । प्रकारत्वेनाभातस्य व्यावर्तकताया नाममात्रत्वात् । स्वरूपमात्रस्य भ्रमेऽपि भानादुपक्ष्यत्वानुपपत्तेश्च ।।

द्वितीयाभावोपलक्षितब्रह्मज्ञानं वेदान्तैर्जायत इति मतखण्डनम्

यत्तु यथाऽऽकाशपदात् शब्दाश्रयत्वोपलक्षितधर्ममात्रविषयकं निर्विकल्पं ज्ञानं जायते तद्वदत्रापि द्वितीयाभावाद्युपलक्षितब्रह्मज्ञानं द्वैतनिवर्तकमपरोक्षं वेदान्तैर्जायत इति । तन्न । धर्मिमात्रज्ञानस्य भावाभावादिज्ञानाविरोधित्वात् । आकांक्षादेः संसर्गघटितत्वस्योक्तत्वादाकाशादिपदान्निर्विकल्पकज्ञानासंभवाच्च । बाधकधियोभ्रमतद्धेत्वज्ञानदोषाध्यस्तद्रष्ट्रादीनामबाधकत्वं हि दृष्टमिति कथं ब्रह्मज्ञानमविद्यादिबाधकम् ।।

स्वप्नदृष्टान्तेन जगतः ज्ञाननिवर्त्यत्वसाधकमतखण्डनम्

ननु स्वप्ने द्रष्टारं दुष्टकरणवन्तं कल्पयित्वा तस्य भ्रमं कल्पयति। तस्य जागरज्ञानेन सर्वेषां निवृत्तिः । जागरेऽपि मनुष्यप्रतिकृतौ चैतन्यं कल्पयित्वा तत्समीपवर्तिन्यनादर्श एवादर्शत्वं कल्पयित्वा 'स्वप्रतिबिम्बमयं पश्यति' इति कल्पयति । तदा 'नायं चेतनो न चायमादर्शः' इति प्रमया सर्वनिवृत्तिर्दृष्टेति चेन्न । स्वप्ने कल्पितानां दोषद्रष्ट्रादीनां भ्रमाहेतुत्वात् । भ्रमहेतूनां निद्रादिदोषसंस्कारादीनां जाग्रज्ज्ञानेनाबाधाच्च । मनुष्यप्रतिकृत्यादौ चैतन्यारोपहेतूनां कल्पकनिष्ठानां बाधकज्ञानेनाबाधात् । तेन बाधिताकल्पितादर्शनादीनां प्रतिबिम्बादिभ्रमाहेतुत्वाच्च ।।

ज्ञानेन सत्यस्यैव निवृत्तिरित्युपपादनम्

किञ्च सेतुदर्शनादिना ब्रह्महत्याया इव ब्रह्मज्ञानेन सत्यस्यैव बन्धस्य निवृत्त्युपपत्तेः । ननु सेतुदर्शनमात्रं न दुरितनिवर्तकम् । तत्रत्यम्लेच्छानामपि दुरितनाशप्रसङ्गात् । किन्तु दूरगमनछत्रपादुकादिवर्जनादिनियमविशिष्टमिति चेन्न । ब्रह्मज्ञानस्याज्ञानाद्यधिष्ठानत्वेन सदा सत्वात् । स्वलिखितविचारितवेदान्तैरन्त्यजादेरपि ज्ञानसंभवाच्च । श्रवणादिनियमादृष्टविशिष्टस्यैव ब्रह्मज्ञानस्याज्ञानादिनिवर्तकताया वाच्यत्वात् । सुहृद्दर्शनेन सत्यस्य दुःखस्य निवृत्तेरानुभाविकत्वाच्च। न च 'सेतुं दृष्ट्वा समुद्रस्य ब्रह्मत्या व्यपोहति' इति सेतोश्चाक्षुषज्ञानमेव पापनिवर्तकम् । 'दृष्ट्वैव तं मुच्यते' इति श्रुतेर्दृशेरपोक्षज्ञानमात्रपरत्वात् सत्यस्यैव बन्धस्येशज्ञानान्निवृत्तिः ।।

।। इति ज्ञाननिवृत्यन्यथानुपपत्तिभङ्गः ।।

## २१. अथ एकमेवेति श्रुत्यर्थः

'सलिल एको द्रष्टा' इति वाक्यस्य समभ्यधिकरहितब्रह्मबोधकत्वकथनम्

'सलिल एको द्रष्टाऽद्वैतो भवति । एष ब्रह्मलोकः संम्राडिति हैनमनुशशास याज्ञवल्क्यः । एषाऽस्य परमा गतिरेषाऽस्य परमा संपदेषाऽस्य परमो लोक एषोऽस्य परम आनन्दः । एतस्यैवानन्द स्यान्यानि भूतानि मात्रामुपजीवन्ति[१] ।' इत्याद्यनेकसलिलादिबोधकपदसंवलितमद्वैतपदं समाभ्यधिकशून्यब्रह्मपरम् । न च सलिलपदं न सप्तम्यन्तं किन्तु प्रथमान्तं सलिलवत् स्वच्छं ब्रह्मेत्यर्थकम् । प्रथमान्तत्वे नपुंसकत्वापत्तेः । छान्दसत्वकल्पने मानाभावात् ।।

---

१.बृ.उ. ६.३.३२.

### 'एकमेवाद्वितीयं' इत्यत्र एकपदार्थकथनम्

ननु 'एकमेवाद्वितीयं'[१] इत्यादिवाक्यं सजातीयविजातीयस्वगतभेदनिषेधपरम् । चैतन्यभेदः सजातीयभेदः । जडभेदो विजातीयभेदः। धर्मभेदः स्वगतभेद इति चेन्न । विशेषणसंगतैवकारेण 'शङ्खः पाण्डुर एव' इतिवदेकपदार्थस्य मुख्यत्वादेर्ब्रह्मण्ययोगव्यवच्छेदबोधनात् । न हि 'पार्थ एव धनुर्धरः' इतिवदत्र विशेष्यसङ्गत एवकारो येनान्ययोगव्यवच्छेदो बोध्येत ।।

### अद्वितीयशब्दस्य मिथ्यार्थकत्वाभावोपपादनम्

अद्वितीयपदेनासहायत्वबोधनात् । 'असि द्वितीयोऽनुससार पाण्डवं'[२] इति महाभाष्योक्तेश्च । द्वितीयशब्दः सहायवाची तथा चाद्वितीयमसहायमित्यर्थः । 'अनेकमन्यपदार्थे'[३] इति सूत्रे महाभाष्ये 'असि द्वितीयोऽनुससार स पाण्डवः' । 'सङ्कर्षणात् द्वितीयस्य बलं कृष्णस्य वर्धताम्' इत्यादौ 'अर्द्धतृतीया' इत्यादिवत् द्विवचनं प्राप्नोतीति चोदयित्वा 'नैष दोषः अयं तीयान्तः शब्दः पूरणे वर्तते। अस्ति च सहायवाची तद्यः सहायवाची तस्येदं ग्रहणण् । असि द्वितीयोऽसि सहाय इति गम्यते' इत्यादिना ग्रन्थेन द्वितीयशब्दस्य सहायार्थत्वं स्पष्टं ज्ञायते । 'प्रयतपरिग्रहद्वितीय' इति महाकविप्रयोगश्च। कुशासनादेर्द्वितीयस्य सत्वेऽपि परिग्रहस्य द्वितीयत्वोक्त्या तस्य सहायार्थता गम्यते ।।

---

१. छा.उ. ६.४.१.

२. २.२.२४ इत्यत्र महाभाष्ये उदाहृतवचनम् ।

३. पा.सू. २.२.२४.

यद्वा 'अस्य गोर्द्वितीयोऽन्वेष्टव्य इत्युक्ते गौरेव द्वितीयोऽन्विष्यते नाश्वो न गर्दभः'[१] इति महाभाष्यानुसारात् समानजातीयपरं द्वितीयपदम् । तथा च समानद्वितीयशून्यं ब्रह्मेत्यर्थः ।।

एकशब्दार्थकथनपूर्वं श्रुत्यर्थोपपादनम्

एवमेकशब्दस्यापि नानार्थकत्वेनाविरुद्धार्थमादायोपपत्तौ न मिथ्यात्वपरत्वम् । 'एके मुख्यान्यकेवलाः' इत्यमरोक्तेः । 'एकशब्दायं अन्यप्रधानासहायसंख्याप्रथमसमानवाची' इति 'एको गोत्रे'[२] इति सूत्रे कैय्यटोक्तेश्च । 'ष्णान्ता षट्'[३] इति सूत्रे 'एकशब्दोऽयं बह्वर्थः। अस्ति संख्यार्थो सहायवाची अस्त्यन्यार्थे'. इति महाभाष्योक्तेश्च । 'एको बहूनां यो विदधाति कामान्'[४] इत्यादौ संख्यायां प्रयोगाच्च। तथा च समाधिकशून्ये असहाये च ब्रह्मणि एवकारेणान्यत्व-प्राधान्यादेरेकशब्दार्थस्यायोगो व्यवच्छिद्यत इति श्रुत्यर्थः ।।

'सदेव सोम्य' इति श्रुत्यर्थकथनम्

'सदेव सोम्येदमग्र आसीत्'[५] इत्यस्येदं सद्ब्रह्माग्रे सृष्टेः प्राक् केवलमासीदेव न किञ्चिदकार्षीदित्यर्थः । यद्वा इदमेव ब्रह्मैव सदासीत् स्वरूपतः स्वभावतोऽविकृततयाऽऽसीत् । मुक्तानां रमादीनां बाह्यविहारं विहायानन्तब्रह्माण्डसमावेशार्हे भगवदुदरे विहारात् । बद्धजीवजडयोर्लीनत्वात् । 'सर्गेऽपि नोपजायन्ते प्रलये

---

१. महाभाष्यम्- १.३.१९, २.३.८, २.३.४

२. पा.सू. ४.१.९३

३. पा.सू. १.१.२४

४. काठ.उ. २.२.१३.

५. छा.उ. ६.४.१.

न व्यथन्ति च'[1] इत्यादिस्मृतेः । 'तम आसीत्तमसा गूळ्हमग्रेऽप्रकेतं'[2] इत्यादिश्रुतेश्च । 'आत्मा वा इदमेकमेवाग्र आसीन्नान्यत् किञ्चित् मिषत्'[3] इति श्रुत्यन्तरेऽन्यस्य मिषत्वेन स्फुटत्वेनैव हि निषेधः ।।

### परोक्तार्थे पदान्तरवैय्यर्थ्यादिदोषकथनम्

परेषां त्वद्वितीयपदेनैव द्वितीयमात्रनिषेधसिद्ध्या पदान्तर-वैय्यर्थ्येनास्ति नासीन्न भविष्यदिति ब्रह्मान्यस्य कालत्रये निषेधं वदतामग्रपदवैय्यर्थ्यं च । सदेवेति विशेषणसंङ्गतैवकारेणायोग-व्यवच्छेदबोधकेन अन्ययोगव्यवच्छेदाबोधनात् ।।

किञ्च श्रुत्या स्वविहितद्वितीयाभावस्य निषेधे स्वव्याघातः । अनिषेधे तेनैवाद्वैतहानिः । न चाभावो द्वितीयो नाद्वैतविरोधी । अभावत्वाधेयत्वाधारत्वादिभावैरविनाभूतेनाभावेना तिशयेनाद्वैत-विघटनात् । भावपरत्वेन द्वितीयपदस्य संकोचे सकलमानाविरोधाय स्वतन्त्रद्वैतपरतयैव सङ्कोचौचित्यात् । अभावप्रवृत्तिनिमित्तसंभवेन वेदान्तानां सखण्डार्थकतापत्तेश्च ।।

### अद्वैतसिद्ध्युक्तसखण्डार्थकपरिहारक्रमखण्डनम्

यत्त्ववान्तरतात्पर्येण द्वितीयाभावसिद्धिर्महातात्पर्येण चाखण्ड-सिद्धिरिति । तन्न । द्वितीयाभावस्य सत्यत्वेऽद्वैतहानेः, मृषात्वे द्वैतसत्यत्वोपपत्तेः । द्वितीयाभावविशिष्टतया ज्ञाते ब्रह्मणि

१. भ.गी. १४.२
२. ऋ.सं. १०.१२९..३.
३. ऐ.उ. २.४.१

विशेष्यमात्रे सन्देहाद्यभावेन तत्र तात्पर्यादिकल्पनस्याप्रामाणिकत्वात्। अन्यथा शब्दमात्रस्य तात्पर्यद्वयं स्वीकृत्याखण्डार्थकतापत्तेः ।।

।। इत्येकमेवेति श्रुत्यर्थः ।।

## २२. अथ नेह नानेति श्रुत्यर्थः

'नेह नानास्ति किश्चन । मृत्योः स मृत्युमाप्रनोति य इह नानेव पश्यति'[१] ।। इति श्रुतिरपि न जगन्मिथ्यात्वपरा । तस्यां भवप्रधाननिर्देशेन ब्रह्मगतभेदनिषेधपरत्वात् । 'यदेवेह तदमुत्र यदमुत्र तदन्विह'[२] इति पूर्ववाक्ये ब्रह्माभेदस्यैवोक्तेश्च ।

परोक्तार्थेऽनुपपत्तिप्रदर्शनम्

न च ब्रह्मगतभेदाप्रसक्तिः । जगज्जन्मादिहेतौ ब्रह्मणि विचित्रकार्यभेदेनान्तर्यामिणि च नियम्यानन्त्येन स्थानभेदेन च तत्प्रसक्तेः संभवात् । इहेति विशेषणान्न नानात्वमात्रनिषेधः । 'इमौ स्निग्धौ' 'अस्मिन् ग्रामे न विरोधः' इत्यादाविव इदंशब्दोपात्तस्य ब्रह्मण एव धर्मित्वेन प्रतियोगित्वेन च संबन्धसम्भवे तदनुपात्तस्य धर्मित्वेन प्रतियोगित्वेन वा संबन्धायोगात् । विधेयोद्देश्ययोर्नानात्व-निषेधतदाधारब्रह्मणोर्निषेध्यनिषेधयोः नानात्वतदभावयोश्च भेदा-वश्यकत्वाच्च । काठके 'तं देवाः सर्वे अर्पिताः तदु नात्येति कश्चन'[३] इति पूर्वत्र 'मध्य आत्मनि तिष्ठति । यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति । एवं मुनेर्विजानत आत्मा भवति'[४] इत्युत्तरत्र च

१. बृ.उ. ६.४.१९, काठ.उ. २.१.११.
२. काठ.उ. २.१.१०.
३. काठ.उ. २.१.९.
४. काठ.उ. २.१.१२

भेदप्रमितेश्च । एतद्वाक्यस्य मिथ्यात्वपरत्वे बृहदारण्यके 'यस्मिन् पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः'[१] इति पूर्वेण 'य एषोऽन्तर्हृदय आकाशस्तस्मिन् शेते सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः एष सर्वेश्वरः एष भूताधिपतिरेष भूतपाल एष सेतुर्विधारण एषां लोकानामसंभेदाय'[२] इत्युत्तरेण, काठके च 'ईशानं भूतभव्यस्य'[३] इति पूर्वेण 'ईशानो भूतभव्यस्य'[४] इत्युत्तरेण च वाक्येन विरोधः स्यात् ।।

श्रुतिस्थनानाशब्दस्य पार्थक्यार्थकत्वनिराकरणम्

यत्तु 'नाना विष्णुं मोक्षदो नान्यदेवः' इत्यादिप्रयोगेषु पार्थक्यार्थस्य नानाशब्दस्य निपातत्वेन स्वार्थिकनाञ्प्रत्ययान्तनञ्स्वरूपत्वेन च तत्र किञ्चनेति नामार्थस्याभेदो व्युत्पन्नः । न हि विष्णुं किञ्चन देव इति प्रयुंजत इति ।

तत्तुच्छम् । एतादृशप्रयोगे विनापर्यायनानाशब्दस्य पार्थक्यार्थ-कत्वाभावात् । न च विनाशब्दोऽपि पार्थक्यार्थः । धूमवति महानसादौ वह्निं विना न धूम इति व्यवहाराभावात् । किन्तु अभाववानेव बोध्यते । 'विना साध्याभाववति योऽभावो वृत्तिस्तद्विरहः' इति दीधितिकृता 'अविनाभावो व्याप्तिः' इति मणिवाक्यस्य व्याख्यातत्वात् । तथा च मोक्षोपधायकत्वसंबन्धेन विष्ण्वभाववति तादात्म्येन संबन्धेन मोक्षदस्य संसर्गेण मोक्षदत्वस्य नञा निषेधात् । नानाशब्दस्य विनाशब्दसमानार्थकत्वे चेह प्रपञ्चे

१. बृ.उ. ६.४.१७.
२. बृ.उ. ६.४.२२.
३. काठ.उ. २.१.५.
४. काठ.उ. २.१.१३

किंचन किमपि नियम्यत्वसंबन्धेन ब्रह्माभाववति तादात्म्यसंबन्धेन संबन्धि नास्तीत्यर्थात् ।।

'यथोदकं' इति वाक्यस्य ब्रह्मैक्यपरत्वानुपपत्तिकथनं श्रुत्यर्थकथनं च

यत्तु 'यथोदकं दुर्गे वृष्टं पर्वतेषु विधावति । एवं धर्मान् पृथक् पश्यन् तानेवानुविधावति ।। यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति । एवं मुनेर्विजानत आत्मा भवति'[१] इति वाक्ये ब्रह्मधर्मस्य दृश्यमात्रस्य दृष्ट्या तन्मात्रावाप्तिरित्यनेन दृश्यमात्रं निन्दित्वा जलक्षिप्तजलदृष्टान्तेन ब्रह्मैक्यज्ञानेनात्मनो ब्रह्मैक्यावाप्त्युक्तेरिति ।।

तत्तुच्छम् । धर्मपदस्य दृश्यमात्रपरत्वे त्वंदुराशातिरिक्तबीजाभावात्। यावद्रव्यभाविनो ज्ञानानन्दादीन् ब्रह्मधर्मान् पृथगयावद्द्रव्यभावित्वेनानित्यत्वेन पश्यंस्तानेव विधावति अनित्यमेव फलं प्राप्नोति। नित्यज्ञानानन्दानन्तगुणविशिष्टतया ब्रह्मविजानतो मुनेरात्मा कीटभृङ्गन्यायेनाविर्भूतज्ञानानन्दगुणवत्त्वेन ब्रह्मसदृशो भवतीत्यर्थात्। जले क्षिप्तजलस्यैक्याभावात् । तिलराशौ क्षिप्तदेवदत्तीयतिलानां विवच्यानुपलब्धावपि यथा नैक्यं तथा जले क्षिप्तजलस्यैक्याभावात्। अन्यथा वृद्ध्याद्यनुपपत्तेः ।।

न चेह ब्रह्मणि नाना भिन्नं किञ्चन नास्तीत्यर्थः । स्वाधिकरणनिष्ठतया अवृत्तितया चोपपत्त्या जगतो ब्रह्मण्यभावेऽपि मिथ्यात्वासिद्धेः । भिन्नाभावस्य ब्रह्मभिन्नत्वे भिन्नमात्रनिषेधस्य व्याहतत्वाच्च । ब्रह्माभिन्नत्वे तस्य नित्यसिद्धत्वेन तज्ज्ञानस्य द्वैताविरोधित्वेन चोपदेशवैयर्थ्यापत्तेः ।।

---

१. काठ.उ. २.१.१५.

'यदेवेह तदमुत्र' इति श्रुत्यर्थकथनम्

यत्तु इह जीवोपाधौ यदेव अमुत्रेश्वरोपाधावपि तदेवेति । तत्तुच्छम् । 'द्वा सुपर्णा सयुजा सखायौ एकं वृक्षं परिषस्वजाते[१] ।' 'य आत्मनि तिष्ठन्'[२] 'अहमात्मा गुडाकेश सर्वभूताशस्थितः'[३], 'ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति'[४] इति श्रुतिस्मृतिभ्यां जीवेशयोरेकत्र स्थितिप्रतिपादनेन तदुपाध्योरिहामुत्रशब्दावाच्यत्वात्। यदेवेहास्मिंल्लोके ब्रह्म तदेवामुत्र श्रीवैकुण्ठे, लोकभेदेन भेदाभावादित्यर्थः ।।

यत्तु इह ब्रह्मणि नाना विना किमपि नास्ति किन्त्वविनाभूतमस्तीत्युक्तं 'पृथग्विनान्तरेणर्ते हिरुक्नाना च वर्जने'[५] इत्यमरोक्त्या वर्जनं हि विनाशब्दार्थः । तच्च नञर्थस्यात्यन्ताभावस्य भेदस्य वाऽधिकरणसंबन्धो वह्निं विना धूम इत्यादौ वह्न्यत्यन्ताभाववत्संबन्धः, नीलं विना तेज इत्यादौ नीलभिन्नतादाम्यं तेजसि प्रतीयते । नानाशब्दस्य तु भिन्नसंबन्ध एवार्थस्तत्रापि भेदांशमात्रं शक्यम् । अधिकरणसंबन्धस्तु संसर्गतया भासते । अन्यथा नञ्पदस्य तत्र शक्त्यभावेन नानाञ्प्रत्यययोश्च स्वार्थिकत्वेन नानापदार्थविधया तल्लाभावासंभवात्। 'नाना विष्णुं मोक्षदो न' इत्यादावपि मोक्षदो नेत्यादावपि मोक्षदो विष्णुभिन्नो नेत्यर्थ इति ।

---

१. आथ.उ. ५.१.
२. ब्र.सू.भा. १.२.२० इत्यत्रोदाहृता श्रुतिः ।
३. भग.गी. १०.२०
४. भ.गी. १८.१६.
५. अमरकोश

तत्तुच्छम् । 'विनञ्भ्यां नानाञौ न सह'[१] इति सूत्रेण नसहेत्यर्थकाभ्यां विनञ्भ्यां नानाञोर्विधानात् । 'प्रकृतिभूतनञर्थेन नसहेति प्रत्ययार्थो विशेषणीयः । तथा च द्वौ प्रतिषेधौ प्रकृतमर्थं गमयतः । न नसह सहैवेति । तथा च नानाशब्दः सहेत्यर्थः स्यात्' इति चोदयित्वा 'लोकप्रसिद्धानामिह साधुत्वाख्यानात् । लोके च नानाशब्दस्य पृथग्भावाभिधायित्वात् नसहेति न प्रत्ययार्थविशेषणमेतत्' इत्यादिना भाष्यग्रन्थेन विनञ्शब्दयोर्नसहेत्येकार्थकत्वेन नाप्रत्ययस्य नाञ्प्रत्ययस्य चानिर्धिष्टार्थकत्वेन स्वार्थिकत्वादिना विनाना-शब्दयोरेकार्थकत्वोक्तेः ।।

वर्जनार्थकत्वेऽपि ब्रह्म नाना नियम्यत्वसंबन्धेन ब्रह्मवर्जितं ब्रह्माभाववत्किञ्चिदपीह जगति नास्तीत्यर्थे क्षत्यभावात् । नाना शब्दस्योक्तसंबन्धेन ब्रह्माभाववत्संबन्धार्थकत्वेन विनाशब्दसमानार्थक-त्वोपपत्तौ नानाशब्दस्य भिन्नसंबन्ध एवार्थ इत्यर्थभेदकल्पनस्य निर्मूलत्वात् । 'न तदस्ति विना यत्स्यात् मया भूतं चराचरम्'[२] इति स्मृत्या श्रुतेर्व्याख्यातत्वाच्च ।।

केचित्तु जगति किञ्चिदपि नाना भिन्नं न क्षणिकवादप्राप्तो भेदो निषिध्यत इत्यर्थ इत्याहुः ।।

अन्ये तु स्वीयशरीरभूतजडाजडविशेषेण विशिष्टं ब्रह्म द्वितीय-रहितमिति एकमेवाद्वितीयं ब्रह्म नेह नानेत्यादिश्रुतेरर्थ इत्याहुः ।।

।। इति नेहनानेति श्रुत्यर्थः ।।

---

१.पा.सू. ५.२.२७

२.भग.गी. १०.३९.

## २३. अथ यत्रत्वस्येति श्रुत्यर्थः

### 'यत्र त्वस्य' इति वाक्यस्य पूर्वोत्तरवाक्याभ्यां भेदपरत्वसमर्थनम्

नापि 'यत्र त्वस्य सर्वमात्मैवाभूत् तत्केन कं पश्येत्'[१] इति श्रुतिर्मृषात्वे मानम् । अत्र हि 'स यथा सैन्धवखिल्य उदके प्रास्त उदकमेवानुविलीयते । न हास्योद्ग्रहणायैव स्यात् । यतो यतस्त्वाददीत लवणमेवैवं वा अर इदं महाभूतमनन्तपारं विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविशन् पश्यति न प्रेत्य संज्ञाऽस्ति'[२] इत्यादिना सैन्धवखिल्यस्य समुद्र इव विज्ञानघनस्य जीवस्य ब्रह्मणि स्थितिर्मोक्ष इति स्वमतमुक्तम् । न च सैन्धवखिल्यखण्डिकायां समुद्रपदं नास्ति । तत्कथं समुद्र इति व्याख्येति वाच्यम् । सैन्धवखिल्यखण्डिकाव्यवहितपूर्वखण्डिकायां 'स यथा सर्वासामपां समुद्र एकायनं'[३] इत्युक्तस्यानुषङ्गेणान्वयात् । न जलराशिरत्र समुद्रः। खातो वरुणो वा । पूर्वत्र 'स यथा सर्वासामपां समुद्र एकायनं' इत्युक्तेः । न ह्याप एवापामयनम् । न चेश्वरस्थानीयाभ्यां खातवरुणाभ्यां सैन्धवखिल्यस्याभेदः । उक्तं च[४] 'समुद्रजलस्थानीया मुक्ता बहव एकस्वभावाः वरुणवदपां खातवद्वा अनन्तपारो परो भगवान्' इति । एवं श्रुतिः स्वमतमुक्त्वा 'अविनाशी वा अरे अयमात्माऽनुच्छित्तिधर्मा'[५] इति वाक्ये 'अविनाशी' इत्यनेनात्मनाशो मोक्ष इति बौद्धमतं 'अनुच्छित्तिधर्मा' इत्यनेन विशेषगुणोच्छेदो

---

१. बृ.उ. ४.४.१४

२. बृ.उ. ४.४.१२.

३. बृ.उ. ४.४.११.

४. बृ.भाष्ये

५. बृ.उ. ६.५.१३

मोक्ष इति वैशेषिकमतं च निरस्याद्वितीयचिन्मात्रावशेषो मोक्ष इति बौद्धैकदेशिमते अनिष्टं प्रसञ्जयितुं 'यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति'[१] इत्यादिना प्रसङ्गाङ्गं व्यतिरेकव्याप्तिमुक्त्वा 'यत्र त्वस्य' इत्यादिना यत्र येषां मते त्वात्ममात्रावशेषः तत् तर्हि केन कं पश्येत् न केनापि किञ्चित् । तथा चेष्टस्य रूपादेरीश्वरस्य अज्ञानादन्धादेरिवातिदुःखं मोक्षे स्यादित्यनिष्टप्रसङ्गो अत्राभिप्रेतः । अन्यथा वाक्यशेषैः 'सर्वं तं परादाद् योऽन्यत्रात्मनः सर्वं वेद'[२] इति सर्वाधारत्वोक्तिः, 'स यथा दुन्दुभेर्हन्यमानस्य न बाह्यान् शब्दान्'[३] इति, 'स यथाऽऽर्द्रैन्धनाग्नेरभ्याहतान् पृथग्धूमा'[४] इति च भिन्नानां समसत्ताकानां च दुन्दुभितच्छब्दाग्निधूमादीनां दृष्टान्तानामुक्तिश्च अयुक्ता स्यात् । न हि दुन्दुभ्यादौ तच्छब्दादिरध्यस्तः ॥

'यत्र त्वस्य' इति वाक्यस्याभेदपरत्वे दोषकथनम्

यत्तु यत्र तत्त्वदर्शनकाले सर्वाभेदोपलक्षित आत्मैवाभूत् आत्मान्यन्नाभूदित्यर्थः । यद्वा बाधायां सामानाधिरण्यमिति । तत्तुच्छम् । कालस्यैव भिन्नत्वेन प्रतीतेः । सर्वाभेदस्य बाधितत्वात् । अन्याभावस्य यत्पूर्वं सर्वं प्रतीतं तन्नास्ति किन्तु आत्मैवेति बाधायां सामानाधिकरण्यस्य चाशाब्दत्वात् । 'यथा नद्यः स्यन्दमानाः समुद्रेऽस्तं यन्ति नामरूपे विहाय । तथा विद्वान् नामरूराद्विमुक्तः परात् परं पुरुषमुपैति'[५] इति श्रुत्या तु प्राकृतनामरूपादिविमुक्त-

१. बृ.उ. ४.४.१४, ६.५.१४
२. बृ.उ. ४.४.६, ६.५.६
३. बृ.उ. ६.५.८.
४. बृ.उ. ६.५.११
५. आथ.उ. ६.८.

जीवस्येश्वरप्राप्तेरेवोक्तेः । तिलराशौ क्षिप्ततिलानामिव नदीजलानां समुद्रजलेनाभेदासंभवात् ।

न च भवतां द्वैतमिवेत्यत्रेवशब्दो व्यर्थः । तस्याल्पार्थकत्वात् । 'इवोपमायामल्पत्वे च' इति कोशात् ॥

'योऽन्यत्रात्मनः' इत्यत्रत्यान्यत्रेत्यस्य द्वितीयान्तत्वे दोषकथनम्

यत्तु 'नान्यः प्रतिबलो बली तवार्जुन भविष्यति । अन्यत्र भीष्मात्' इत्यादावन्यत्र इत्यव्ययं प्रथमान्तं दृष्टमिति 'योऽन्यत्रात्मनः सर्वं वेद' इत्यत्रापि द्वितीयान्तं स्यान्न सप्तम्यन्तमिति ।

तत्तुच्छम् । अन्यस्मिन् इत्यन्यत्रेति पदनिष्पत्तेः । भवदादियोगे ह्यन्यत्रापि भवति ततो भवानित्यादौ । न च भीष्मशब्दो भवदादिः। अन्यत्रेत्यस्य प्रथमान्तत्वेऽन्य इत्यनेनान्वितेन पञ्चम्यन्तेन भीष्मादित्यनेनान्वयानुपपत्तेः । भीष्मादन्यस्तव प्रतिबलो नास्ति अतो भीष्मादन्यत्र त्वया प्रयासो न कार्य इत्यर्थः ॥

दुन्दुभिदृष्टान्तस्थले यत्तुकारोक्तार्थखण्डनम्

यत्तु यथा दुन्दुभेरग्रहणे सति तदीयसामान्यशब्दविशेषशब्दाग्रहणं तथा सद्रूपब्रह्माग्रहणे द्वैताग्रहणमिति तत्र तदध्यस्तं । यथाऽऽर्द्रेन्धनविशिष्टाग्न्युपादानको धूमस्तादृशाग्निं विना न तिष्ठति तथा सद्रूपब्रह्म विना द्वैतं न तिष्ठतीति तत्तदुपादानकमिति ।

तत्तुच्छम् । व्यक्तिग्रहणं विना जातेरग्रहणेऽपि व्यक्तौ जात्याध्यासाभावात् । 'यथा दुन्दुभेर्हन्यमानस्य बाह्यान् शब्दान् अशुक्नुयात् ग्रहणाय दुन्दुभेस्तु ग्रहणेन दुन्दुभ्याघातस्य वा शब्दो

गृहीतः'[१] इति श्रुतेर्यथा लोके दण्डादिना ताड्यमानस्य भेर्यादेरग्रहणे तदीयसामान्यान् निकृष्टान् तारमन्द्रादिरूपान् बाह्यान् शब्दान् गृहीतुं शक्तो न भवति दुन्दुभेस्तु ग्रहणेन, आहननमाघातः, आहननविशिष्टस्य वा दुन्दुभेर्ग्रहणे सति शब्दसामान्यविशिष्टदुन्दुभिग्रहणे सति वा तद्गता विशेषा गृहीता भवन्तीत्यर्थात् । शब्दसमसत्ताकस्य दुन्दुभेस्तद-धिष्ठानत्वासंभवात् । तज्ज्ञानेन शब्दबाधापत्तेश्च । पार्थिवधूमस्य तैजसवह्न्युपादनकत्वासंभवात् । तं विना तस्य स्थित्यसंभवाच्च ।।

'अनुच्छित्तिधर्मा' इत्यस्य विग्रहप्रदर्शनपूर्वकमर्थकथनम्

न उच्छित्तिर्येषां ते अनुच्छित्तयः । अनुच्छित्तयो धर्मा यस्य सोऽनुच्छित्तिधर्मेत्यर्थः । न त्वनुच्छित्तधर्मो यस्येत्यर्थः । अविनाशीत्यनेन पौनरुक्त्यापत्तेः । नोच्छित्तिः धर्मो यस्येति त्रिप दबहुव्रीहावनिच्प्रत्ययासंभवात् । नोच्छित्तिरनुच्छित्तिरनुच्छित्तिधर्मो यस्येति विग्रहे ब्रह्मणः सधर्मकत्वापत्तेः ।।

।। इति यत्र त्वस्येति श्रुत्यर्थः ।।

## २४. अथ यद्वैतं न पश्यतीति श्रुत्यर्थः

यद्वैतं इति श्रुतेः मिथ्यात्वपरत्वनिषेधपूर्वमर्थकथनम्

नापि 'यत् द्वैतं न पश्यति पश्यन्नेतन्न पश्यति । न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तत् द्वितीयमस्ति । ततोऽन्यद्विभक्तं यत्पश्येत्'[२] इति श्रुतिस्तत्र मानम् । पूर्वत्र हि 'ता वा अस्यैता हिता नाम नाड्यो यथा केशः सहस्रधा भिन्नस्तावताऽणिम्ना

---

१. श्रुतिः द्रष्टव्या?

२. बृ.उ. ६.३.२३

तिष्ठंति । शुक्लस्य पिङ्गलस्य हरितस्य लोहितस्य पूर्णाः'[१] इति नाडीस्थभगवन्मूर्तीनां रूपभेदोक्त्या भेदः प्राप्तः । तथा 'तद्वा अस्यैतदाप्तकाममात्मकाममकामं रूपं'[२] इति षष्ठ्या रूपरूपिभेदश्च। तन्निराकर्तुं भगवद्रूपाणामभेदोऽत्रोच्यते । 'हृदयं ब्रह्म'[३] इति श्रुत्या 'तस्यैतदेव निरुक्तं हृदयं'[४] इत्यादिश्रुत्या च ब्रह्मणि प्रसिद्धेन हृदयननिमित्तकेन 'हृदयस्य भवति' इति पूर्वत्र हृदयशब्देन निर्दिष्टं ब्रह्म यत् स्वमूर्तिगुणादिकं द्वैतं स्वस्माद्भिन्नं न पश्यति तत् द्वितीयं भिन्नं नास्ति द्वितीयत्वेन नास्ति । कुतः पश्यन् सर्वज्ञ एव सन्नीश्वरो न तत्पश्यति । न हि द्रष्टुरीश्वरस्य दृष्टेर्विपरिलोपो बाधो विद्यते नित्यत्वात् । यत् जीवजडादिकं स्वस्माद्विभक्तं पश्येत् तत्ततोऽन्यदिति श्रुत्यर्थात् । यच्छब्दस्य न तु तदिति व्यवहिततच्छब्दान्वयस्तु यत्तदोः साकांक्षात्वादाकांक्षायाश्च सन्निधानात् बलीयस्त्वाद्युक्तः ।

यस्य येनार्थसंबन्धो दूरस्थेनापि तेन सः ।
अर्थतो ह्यसमर्थानामानन्तर्यमकारणम् । इति वार्तिकोक्तेः ।

अन्यथा यद्विभक्तं तन्नास्तीत्येतावता पूर्णत्वेन शेषवैय्यर्थ्यम् । कथं च त्वत्पक्षे नित्ये चैतन्यमात्रे 'न हि द्रष्टुर्दृष्टेर्विपरिलोपः' 'न हि घ्रातुर्घ्रातेर्विपरिलोपः' 'न हि स्पृष्टुः स्पृष्टेर्विपरिलोपः'[५] इत्यादिनोक्तं दृष्टित्वघ्रातित्वस्पृष्टित्वादिकं द्रष्ट्रादिसंबन्धश्च ॥

---

१. बृ.उ. ६.३.२०
२. बृ.उ. ६.३.२१.
३. ब्र.सू.भा. १.१.२१ इत्यत्रोदाहृता श्रुतिः ।
४. छा.उ. ८.३.३.
५. बृ.उ. ६.३.२३,२४,२५

किञ्च पूर्वत्र 'यथाऽस्मिन्नाकाशे श्येनो वा सुपर्णो वा विपरिवृत्य श्रान्तः संहत्य पक्षौ सल्लयायैव ध्रियते एवमेवायं पुरुषः'[१] इति, 'तद्यथा प्रियया स्त्रिया संपरिष्वक्तो न बाह्यान् किञ्चन वेद नान्तरं एवमेवायं पुरुषः'[२] इति भिन्नसत्यनीडश्येनस्त्रीपुरुषादिदृष्टान्तोक्तिः, 'प्राज्ञेनात्मना संपरिष्वक्तः'[३] इति जीवेशभेदोक्तिश्चायुक्ता स्यात् ॥

परोक्तार्थेऽनुपपत्तिप्रदर्शनम्

यत्तु द्वितीयत्वेन यत् पश्यतीत्यस्यासिद्धत्वेन तदनुवादेन निषेधासंभव इति । तत्तुच्छम् । स्वमूर्त्यादिभेदाभावस्य नेह नानेत्यादिना सिद्ध्या तद्भेददर्शनाभावस्य नित्यसार्वज्ञ्येन सिद्धस्य यन्न पश्यतीत्यनेनानुवादात् । न च 'न तु द्वितीयमस्ति' इत्यस्यैव पूर्णत्वेन 'यद्वैतं न पश्यति' इति व्यर्थम् । द्वितीयसामान्यनिषेधस्य पूर्वोत्तरवाक्यैर्मानान्तरैश्च विरुद्धत्वात् । यद्वैतदर्शनं सर्वज्ञस्य नास्ति तद्वैतं नास्तीत्यसंपादकत्वेन सार्थक्यात् । न च हृदयशब्देन 'एतत्सर्वं मनः'[४] 'कामा येऽस्य हृदि स्थिताः'[५] इत्यादिपर्यालोचनया तत्स्थे लक्षणया हृदयस्थमनस..(उदर) ब्रह्मोक्त्यसंभवः । 'हृदयमारुणयः'[६] इत्यस्योपासनापरत्वेऽपि ब्रह्मदैवत इति वाक्यशेषेण ते उदरे हृदये ब्रह्मैवेति व्याख्यानेन हृदयशब्दस्य ब्रह्मणि निरुढेः । 'स वा एष आत्मा हृदि तस्यैतदेव निरुक्तं हृदयमिति'[७] छान्दोग्ये हृदयमिति

१. बृ.उ. ६.३.१९.
२. बृ.उ. ६.३.२१.
३. बृ.उ. ६.३.२१.
४. बृ.उ. ३.६.९.
५. बृ.उ. ६.४.७ (शारीरब्राह्मणम्), काठ.उ. २.३.१४,१५
६. भाग.पु. १०.९७.१८.
७. छा.उ. ८.३.३.

निरुक्तं नाम । बृहदारण्यके च 'एष प्रजापतिः यद् हृदयमेतद्ब्रह्मैतत्सर्वं तदेतत् अक्षरं हृदयमिति । हृ इत्येकमक्षरमभिहरन्त्यस्मै स्वाश्चान्ये च य एवं वेद । द इत्येकमक्षरं ददात्यस्मै स्वाश्चान्ये च य एवं वेद । यमित्येकमक्षरमेति स्वर्गं लोकं य एवं वेद'[१] इत्यादिना हृदयशब्दस्य ब्रह्मणि रूढ्युक्तेः । हरति ददाति यातीति हृदयमिति योगस्यापि सूचितत्वाच्च । न च 'पश्यन्नेव तन्न पश्यति' इति हेतुरसिद्धः । न हीशः स्वभिन्नत्वेन स्वमूर्त्यादि न पश्यतीति मानान्तरेण निश्चितमिति वाच्यम् । नित्यसार्वज्ञ्यादिना तत्सिद्धेः ।।

।। इति यद्वैतं न पश्यतीति श्रुत्यर्थः ।।

## २५. अथ वाचारंभणमिति श्रुत्यर्थः

वाचारम्भणशब्दस्य मिथ्यार्थकत्वेऽनुपपत्तिप्रदर्शनम्

नापि 'वाचारम्भणं विकारो नामधेयं'[२] इति श्रुतिस्तत्र मानम्। वाचारंभणशब्दस्य मिथ्यात्वे योगरूढ्योरभावात् । वाचारब्ध-का० यादेर्मिथ्यात्वासंप्रतिपत्तेः । वागालंबनमात्रमिति व्याख्यानेऽश्रुत-कल्पनात् । त्वया नामधेयमित्यस्यापि नाममात्रं ह्येतदिति व्याख्याततत्वेन पौनरुक्त्याच्च ।।

'मृत्तिकेति' इत्यत्र इतिशब्दार्थकथनम्

मृत्तिकेत्यर्थविवक्षायामितिशब्दवैय्यर्थ्याच्च । पदार्थविपर्यासे ह्यत्रेतिशब्दः । स च शब्दप्रकरणे प्रसक्तं शब्दपदार्थकत्वं

---

१. बृ.उ.

२. छा.उ. ६.१.४-६.

निवार्यार्थपदार्थकत्वं व्यवस्थापयति । यथा 'न वेति विभाषा'[१] इति । अर्थप्रकरणे तु शब्दपदार्थकत्वं । यथा 'गौरित्ययमाह' इति। उक्तं हि महाभाष्ये नवेति विभाषेत्यत्र 'इतिकरणः क्रियते । सोऽर्थनिर्देशार्थो भविष्यति । तद्यथा गौरित्ययमाहेति । गोशब्दादितिकरणः प्रयुज्यमानः गोशब्दं स्वस्मात् पदार्थात्प्रच्यावयति । सोऽस्मात् प्रच्युतः शब्दपदार्थकः संपद्यते । अन्यथा स्वंरूपमिति परिभाषाया नवाशब्दयोरेव विभाषासंज्ञायां 'विभाषा जसि'[२] इत्यादौ नवाशब्दयोरेव ग्रहणं स्यान्नार्थस्य' इति । अत्र चार्थप्रकरणादेवार्थपदार्थकत्वे सिद्धे किमिति शब्देन? अतोऽर्थपदार्थकत्वं प्राच्याव्य शब्दपदार्थकत्वं मृत्तिकाशब्दस्य व्यवस्थाप्यते इतिकरणेन । न चात्रेतिशब्दः प्रकारार्थः । प्रकारस्य जगदनुपादानत्वात् ।।

### वाचारम्भणश्रुतेर्थकथनम्

तस्माद्वाचा वागिन्द्रियमात्रेण आरम्भणमुत्पादनं यस्य साङ्केतिकस्य भाषाशब्दस्य तन्नामधेयं विकारः । कर्मणि घञ् । विकृतं संस्कृतापभ्रंशरूपेण विक्रियमाणत्वात्, मृत्तिकेत्यादिसंस्कृतनामधेयं तु सत्यं नित्यम् । 'नास्य जरयैतज्जीर्यते । न वधेनास्य हन्यते। एतत्सत्यं ब्रह्म पुरं'[३] इत्येतच्छ्रुतावेव नित्ये सत्यशब्दप्रयोगात् । सादृश्यादेकविज्ञानेन सर्वविज्ञानमित्यत्र मृत्पिण्डादिदृष्टान्ताः । प्रधानज्ञानेनाप्रधानज्ञाने संस्कृतापभ्रंशदृष्टान्ताः । भाषाशब्दज्ञानाद्यत्फलं तच्चाधिकं च सार्वत्रिकव्यवहारादिकं संस्कृतज्ञानाद्भवतीति तज्ज्ञो विद्वानित्युच्यते । तदर्थं 'यथा सोम्य' इत्यनुषञ्जनीयम् ।।

---

१. पा.सू. १.१.४४.

२. पा.सू. १.१.३२.

३. छा.उ. ८.१.५.

### श्रुतेरुपादानविवर्तपरत्वेऽनुपपत्तिप्रदर्शनम्

उपादानत्वाभिप्रायत्वे मृदा ज्ञातया मृन्मयं विज्ञातं स्यादित्येतावता पूर्णत्वेन मृत्पिण्डादिवाक्यत्रये प्रत्येकं श्रुतानां एकशब्दसर्वशब्दपिण्ड-शब्दानां वैय्यर्थ्यं स्यात् । न हि सर्वमृन्मयादिकं एकमृत्पिण्डादिविकारः। नखनिकृन्तनस्यान्त्यावयवित्वेनोपादानत्वासंभवाच्च । मृत्वे निश्चितेऽपि घटादौ संशयादिदर्शनाच्च । मुमुक्षुज्ञेयशुद्धस्य त्वन्मतेऽनु-पादानत्वाच्च । अनाद्यविद्यादीन् प्रत्यनुपादानत्वेन ब्रह्मज्ञानेन तज्ज्ञानासंभवेन सर्वविज्ञानप्रतिज्ञानहानेश्च । न च विवर्ते दृष्टान्तः। मृन्मयादेर्मृत्पिण्डादौ लोहस्य नखनिकृन्तने चानध्यासात् । शुक्ति तत्त्वज्ञानाद्रूप्यनाशवद्ब्रह्मज्ञानात् सर्वस्य नाशापत्त्या सर्वविज्ञाना-संभवाच्च। मृत्तत्त्वज्ञाने घटाद्यनिवृत्तेश्च ।।

### वाचस्पत्युक्तपरिहारखण्डनम्

यत्तूक्तं वाचस्पतिना– शुक्तौ ज्ञातायां रूप्यं तत्त्वतो ज्ञातं भवति। सा हि तस्य तत्त्वम् । एवं ब्रह्मज्ञानात् सर्वं तत्त्वतो ज्ञातं भवतीति । तन्न । एवं हि ब्रह्मज्ञानेन ब्रह्मैव ज्ञातं भवतीत्यर्थः स्यात् । तच्चायुक्तम् । स्वस्य स्वाहेतुत्वात् । 'येनाश्रुतं श्रुतं भवति' इत्यादिश्रुतिगताश्रुतादिपदायोगाच्च ।।

### श्रुतब्रह्मव्यतिरिक्तमन्यन्नास्तीत्यर्थं वदतां यत्तुकाराणां मतखण्डनम्

यत्तु अश्रुतं श्रुतं भवतीत्यस्य श्रुतव्यतिरिक्तमन्यन्नास्तीत्यर्थः । तथा चैकं सर्वाधिष्ठानमिति प्रतिज्ञातम् । यथा मृत्पिण्डभिन्नस्तद्विकारो नास्ति तथा श्रुतब्रह्मभिन्नं नास्तीत्यर्थः । मृत्पिण्डपदं च मुख्यार्थैकैकपदयोगात् भूमिरूपपिण्डार्थकं मृण्मयपदं च भूमिविकार-मात्रार्थकम् । तथा च भूमिविकारः सर्वो यथा भूमिं विना

नास्तीत्यर्थः । मृत्तिका भूमिरिति गृह्यमाणं यत्तदेव सत्यं, मृत्तिकास्वरूपस्य सत्यत्वाभावात् । तदवच्छिन्नसद्रूपस्य दृष्टान्तत्त्वधीदशायां मृदो विविच्याज्ञानाद्भूमित्वेन ज्ञायमानत्वेन सद्रूपलाभार्थमितिशब्दः । 'मनो ब्रह्मेति' इत्यादौ ज्ञायमानत्वस्येतिशब्दार्थत्वात् । आद्यर्थो वा इतिशब्दः । तथा च भूमिविकारस्वरूपविचारदशायां विकारस्य मिथ्यात्वं भूमिः सत्या तत्स्वरूपविचारे सापि मिथ्या। तद्धेत्वपञ्चीकृतभूतान्येव सत्यानि । तत्स्वरूपविचारे तेषामपि मिथ्यात्वम् । तत्कारणमेव मृत्तिकेत्येव सत्यमित्यत्र हेतुर्वाचारंभणं विकारो नामधेयमिति असमवायिकारणजन्यत्वमुत्पत्तिर्वाचा वाङ्मात्रं विचारसहम् । एवं नाशोऽपि विचारसहः । निर्विकारं ब्रह्मैव सत्यम्। भामत्युक्तिरपि आनारोपितरूपस्यैव तत्त्वरूपत्वेन असाधारणस्वरूपधर्मयोरिवाधिष्ठानस्यापि तत्त्वरूपत्वात् । 'तत्त्वं ब्रह्ममार्गे सम्यक् संपन्नः' इति श्रुतौ 'युंजानः प्रथमं मनस्तत्वाय' इति श्रुतौ च 'भगवन्नाहमात्मवित् त्वं तत्त्ववित्' इति श्रुतौ 'तत्त्वं परात्मनि वाद्यभेदे स्वरूपे च' इति हैमकोशे च तत्त्वपदस्य ब्रह्मणि प्रसिद्धेरिति।

तन्न । श्रुत्यक्षरस्य देवानां प्रियेणास्पृष्टत्वात् । मृत्पिण्डभिन्नघटाद्यवस्थाभावे जलाहरणाद्यनापत्तेः । मृत्वज्ञानेऽपि घटाद्यनिवृत्तेश्च। मृदादितत्त्वज्ञानेऽपि विद्यमानस्य घटादेः प्रातीतिकत्वासंभवात् । व्यावहारिकस्य च मिथ्याभूता मृत्तदवच्छिन्नचैतन्यं वाऽनधिष्ठानम्। अधिष्ठानस्याधिकसत्ताकत्वनियमात् । विचारासहत्वमात्रेण मिथ्यात्वे ब्रह्मणो ज्ञानानन्दसद्रूपत्वादेरपि विचारासहत्वात् मिथ्यात्वापत्तेः । 'पञ्चविंशति तत्त्वानि' इत्यादिवत् प्रधानादिसाधारणतया ब्रह्मणस्तत्त्वपदावच्यत्वेऽपि घटत्वादिज्ञानेनेतरव्यावृत्ततया घटादिज्ञानव-

दधिष्ठानज्ञानेनाध्यस्तस्य तथा ज्ञानाभावेनाधिष्ठानस्याध्यस्ततत्त्वरूपत्वाभावात् ।।

### 'वाचा' इत्यत्र वागिन्द्रियमात्रं लक्ष्यमिति मतखण्डनम्

यत्तु वाचापदेन वागिन्द्रियमात्रं लक्ष्यम् । अन्यथा व्याकरणानिष्पाद्यत्वालाभेनापभ्रंशलाभानुपपत्तेः । मन्मते वाङ्मात्रलक्षणत्वाजानिकी[1] अर्थासत्वविवक्षायां वागादिशब्द- प्रयोगादिति ।।

तत्तुच्छम् । सर्ववाक्यानां सावधारणस्वभावेनैव व्याकरणनैरपेक्ष्यलाभेन लक्षणाभावात् । अन्यथा शब्दमात्रस्य वागिन्द्रियारभ्यत्वेन वाचेति वैय्यर्थ्यापत्तेः । अर्थासत्वे वागादिप्रयोगस्य त्वयैवानुभूतत्वात् ।।

### अर्थासत्वे वाचारम्भणशब्दप्रयोग इति मतखण्डनम्

यत्तु–

को भवानितिर्देशो वाचारंभो ह्यनर्थकः ।
शिबिकादारुसंहातो वचनास्थितिसंस्थितः ।।

अन्विष्यतो नृपश्रेष्ठ तद्भेदः शिबिका त्वया ।
छत्रशलाकानां... पृथग्भावो विमृग्यताम् ।।

इति स्मृतावर्थासत्वे वाचारंभशब्दप्रयोग इति ।।

तत्तुच्छम् । देहानां प्राकृतत्वेनैक्यात् कोभवानिति निर्देशः देहविषयकः प्रश्नो निरर्थकः । निर्धारणरूपार्थशून्यः वाचारंभ इत्यनेन लेखादिना प्रश्नो व्यावृत्त इति हि तदर्थः ।।

१. अत्र पङ्क्तिः लुप्ता ।

### एकज्ञानात् सादृशज्ञानसमर्थनम्

यत्तु एकज्ञानात् तत्सदृशं तदधीनं च सर्वं ज्ञयत इत्युक्ते न हि गोराजादेर्ज्ञने नियमेन गवयप्रजादिज्ञानमिति ।।

तत्तुच्छम् । गोगवययोः सादृश्यज्ञाने गोज्ञानेन गवयज्ञानसंभवात्। प्रजादर्शनफलस्य राजदर्शनेन संभवात् । मृत्पिण्डघटाद्योः कार्यकारण-भावाग्रहे मृत्पिण्डमात्रज्ञानेन घटादिज्ञानादर्शनाच्च ।।

### संस्कृतज्ञानस्य दृष्टान्तत्वोपपादनम्

यत्तु संस्कृतज्ञानस्यापभ्रंशकार्यकारित्वे कथं दृष्टान्तः । न हि शुद्धस्य सगुणस्य वा ब्रह्मणो ज्ञानं घटादिज्ञानकार्यकारि येन तत् ते तत्र दार्ष्टान्तिकं स्यात् । तथा स्वीकारेऽपि येनाश्रुतं श्रुतमित्याद्यमुख्यार्थकं स्यादिति ।।

तत्तुच्छम् । ब्रह्मज्ञानेन घटादिज्ञानस्य त्वयैव प्रलपितत्वात् । किन्तु ज्ञातव्यानां देवादीनां ज्ञानाद्यत् फलं तत् तदधिकं ब्रह्मज्ञानाद्भवतीत्यर्थस्यास्माभिरुक्तत्वात् । येन ब्रह्मश्रवणादिना अश्रुतस्यापि देवादेः श्रवणादिफलं भवतीत्यर्थः ।

यावानर्थ उदपाने सर्वतः संप्लुतोदके ।
तावान्सर्वोषु ब्राह्मणस्य विजानतः[१] ।।

इति स्मृत्या ब्रह्मज्ञानस्य सर्वदेवादिज्ञानफलदत्वोक्तेश्च । न च सर्वसुखानां ब्रह्मसुखन्तर्भावः स्मृत्या बोध्यते । जीवनिष्ठसुखानाम-सङ्गब्रह्मरूपसुखेनाभेदासंभवात् ।।

---

१.भग.गी. २.४६.

दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यपरिहारः

यत्तु दार्ष्टान्तिके सर्वोपासनाफलाभिन्नफलकत्वम् । दृष्टान्ते तु सर्वापभ्रंशादिकार्यजातीयकार्यकारित्वमिति दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यमिति । तत्तुच्छम् । सर्वोपासनानां यद्यत्कार्यतावच्छेदकं तदवच्छिन्नस्यैव ब्रह्मोपासनया जायमानत्वात् । न ह्यन्योपासनयोत्पन्नस्य फलस्यैव पुनर्ब्रह्मोपासनयोत्पत्तिः । तत्तदपभ्रंशज्ञानकार्यतावच्छेदकावच्छिन्नस्य संस्कृतज्ञानेन जननात् ।।

।। इति वाचारंभणमिति श्रुत्यर्थः ।।

## २६. अथ इदं सर्वं यदयमिति श्रुत्यर्थः

नापि 'इदं सर्वं यदयमात्मा'[१] इति श्रुतिस्तत्र मानम् । इदं सर्वं जगद्यस्मिन् सोऽयमात्मा परमात्मेति हि तदर्थः । किञ्च चिज्जडयोरैक्यासंभवेन 'सर्वेषु भूतेष्वेतं'[२] इति श्रुतेः सर्वं जलं लवणमितिवत्सर्वव्याप्त्या वा, 'स हि सर्वस्य कर्ता'[३] इति श्रुतेः 'आयुर्वै घृतं' 'ब्राह्मणोऽस्य मुखं'[४] इतिवत् तन्निमित्तत्वेन वा, 'यस्मिन् द्यौः पृथिवी'[५] इत्यादिश्रुतेः 'राजा राष्ट्रं'[६] 'ब्राह्मणो वै सर्वा देवता' इतिवत् सर्वाधारत्वेन वा, 'न ऋते त्वत्क्रियते किञ्चन'[७] इति श्रुतेः 'यजमानः प्रस्तरः' इतिवत् तत्सिद्ध्या वा,

१. बृ.उ. ६.५.६.
२. ऐत.आ. ३.२.३.
३. बृ.उ. ६.४.१३.
४. ऋ.सं. १०.९०.१२ पुरुषसूक्तम्
५. आथ.उ. ४.६.
६. ऋ.सं. ७.३४.११.
७. ऋ.सं. १०.११२.९.

'आदित्यो यूपः' इतिवत् सारूप्येण वा सामानाधिकरण्योपपत्तौ सर्वप्रमाणबाधितायाः यः पुरुषः स स्थाणुरितिवत् यत्सर्वत्वेन प्रतीतं तदात्मन्यध्यस्तमिति पदद्वयलक्षणाया अयोगात् । 'पुरुष एवेदं सर्वं व्याप्तमाकरीषात्'[१] इति श्रुतौ,

असतश्च सतश्चैव सर्वस्य प्रभवाप्ययः ।
सर्वस्य च सदा ज्ञानात् सर्वमेनं प्रचक्षते ।।

पुरुष एवेदं सर्वं भूतं भव्यं भवच्च यत् ।
इत्युच्यते तदीयत्वान्न तु सर्वस्वरूपतः[२] ।। इति भारते,

'सर्वं समाप्नोषि ततोऽसि सर्वः'[३] इति गीतायां च सम्यक् व्याख्यातत्वाच्च ।।

### परोक्तार्थे श्रुत्यनुपपत्तिकथनम्

अन्यथा 'इदं सर्वं' इत्यस्य 'सर्वं तं परादोऽन्यत्रात्मनः सर्वं वेद'[४] इति पूर्वेण, 'स यथा दुन्दुभेः'[५] इत्याद्युत्तरेण, 'पुरुष एवेदं सर्वं'[६] इत्यस्य 'स भूमिं विश्वतो वृत्वा'[७] इति पूर्वेण, 'उतामृतत्वस्येशानः'[८] इत्युत्तरेण 'ब्रह्मैवेदं सर्वं'[९] इत्यस्य 'अस्यां पृथिव्यां

१. ऐ.भा. उदाहृतवचनम् २.२.३
२. महा.भा. उद्योगपर्व ६८.११,१२
३. भग.गी. ११.४०.
४. बृ.उ. ६.५.६.
५. बृ.उ. ६.५.७.
६. पुरुषसूक्तम् - २
७. पुरुषसूक्तम् - १
८. पुरुषसूक्तम् - २
९. बृ.उ. ४.५.१.

तेजोमयोऽमृतमयः' । 'स यश्चायं तेजोमयोऽमृतमयः'[१] इत्यादिना पूर्वेण, 'सर्वं खल्विदं ब्रह्म'[२] इत्यस्य 'ज्यायान् पृथिव्या ज्यायानन्तरिक्षात्'[३] इत्यादिनोत्तरेण, 'सर्वाणि भूतान्यात्मैव'[४] इत्यस्य 'सर्वभूतेषु चात्मानं'[५] इत्यादिना पूर्वेण, 'याथातथ्यतोऽर्थान् व्यदधात्'[६] इत्याद्युत्तरेण च विरोधः स्यात् ।।

।। इति इदं सर्वं यदयमिति श्रुत्यर्थः ।।

## २७. अथ तमेवेत्यादिश्रुत्यर्थः

### तमेवमिति श्रुतेः अन्याविषयकज्ञानस्य मुक्तिहेतुत्वार्थकत्वनिराकरणम्

यत्तु 'तमेवं विदित्वाऽतिमृत्युमेति नान्यः पन्थाः विद्यतेऽयनाय'[७] इति श्रुत्याऽन्याविषयकज्ञानं मुक्तिहेतुरिति । तत्तुच्छम् । यच्छब्देन पूर्वप्रक्रान्तसहस्रशीर्षत्वादिविशिष्टस्यैव परामर्शात् । यथा रसनं रसमेव गृह्णातीत्यत्र धर्मिभूतगुणान्तरविषयत्वस्यैव हि व्यावृत्तिः । रसभिन्नरसत्वादेर्ग्रहणात् । तथा धर्म्यन्तरजीवजडविषयत्वमेव व्यावर्त्यते न तद्गतधर्मः ।।

---

१. बृ.उ. ४.५.१
२. छा.उ. ३.१४.१.
३. छा.उ. ३.१४.३.
४. ईश.उ. ७.
५. ईश.उ. ६.
६. ईश.उ. ८.
७. मायावादखण्डने

### यस्मात्परं इति श्रुत्यर्थकथनम्

'यस्मात् परं नापरमस्ति' इति श्रुतेः यस्मात् परं न अपरं त्वस्ति। तच्च किञ्चिदल्पमित्यर्थः । 'पुरुषान्नपरं किञ्चित्'[१] 'पादोऽस्य विश्वा भूतानि'[२] इत्यादिश्रुतेः । 'मत्तः परतरं नान्यत् किञ्चिदस्ति धनञ्जय'[३] 'वासुदेवात्परं नास्ति'[४] इत्यादिस्मृतेश्च। नञनुषङ्गस्याकल्प्यत्वाच्च । 'तेनेदं पूर्णं पुरुषेण सर्वं ततो यदुत्तरतरं' इति वाक्यशेषाच्च । विश्वस्यैवाभावे हि किं तेन पूर्णं कस्माच्च तदुत्तरतरं स्यात् ।।

### 'इन्द्रो मायाभिः' इति श्रुत्यर्थकथनम्

'इन्द्रो मायाभिः पुरुरूप ईयते'[५] इत्यनयेश्वरस्य विचित्रशक्तिभिर्मत्स्याद्यनेकरूपवत्वमेवोच्यते । न त्वज्ञानेन घटादिरूपत्वम् । 'रूपं रूपं प्रतिरूपो बभूव'[६] इति पूर्वोक्तानां जीवान् प्रत्यन्तर्यामिणो भगवतो रूपाणामेवेह रूपशब्देन प्रत्यभिज्ञानात् । 'मायां तु प्रकृतिं विद्यात् मायिनं च महेश्वरं'[७] इत्यस्य 'मायया सन्निरुद्धः' इति पूर्वोक्ता या माया सा प्रकृतिः । त्रिगुणात्मकं प्रधानमित्यर्थः । न तु प्रकृतिर्जगदुपादानं सा माया मिथ्येति । पूर्वनिर्दिष्टमायाशब्दार्थस्य बुभुत्सितत्वात् । प्राथम्येन मायाया एवोद्देश्यत्वाच्च ।।

।। इति तमेवेत्यादिश्रुत्यर्थः ।।

---

१. काठ.उ. १.३.११.
२. ऋ.सं. १०.९०.३
३. भग.गी. ७.६.
४. कृ.महा. उदाहृतवचनम् ३२.
५. बृ.उ. ४.५.१९
६. बृ.उ. ४.५.१९
७. श्वेता.उ. ४.१०.

## २८. अथ जगदसत्वादिस्मृत्यर्थः

### असाधुत्वास्वातन्त्र्याभ्यां जगतोऽसत्वोक्तिरिति कथनम्

क्वचिज्जगतोऽसत्वोक्तिरसाधुत्वात् । 'सद्भावे साधुभावे च सदित्येतत्प्रयुज्यते'[१] इति स्मृतेः । अस्वातन्त्र्याद्वा ।

सत्वं स्वातन्त्र्यमुद्दिष्टं तच्च कृष्णे न चापरे ।
अस्वातन्त्र्यात्तदन्येषामसत्वं विद्धि भारत ।। इति भारतोक्तेः ।।

### अवस्तुत्वापारमार्थिकत्वोक्तेरभिप्रायकथनम्

अवस्तुत्वापारमार्थिकत्वोक्तिः परिणामित्वात् विशानशित्वाच्च ।

यत्तु कालान्तरेणापि नान्यसंज्ञामुपैति वै ।
परिणामादिसंभूतं तद्वस्तु नृप तच्च किम् ।
अनाशी परमार्थश्च प्राज्ञैरभ्युपगम्यते ।। इति श्रीवैष्णवोक्तेः।

### मिथ्यात्वाद्युक्तेरभिप्रायवर्णनम्

मिथ्यात्वोक्तिर्वृथात्वात् । 'मिथ्यैष व्यवसायस्ते'[२] इत्यादिवत्। सदोषत्वाद्वा । 'मिथ्योपपदात् कृञोऽभ्यासे'[३] इति सूत्रे वृत्तौ 'पदं मिथ्या कारयते' इत्युदाहृत्य 'स्वरादिदुष्टमसकृदुच्चारयति' इत्युक्तत्वात् ।।

अविद्यमानत्वोक्तिस्तु जीवसंबन्धित्वेनाविद्यमानत्वात् । 'अविद्यमाने जीवस्य प्रतिभाति तदीयवत्'[४] इति स्कान्दोक्तेः ।

१. भग.गी. १७.२६
२. भग.गी. १८.५९.
३. पा.सू. १.३.७१
४. भाग.ता. ११.२.३८ इत्यत्रोदाहृतवचनम् ।

स्वप्नादिसाम्योक्तिस्त्वनित्यत्वादेः ।

अनित्यत्वविकारित्वपारतन्त्र्यादिरूपतः ।
स्वप्नादिसाम्यं जगतो न तु बोधनिवर्त्यता[1] ।। इति वचनात् ।

मायामयत्वोक्तिस्तु प्राकृतत्वात् ।।

।। इति जगदसत्वादिस्मृत्यर्थः ।।

## २९. अथ प्राणा वै इत्यादिश्रुत्यर्थः

### प्राणा वै इति श्रुत्युक्तसत्ताभेदान्यथानुपपत्तिखण्डनम्

नापि 'प्राणा वै सत्यं तेषामेष सत्यं'[2] इति श्रुत्युक्तसत्ताभेदान्यथानुपपत्तिस्तत्र मानम् । जातिगुणादिहीनस्य त्वदभिमतब्रह्मणो निर्धारणासंभवात् । 'स राजराजः' 'देवदेवः' 'मन्मथमन्मथः' 'पवित्राणां पवित्रं यो मङ्गलानां च मङ्गलं'[3] इत्यादौ राजत्वदेवत्वादीनामिव प्राणादिसत्यत्वस्य ज्ञानाबाध्यत्वे सत्येव पराधीनत्वरूपापकृष्टत्वमात्रेण तदुपपत्तेः ।।

### 'सत्यं ज्ञानं' इति श्रुत्यर्थकथनम्

नापि 'सत्यं ज्ञानं'[4] इत्यादौ ब्रह्मणः सत्यत्वलक्षणोक्त्यन्यथानुपपत्तिर्मानम् । छान्दोग्ये 'तस्य ह वा एतस्य ब्रह्मणो नाम सत्यमिति। तान्येतानि त्रीण्यक्षराणि सत् ति यमिति । तद्यत्सत्

---

१. वि.त.नि प्र.परिच्छेदे उदाहृतवचनम् ।

२. बृ.उ. ४.१.२०.

३. वि.स.ना. ११

४. तैत्त.उ. २.१.

तदमृतं । अथ यत् ति तन्मर्त्यम् । अथ यद्यं तेनोभे यच्छति'[१] इति मुक्तामुक्तनियन्तृत्वं सत्यत्वमित्युक्तेः ।।

'विमुक्तश्च विमुच्यते'[२] इति श्रुत्या सज्जनस्यासत्सङ्गात् दौर्जन्यस्य ताम्रद्रवत्वादिवत् सत्यत्वेऽपि 'सज्जनः सज्जनो जातः' इतिवत् संसारस्य सत्यत्वेऽप्यस्वाभाविकत्वमुच्यत इति ।।

।। इति प्राणा वै इत्यादिश्रुत्यर्थः ।।

## ३०. अथ दृष्टिसृष्टिभङ्गः

दृष्टिसृष्ट्यङ्गीकारे स्वोक्तिविरोधोद्भावनम्

नापि दृष्टिसृष्ट्यन्यथानुपपत्तिर्मानम् ।

जीवो ब्रह्म विशुद्धा चिद्विभागस्त्वनयोर्द्वयोः ।
अविद्या तच्चितोर्योगः षडस्माकमनादयः ।।

इतिवचनेन बौद्धं प्रति प्रत्यभिज्ञादिना विश्वस्य स्थायित्वप्रतिपादकेन सूत्रभाष्यविवरणादिग्रन्थेन च विरोधापत्तेः । न चानादिभिन्न एव दृष्टिसृष्टिः । प्रपञ्चभिन्न एव तदङ्गीकारौचित्यात् ।।

दृष्टिसृष्ट्यङ्गीकारे बाधकप्रदर्शनम्

किञ्च प्रतीतिमात्रशरीरत्वेन नियतकारणाजन्यत्वे श्रुतिषु स्वर्गाद्यर्थे ज्योतिष्टोमादिविधेर्ब्रह्मसाक्षात्कारार्थं श्रवणादिविधेराकाशादेर्वाय्वादि-हेतुत्वस्य चोक्तिरयुक्ता स्यात् । तृप्त्यर्थं भोजने परबोधनाय शब्दादौ च प्रवृत्त्ययोगेन स्वक्रियाव्याघातश्च स्यात् । न च स्वप्नकार्यकारण-

१. छा.उ. ८-३-५
२. काठ.उ. २.२.१.

भावादिवदुपपत्तिः । शून्यमेवाद्वैतमिति स्वाप्निकश्रुत्युक्तशून्याद्वैतस्येव मोक्षस्यापि मिथ्यात्वापत्तेः । श्रुतिबोध्यशुद्धचितोऽपि स्वाप्निकवन्मिथ्यात्वापत्तेश्च । अधिष्ठानस्यापि शुक्तीदमंशस्य रूप्यवदिदं रूप्यमिति ज्ञानात् प्रागसत्वेन संप्रयोगादिहेतुत्रयजन्यत्वस्याध्यासतटस्थलक्षणस्य सत्यस्य वस्तुनो मिथ्यावस्तुसंभेदावभास इति स्वरूपलक्षणस्यायोगाच्च। न चेदमंशावच्छिन्नचैतन्येन सत्येन रूप्यस्य भेदावभासोऽस्तीति न स्वरूपलक्षणक्षतिः । इदमंशावच्छिन्नस्य सत्यत्वेन तत्र दृश्यत्वादे० र्यभिचारापत्तेः । इदं रूप्यमिति धीकाले शुक्तित्वादेरभावेनाध्यासस्य तदज्ञानकार्यत्वादिमतहानेश्च । इदं रूप्यं नेदं रूप्यमिति धियोर्भिन्नविषयत्वेन बाध्यबाधकभावानुपपत्तेश्च । न च सारूप्यात् स्वाप्नबाध्यबाधकयोरिवोपपत्तिः । स्वप्नोऽपि दृष्टिसृष्टेरसंप्रतिपन्नत्वात्[1]। एतन्मते साधारणानुगतधर्मासंभवेन सारूप्यासंभवाच्च । सुप्तं प्रत्यदृष्टसंस्कारादेरभावेन पुनरुद्बोधायोगाच्च । अज्ञातस्यापि संस्कारादेः कारणात्मनावस्थानाङ्गीकारेऽर्धजरतीयन्यायस्यानुचितत्वेन दृष्टिसृष्टिमतस्यैवानादरणीयत्वात् । सोऽयं देवदत्त इति दृष्टान्तेन तत्त्वमस्यादिवाक्ये जहदजहल्लणयैक्यपरत्वोक्तिरयुक्ता स्यात् । तद्देशकालसंबन्धिपिण्डस्यैतद्देशकालसंबन्धाभावेनैक्यासंभवात् । न च सोऽयमित्यनेनात्माभेद एव विषयीक्रियते । आत्माभेदस्य साध्यत्वेन दृष्टान्तत्वासंभवात् । शुद्धचित एद्देशाद्यसंबन्धित्वाच्च । अचाक्षुषत्वाच्च ।।

'ध्रुवा द्यौर्ध्रुवा पृथिवी ध्रुवासः पर्वता इमे । ध्रुवं विश्वमिदं जगत्'[2] इति श्रुतिविरोधाच्च । न चाकल्पं सन्तानाविच्छेदपरा श्रुतिः। अनेन हि सूक्तेन संग्रामायोद्यतो राजा पुरोधसा सन्नाहनीयः।

---

१. 'दृष्टिसृष्टिरित्यसंप्रतिपन्नत्वात्' एवं स्यादिति भाति ।

२. ऋक्.सं. १०.१७३.४.

न हि यथा गङ्गाप्रवाहो दीपकलिका च ध्रुवा तथा त्वं ध्रुवो भवेत्यादिना सन्नाहनं भवति ॥

### एतस्मादात्मनः इति श्रुतेः दृष्टिसृष्टिपरत्वनिषेधः

न च 'अस्मादात्मनः सर्वे प्राणाः सर्वे लोकाः सर्वे देवाः सर्वाणि भूतानि सर्व एत आत्मानो व्युच्चरन्ति'[१] इति सुप्तोत्थिताज्जीवात् प्राणादिसृष्टिं प्रतिपादयन्ती प्रमाणम् । 'यत्रैष एतत् सुप्तोऽभूत्'[२] इति यच्छब्देन सुप्ताधारत्वेनोक्तस्य ब्रह्मण एव 'अस्मादात्मनः' इत्यनेन परामर्शात् तत्कर्तृकैव प्राणादिसृष्टिर्न तु सुप्तोत्थितजीवकर्तृका। अन्यथाऽग्न्यूर्णनाभ्यादेस्तन्तुविस्फुलिङ्गादिजननोक्तिरत्रापि वाक्ये सर्वलोकसृष्ट्युक्तिश्चालीकार्था स्यात् । न हि दृष्टिसृष्टिपक्षे ऊर्णनाभ्यादेस्तन्त्वादिजनकत्वं सर्वलोकसृष्टिर्वाऽस्ति ॥

### यत्रैष इति प्रश्ने आधारप्रश्नेत्युपपादनम्

न च 'यत्रैषः' इति प्रश्नवाक्ये 'यत्र' इति नाधारप्रश्नः किन्तु कालप्रश्नः । अन्यथा 'क्वैष तदाऽभूत्' इति पुनर्देशप्रश्नानुपपत्तेरिति वाच्यम् । तथापि क्वेति आधारप्रश्नस्यैव ह्युत्तरं 'य एषोऽन्तर्हृदय आकाशः' इति तत एव च सृष्टिः ॥

वस्तुतस्तु यत्रेत्याधारप्रश्न एव । यत्राधारे सुप्तोऽभूत् स किंप्रकारक आधार इति । यत्रक्वशब्दोरेकार्थत्वात् । दृष्टिसृष्टिमते श्रुतितत्प्रामाण्यतद्बोधितप्राणादिसृष्ट्यादेरलीकत्वाच्च । सुषुप्तौ देहेन्द्रियादीनामसत्त्वेन सुप्तोत्थानस्य देहेन्द्रियप्राणादेः सृष्टेरसंभवाच्च। न ह्येतन्मते ज्ञातसृष्टिः संभवति न वा सुप्तौ तत उत्थानाव्यवहितोत्तरक्षणे वा तज्ज्ञानमस्ति।

१.बृ.उ. ४.१.२०.
२.बृ.उ. ४.१.१६,१७.

भक्षितान्नस्य तव पृष्ठतः पतनापत्या तृप्त्यनुपपत्तेः । वृश्चिकादिदंशनेन तव पृष्ठादौ पीडा न स्यात् । अमृतधिया भक्षितविषात् मरणं न स्यात् ।।

दृष्टिसृष्ट्यङ्गीकारे विज्ञानवादापत्तिरित्याद्यापादनपूर्वमुपसंहारः

किञ्च स्थायिब्रह्मबोधस्यापि दृष्टिसृष्टित्वेन तदसिद्ध्यापत्त्या विज्ञानवादाविशेषः स्यात् । जीवादेर्जगत्कारणत्वं निराकृत्येशस्य तद्धेतुतां व्यवस्थापयतः समन्वयाध्यास्य प्रातिकूल्यं तु स्फुटमेवेति सत्यस्य जगतः प्रधानमुपादानम् । हरिः कर्ता । कालजीवादृष्टादिकं निमित्तम् । ईश्वरो नित्यनिरवद्यो नित्यसार्वाज्ञ्याद्यनन्तकल्याणगुणः। जीवोऽपि ज्ञानानन्दस्वरूपोऽनाद्यविद्यया परेशाधीनयावृतपूर्णानन्दो देहादावहं ममेत्यभिमन्यमानः संसरति । परेशप्रसादान्निवृत्ताविद्यः आविर्भूतपूर्णानन्दो मुक्तो भवति । जीवस्वरूपस्य सुखरूपस्य सदा भानेऽपि तन्निष्ठपूर्णत्वं जीवं प्रतीशस्वरूपं चाविद्ययाऽऽव्रियत इति सिद्धम् ।।

।। इति दृष्टिसृष्टिभङ्गः ।।

## ३१. अथाज्ञानाश्रयत्वभङ्गः

शुद्धस्य वृत्त्यवच्छिन्नस्य वा अज्ञानाश्रयत्वनिराकरणम्

परस्याविद्याश्रयो दुर्वचः । न च शुद्धं तदाश्रयः । तस्य प्रकाशरूपत्वात् । तयोश्च तमःप्रकाशवद्विरुद्धस्वभावत्वात् । न च शुद्धं नाज्ञानविरोधि किन्तु वृत्तिप्रतिबिम्बितं, तच्च नाज्ञानाश्रयः । अज्ञानविरोधिनो घटादिवत् ज्ञानत्वानुपपत्तेः । न च स्वतस्तृणतूलादि-भासकस्य सौरालोकस्य सूर्यकान्तावच्छेदेन स्वभास्यदाहकत्ववत्

स्वतोऽविद्यादिभासकस्यापि चैतन्यस्य वृत्त्यवच्छेदेन तद्दाहकत्वमिति वाच्यम् । सौरालोकसंबन्धात् सूर्यकान्तादावुत्पन्नस्याग्नेरेव दाहकत्वेन दृष्टान्तासिद्धेः । सौरालोकसंबन्धं विना मणेरदाहकत्वेन दाहे तदन्वयव्यतिरेकयोरिव चित्सम्बन्धं विना वृत्तेरज्ञानाविरोधित्वासत्वात्। तत्रान्वयव्यतिरेकयोरसत्वात् । ब्रह्माकारचरमवृत्तेरेव तत्सत्वाच्च । उक्तं च सुरेश्वरवार्तिके–

व्याप्यो वृत्तिफलाभ्यां यः प्रमेयः स घटो भवेत् ।
ब्रह्मामेयं फलाभावात् द्रष्टव्यं वृत्तिसत्वतः ।। इति ।

स्वतोऽज्ञानाविरोधिनो ज्ञानस्वभावानुपपत्तेश्च ।।

अज्ञानमहमर्थनिष्ठमिति प्रतिपादनम्

'अहमज्ञः' इति धर्मिग्राहकेणाहमर्थनिष्ठतयैवाज्ञानसिद्धेश्च । न च स्थौल्याश्रयदेहैक्याध्यासादहं स्थूल इतिवदज्ञानाश्रयचिदैक्याध्यासात् दग्धृत्वायसोरेकाग्निसंबन्धादयो दहतीतिवत् अज्ञानाहंकारयोरेकविदध्यासाद्वा अहमज्ञ इति धीर्भ्रान्तिरिति वाच्यम् । अज्ञानाकल्पितस्याहमर्थस्य जीवस्यैवाज्ञानाश्रयत्वेन तथा प्रतीत्युपपत्त्या त्वदीयकुसृष्टौ मानाभावात् ।

न च 'मायां तु प्रकृतिं विद्यान्मायिनं च महेश्वरं'[१] इति श्रुतिस्तत्र मानम् । अज्ञानित्वमहेश्वरत्वयोर्विरुद्धत्वात् । मायाशब्दस्य प्रधानपरत्वस्योक्तत्वाच्च ।।

---

१. श्वेता.उ. ४.१०.

### शुद्धस्याज्ञानाश्रयत्वे श्रुतिविरोधाभिधानं, प्रतिबिम्बपक्षपातित्वनिराकरणं च

किञ्च शुद्धस्याज्ञानाश्रयत्वे निरवद्यत्वादिश्रुतिविरोधः । न चोपाधेः प्रतिबिम्बपक्षपातित्वात् प्रतिबिम्बे जीव एवाज्ञानकार्यम् न ब्रह्मणीत्यज्ञानकार्यमेव श्रुत्या निषिध्यते नाज्ञानमिति वाच्यम् । 'निरनिष्टो निरवद्यः'[१] 'शोकं मोहमत्येति'[२] इति कार्यस्य पृथङ्निषेधात्। तत्पक्षपातित्वस्यापि दुर्वचनत्वाच्च ।।

### अतिशयेनकार्यकरत्वं प्रतिबिम्बत्वमित्यद्वैतसिद्ध्युक्तपरिहारखण्डनम्

एतेनातिशयेन तत्र कार्यकरत्वमेव तत्पक्षपातित्वं स्थौल्याद्यवभासरूपकार्यकरत्वेन दर्पणादेः प्रतिबिम्बपक्षपातित्ववत् कर्तृत्वभोक्तृत्वादिसंसाररूपकार्यकरत्वेनाविद्यायामपि प्रतिबिम्बपक्षपातित्वोपपत्तिरिति निरस्तम् । अज्ञानतत्कार्यभ्रान्तितत्त्वज्ञानादीनां सामानाधिकरण्यनियमात् । भोक्तृत्वादिबन्धस्य मोक्षसामानाधिकरण्यनियमाच्च । न हि प्रतिबिम्बस्य मोक्षः । अतो मोक्षान्वयिन एव भोक्तृत्वादिकं युक्तम् ।।

किञ्च 'तुरीयं सर्वदृक् सदा'[३] इति श्रुत्युक्तस्य शुद्धनिष्ठसार्वज्ञ्यानुपपत्तिः। न च सर्वेषां दृग्रूपचैतन्यमित्युच्यते न तु सार्वज्ञ्यम् । सर्वेति वैय्यर्थ्यात् । चैतन्यस्य सर्वानुस्यूतत्वेन तुरीयमिति वैय्यर्थ्याच्च ।।

---

१. न्या.वि. १.४.१. इत्यत्रोदाहृता श्रुतिः ।

२. बृ.उ. ५.५.१.

३. माण्ड.उ. २.४.

जीवस्याज्ञानाश्रयत्वनिराकरणम् अद्वैतसिद्ध्युक्तपरिहारखण्डनं च

न चास्तु जीवोऽविद्याश्रयः । तस्याविद्यावच्छिन्नस्य तत्प्रतिबिम्बितस्य वाऽविद्याधीनत्वेनान्योन्याश्रयात् । न चान्योन्याश्रय उत्पत्तौ ज्ञप्तौ वा । नाद्यः । उभयोरनादित्वात् । न द्वितीयः । अज्ञानस्य चिद्भास्यत्वेऽपि चितः स्वप्रकाशत्वेन तदभास्यत्वात् । नान्त्यः । असिद्धेरिति वाच्यम् । स्थितावन्योन्याश्रयात् । परस्परसापेक्षस्थितिकत्वाभावेऽन्योन्याधीनत्वस्यैवाभावापत्तेः । न च समानकालीनयोरप्यवच्छेद्यावच्छेदकभावमात्रेण तदुपपत्तिर्घटतदवच्छिन्नाकाशयोरिवेति वाच्यम् । तदाकाशस्य घटाधीनत्वेऽपि घटस्य तदाकाशाधीनत्वाभावेन दृष्टान्तासिद्धेः । न च चैतन्यमपि नाज्ञानाधीनम् । अज्ञानानधीनचैतन्यस्य शुद्धत्वेन जीवत्वाभावाज्जीवाज्ञानमतहानेः ॥

॥ इत्यज्ञानाश्रयत्वभङ्गः ॥

## ३२. अथ परमतेऽविद्याविषयत्वभङ्गः

शुद्धस्याज्ञानविषयत्वखण्डनम्

अज्ञानविषयोऽपि दुर्वचः । न च शुद्धमेव तद्विषयोऽन्यस्याज्ञानकल्प्यत्वात् । स्वप्रकाशे सदा भासमाने आवरणकृत्याभावात् । न च शुद्धस्य प्रकाशमानत्वेऽपि पूर्णाद्याकारेणाप्रकाशायावरणकल्पनम् । निर्विशेषे आकारस्यासत्वात् ॥

किञ्च दीपावरकघटादिवच्चैतन्यावरकाविद्या चैतन्यस्यान्यसंबन्धं प्रतिबध्नातु । अन्यं प्रति चैतन्यमाच्छादयतु । न तु चैतन्यं प्रत्येव

चैतन्यं प्रकाशविरोधिनी । न हि घटावृतो दीपो न प्रकाशते । तमःसंबन्धापातात् । न च कल्पितभेदं जीवं प्रति शुद्धचैतन्यमाव्रियते। आवरणं विना भेदकल्पनस्यैवासंभवात् । न चावरणभेदयोरनादित्वान्न पूर्वोत्तरभावः । समकालिकयोरप्यन्योन्यापेक्षस्थितिकत्वाभ्युपगमेऽसिद्ध्यापत्तेः । अन्यथाऽविद्या स्वाश्रया स्वविषया च स्यात् ।।

स्वप्रकाशेऽज्ञानासम्भवप्रदर्शनम्

किञ्चालोके तम इव स्वप्रकाशेऽज्ञानावरणमसम्भवि । न च वृत्त्यारूढमेव चैतन्यमज्ञानविरोधि । दुःखाद्याकारवृत्तेरभावेनाज्ञानावरणापत्तेः । तत्र हि साक्षी एवाज्ञानविरोधी ।।

सिद्धान्तेऽज्ञानोपपादनम्

न च सिद्धान्तेऽपि स्वप्रकाशे जीवे कथमावरणम् । सिद्धान्ते ह्येतस्मिंस्तद्धीहेतोरविद्याया ईश्वरप्रसादादेव निवृत्त्यङ्गीकारात् । परेण त्वदृष्टविधया ज्ञानेनाज्ञानस्य निवर्त्यत्वानङ्गीकाराच्च ।।

साक्षिणोऽज्ञानाविरोधित्वे दोषकथनम्

यत्तु साक्षिणि यदज्ञानविरोधित्वमनुभूयते तन्नाज्ञाननिवर्तकत्वनिबन्धनं किन्तु स्वविषयदुःखादौ यावत्सत्त्वं प्रकाशादज्ञानाप्रसक्तिनिबन्धनमिति । तन्न । साक्षिणोऽज्ञानानिवर्तकत्वे ज्ञानाप्रसक्तेरेवासंभवात् ।।

सामान्यतो ज्ञानं विशेषतो ज्ञानाभावसमर्थनम्

न च 'मामहं न जानामि' इति प्रकाशमानेऽज्ञानमनुभूयते । 'दुःखं न जानामि' इत्यादाविव ज्ञानाभावपरत्वात् । न च

धर्मिप्रतियोगिनोर्ज्ञानाज्ञानाभ्यां ज्ञानाभावज्ञानासंभवः । ज्ञानविरोधित्वेनाज्ञानज्ञानस्यापि धर्मिप्रतियोगिज्ञानसापेक्षत्वेन व्याघातसाम्यात् । न चाज्ञानविषयघटादेरज्ञानविरोधिनोऽज्ञानस्य च ज्ञानं साक्षिरूपम् । तच्च नाज्ञानविरोधीति वाच्यम् । धर्मिप्रतियोगिनोर्ज्ञानस्य ज्ञानाभावाविरोधिनः संभवेन क्षत्यभावात् । न च न जानामीति ज्ञानसामान्याभव एव प्रतीयते । तवापि ज्ञानसामान्यविरोधित्वेनैवाज्ञानप्रतीतेः । अतः सामान्यतो ज्ञानं विशेषतो ज्ञानाभाव इति स्वीकार्यम् ।।

### वृत्तेः चिद्विषयत्वेनाज्ञानासंभवप्रदर्शनम्

किञ्च त्वन्मते घटादिवृत्तिसामान्यस्य चिद्विषयकत्वेन सुतरामज्ञानासंभवः । विशिष्टज्ञानेन विशेष्याज्ञानस्यापि निवृत्तिसंभवात् । न हि दण्डी चैत्र इति वृत्त्या चैत्राज्ञानं न निवर्तते ।।

### श्रवणादिजन्यज्ञानस्याज्ञाननिवर्तकत्वं निराकरणपूर्वं अज्ञानाश्रयत्वप्रदर्शनम्

न च श्रवणादिजन्यज्ञानमज्ञाननिवर्तकम् । भ्रमविषयानधिकविषयत्वे श्रवणादिवैय्यर्थ्यात् । अदृष्टविधया निवर्तकत्वापत्त्याऽज्ञानादेः सत्यत्वापत्तेश्च । अतोऽनादिभावरूपा परेशाधीना जीवपूर्णानन्देश्वरयोः प्रकाशं जीवं प्रति विघटयन्तीश्वरप्रसादनिवर्त्या परमार्थसत्यप्रत्यक्षा अविद्या नित्यनिरवद्यसर्वेश्वरात् सत्यानान्तगुणालयात् स्वतन्त्राद्वस्तुनः कालत्रयभिन्ने जीवे स्वीकार्या ।।

।। इति परमतेऽविद्याविषयत्वभङ्गः ।।

## ३३. अथ अनिर्वाच्यत्वे प्रमाणभङ्गः

### अनिर्वाच्यत्वस्वरूपखण्डनम्

न च निर्वाच्यैवाविद्या । तत्त्वं वा[१] सद्विलक्षणत्वे सत्यसद्विलक्षणत्वे सति सदसद्विलक्षणत्वं सत्वासत्वाभ्यां विचारासहत्वे सति सदसत्वेन विचारासहत्वं वेति चेन्न । लाघवात् परस्परविरहरूपयोरेकत्र निषेधस्य व्याहतत्वात् । न चातात्विको निषेधसमुच्चयो न विरुद्धः। तादृशविधिसमुच्चयस्यैवापत्तेः । विचारासहत्वमात्रेण मिथ्यात्वे ब्रह्मणः सच्चिदादिरूपताया दुर्निरूपत्वेन मिथ्यात्वापत्तेः । इक्षुरसादिमाधुर्यस्य दुर्निरूपत्वेऽपि मिथ्यात्वासिद्धेश्च ।

### अनिर्वाच्यत्वे प्रत्यक्षभङ्गः

न च सत्वादिना दुर्निरुपत्वं मिथ्यात्वे बीजं, नतु दुर्निरूपत्वमात्रम्। निर्धर्मकब्रह्मणोऽपि सत्वादिना दुर्निरूपत्वात् । अनिर्वाच्ये वस्तुनि मानाभावात् । न च 'मिथ्यैव शुक्तौ रूप्यमभात्' इति प्रत्यक्षं मानम् । 'एतावन्तं कालमसदेव रूप्यमभात्' इत्यसत्वस्यैव तत्रानुभवात् । न चानिर्वाच्यत्वैकदेशसत्वाभावविषयत्वेनासद्बुध्युपपत्तिः । असद्भेदमादाय सदेव रूप्यमभादित्यादिप्रतीत्यापत्तेश्च। 'सत्यं ज्ञानं' इत्यत्र सत्यमित्यस्यासद्भेदविषयत्वापत्त्या ब्रह्मणः सद्रूपत्वासिद्ध्यापत्तेश्च ।।

### अनिर्वाच्येऽनुमानप्रमाणनिराकरणम्

ननु 'विमतं सत्वरहितत्वे सत्यसत्वरहितत्वे सति सत्वासत्वरहितं बाध्यत्वात् दोषप्रयुक्तभानत्वद्वा । यन्नैवं तन्नैवं यथा ब्रह्म' इति

---

१. 'च' इति स्यादिति भाति ।

चेन्न । सत्वासत्वयोः परस्परविरहरूपयोरभावस्येकत्र व्याहतत्वात्। ब्रह्मवत्सत्वराहित्येऽपि सद्रूपत्वेनानिर्वाच्यत्वाभावोपपत्त्याऽर्थान्तराच्च। 'विमतं सदासदात्मकं बाध्यत्वाद्व्यतिरेकेण ब्रह्मवत्' इत्याभाससाम्यात्। 'विमतमसत् सत्वानधिकरणत्वात् शशशृङ्गवत्' इति प्रतिरोधाच्च । साध्याप्रसिद्धेश्च ।

सत्वासत्वरहितवस्तुसाधकधर्मत्वहेतुनिराकरणम्

न च 'सत्वासत्वे समानाधिकरणात्यन्ताभावप्रतियोगिनी धर्मत्वात् रूपरसवत्' । 'सत्वमसत्वानधिकरणानिष्ठं असत्वं वा सत्वानधिरणानिष्ठं धर्मत्वात् रूपवत्' इति सामान्यतः साध्यप्रसिद्धिरिति वाच्यम् । 'सत्वासत्वे समानाधिकरणात्यन्ताभावप्रतियोगिनी न परस्परात्यन्ताभाव(व)त्वात् घटत्वाघटत्ववत्' । 'असत्वं सत्वानधिकरणानिष्ठं न तत्प्रतिषेधरूपत्वात् संमतवत्' इति प्रतिरोधात्। एवं सत्वं पक्षीकृत्य प्रयोक्तव्यम् ।

'घटत्वाघटत्वे समानाधिकरणात्यन्ताभावप्रतियोगिनी धर्मत्वात् रूपरसवत्' । 'कल्पितत्वमकल्पितत्वानधिकरणानिष्ठं धर्मत्वात् रूपरसवत्' इत्याद्याभाससाम्याच्च ।

सद्विलक्षणत्वासद्विलक्षणत्वकल्पितत्वाकल्पितत्वदृश्यत्वा दृश्यत वदुर्निरूपत्वादुर्निरूपत्वादौ व्यभिचाराच्च । ज्ञेयत्वाद्यभावाङ्गीकारेऽत्यन्ताभावप्रतियोगित्वे व्यभिचाराच्च । न च घटत्वाघटत्वाद्यभावोऽप्येकत्र मम साध्य इति नाभाससाम्यव्यभिचारादिदोषः । कल्पितत्वाकल्पितत्वादीनामभावमेकत्र स्वीकुर्वाणो हि क्षपणक इव व्याघातेनैव निरस्तः ।।

### व्यतिरेकप्रतियोगिमात्रवृत्तित्व-अशेषवृत्तित्वादिति अद्वैतसिद्ध्युक्तानिर्वाच्यसाधकहेतुद्वयनिराकरणम्

ननु 'प्रपञ्चनिष्ठव्यतिरेकप्रतियोगित्वं सत्वासत्वोभयवृत्ति प्रपञ्चनिष्ठव्यतिरेकप्रतियोगिमात्रवृत्तित्वात् । व्यवहार्यत्वात्' । 'सदसत्वोभयवृत्तित्वं प्रपञ्चनिष्ठव्यतिरेकप्रतियोगित्ववृत्ति सत्वासत्वोभयवृत्यशेषवृत्तित्वात् भेदप्रतियोगित्ववत्' इति चेन्न । आद्ये प्रपपञ्चनिष्ठव्यतिरेकप्रतियोगित्वं सत्वासत्वोभयवृत्ति न व्यासज्यवृत्त्यादिभिन्नत्वे सति व्यतिरेकिधर्मत्वादित्यादि, प्रपञ्चनिष्ठव्यतिरेकप्रतियोगित्वं कल्पितत्वाकल्पितत्वाद्युभयवृत्ति प्रपञ्चनिष्ठव्य तिरेकप्रतियोगिमात्रवृत्तित्वात् व्यवहार्यत्वादित्याभाससाम्याच्चेति प्रतिरोधात्, ॥

द्वितीयेऽपि कल्पितत्वाकल्पितत्वचेतनत्वाचेतनत्व शून्यत्वाशून्यत्वदृश्यत्वात् । परस्परविरुद्धव्यतिरेकप्रतियोगित्वत्वाद्वा घटत्वाघटत्वव्यतिरेकप्रतियोगित्ववत् उक्तप्रतियोगित्वं सत्वासत्वोभयवृत्ति न (अ)विशिष्टव्यासज्यवृत्तिव्यधिकरणधर्मानवच्छिन्नप्रतियोगिताकतदधिकरणाधिकरणकाभावप्रतियोगित्वात् । यदेवं तदेवमिति । दृश्यत्वादृश्यत्वाद्युभवृत्तित्वं प्रपञ्चनिष्ठव्यतिरेकप्रतियोगित्ववृत्ति कल्पितत्वाद्युभयवृत्त्यशेषवृत्तित्वात् भेदप्रतियोगित्ववदित्याभाससाम्यात् ॥

### परमते प्रामाणिकत्वाबाध्यत्वयोः व्याप्त्यभावप्रतिपादनम्

ननु विमतं रूप्यादि सच्चेन्न बाध्येत, अच्चेन्न प्रतीयेत । बाध्यते प्रतीयते चातः सदसद्विलक्षणत्वादनिर्वाच्यम् । सत्वं च प्रामाणिकत्वम्। प्रामाणत्वं च तत्वावेदकत्वम् । तच्च ल्लक्षणया

शुद्धब्रह्मबोधकवेदान्त एवेति चेन्न । स्वतःप्रकाशमाने ब्रह्मणि चिन्मात्रे वैय्यर्थ्येन प्रमाणाप्रवृत्त्या प्रमाणिकत्वाबाध्यतयोर्व्याप्त्यसिद्धेः। प्रत्युत ब्रह्मभिन्न एव प्रामाणिकत्वस्य सत्वेन तस्य बाध्यत्वेन सह व्याप्तेश्च । न च ब्रह्मणः स्वप्रकाशत्वेऽपि व्यवहारप्रतिबन्धकाज्ञान-निवृत्त्यर्थं प्रमाणप्रवृत्तिः सफला । स्वप्रकाशे व्यवहारप्रतिबन्ध-काज्ञानासंभवात् ॥

अबाध्यत्वं सत्वमिति पक्षे दोषकथनम्

प्रत्यक्षस्य अप्रमाणत्वे हि तद्बाधनिबन्धनं शुक्तिरूप्यादेरप्रामाणिकत्वं न स्यात् । न च बाध्यान्यूनसत्ताकविषयकत्वं बाधकत्वे तन्त्रं नतु तत्त्वावेदकमिति वाच्यम् । बाध्यत्वाविशेषणशुक्ते रूप्यतोऽधिक-सत्ताकत्वसङ्केतस्याप्रामाणिकत्वेन विनिगमनाविरहेण समसत्ताक-विषयकधियोर्नियमेनैकेनापरस्य बाधानुपपत्तेः ॥

न चाबाध्यत्वं सत्वम् । अबाध्यं चेन्न बाध्यतेत्यापाद्यापदक-योरभेदापत्तेः । न वा बाध्यत्वं त्रैकालिकनिषेधाप्रतियोगित्वं तेन च विपरीतप्रमाविषयत्वाभावो व्यवहारो वाऽऽपाद्यत इति नापाद्यापदकयोरभेद इति वाच्यम् । त्वन्मते रूप्याभावशुक्त्यादेर्मिथ्यात्वेन तद्धियः प्रमात्वासिद्ध्या रूप्ये विपरीतप्रमाविषयत्वासिद्धेः । ब्रह्मणि प्रपञ्चाभावधियोऽस्मन्मते प्रमात्वासिद्ध्या तत्रापि विपरीतप्रमा-विषयत्वासिद्धेश्च । व्यवहाररूपापाद्यव्यतिरेकस्य जगत्यसिद्धेः । बाध्यत्वेन घटादेर्व्यवह्रियमाणत्वात् ॥

(न क्षतिरिरितिवदपि न ब्रह्मभिन्नस्य त्वन्मते बाध्यत्वेन धर्मादौ श्रुतिमुख्यतात्पर्यविषयत्वस्यासत्वेनैव व्याप्तेर्विपर्ययापर्यवसानात् ॥

यत्तु स्वाधिकरणावृत्तित्रैकालिकनिषेधाप्रतियोगि विश्वं चेत् स्वाधिकरणे निषेध्यं न स्यात् । निषेध्यं च, तस्मात् स्वाधिकरणवृत्तित्रैकालिकानिषेधप्रतियोगीति । तन्न । आपाद्यापदक योरवैशिष्ट्यापत्तेः । यदपि सच्चेत् श्रुतिमुख्यतात्पर्यविषयत्ववत् स्यात् ब्रह्मवत् । न चोक्तविषयतावत्, तस्मात् श्रुतिबाध्यत्वान्न सत् एवं परकीयस्य सत्वव्यवहारस्य प्रपञ्चे सत्वेऽपि)[१]

न बाध्येत इत्यत्र बाधस्वरूनिराकरणम्

किञ्च 'न बाध्येत' इत्यत्र बाधः किं ज्ञानेन निवृत्तिः त्रैकालिकनिषेधो वा । नाद्यः । ज्ञाननिवर्त्यत्वस्य सत्वेनैव व्याप्तेरुक्तत्वात् । शुक्तिरूप्यादेर्ज्ञाननिवर्त्यत्वासिद्ध्येष्टापत्तेश्च । न द्वितीयः । पारमार्थिकत्वेनोक्तनिषेधप्रतियोगित्वस्य 'स एवाधस्तात् स एवोपरिष्टात्' इति प्रतीतोपाधिके ब्रह्मण्यपि सत्वेन सत्वस्य बाधेनैव व्याप्तेः । स्वरूपेणोक्तनिषेधप्रतियोगित्वस्य प्रपञ्चे त्वद्रीत्या शुक्तिरूप्ये चाभावेनापाद्यव्यतिरेकानिर्णयेन तर्कस्यासंभवात् ।।

असच्चेन्न प्रतीयेत इत्यत्रासत्वं किमिति विकल्प्य खण्डनम्

'असच्चेत्' इत्यत्रासत्वं किं निरूपाख्यत्वं पदवृत्त्यविषयत्वरूपं निःस्वरूपत्वं वा । नाद्यः । पदवृत्त्यविषये वाक्यार्थे प्रतीत्यभावाभावेन व्यभिचारात् । न च वाक्यार्थरूपपदवृत्तिविषयत्वस्य सत्वेन तदविषयत्वाभावान्न व्यभिचारः । निरुपाख्यपदवृत्त्यविषयादि-पदवृत्तिविषयताया निरुपाख्येऽपि संभवात् । न द्वितीयः । पारमार्थिकत्वाकारेण त्रैकालिकनिषेधप्रतियोगित्वस्य 'स एवाधस्तात्' इत्यादिप्रतीतोपाधिके निर्धर्मके ब्रह्मण्यपि सत्वेन स्वरूपेणैवोक्त-

१. मातृकायामेव प्रघट्टकोऽयं कुण्डलीकृतः अनन्वितश्च ।

निषेधप्रतियोगित्वं मिथ्यात्वं हि वाच्यम् । तथा च शुक्तिरूप्यादेर्निःस्वरूपत्वं दुर्वारम् ।।

'न प्रतीयेत' इत्यत्र प्रतीत्याभावापादनासम्भवप्रदर्शनम्

'न प्रतीयेत' इत्यत्र प्रतीतिसामान्याभावापादनं न युक्तम् । 'असन्नृशृङ्गं' इत्यादिवाक्यादसतोऽपि प्रतीतेः । अन्यथाऽसद्वैलक्षण्याज्ञानस्यासत्प्रतीतिनिरासस्यायोगात् । असतोऽसत्वेनाप्रतीतावसद्व्यवहारानुपपत्तेश्च । न चासत्प्रतीत्यभावे असन्नृशृङ्गमिति विकल्पमात्रेण सर्वोपपत्तिः । विकल्पस्य ज्ञानान्यत्वे ततः संस्कारस्मृत्याद्यनुपपत्तेः । ज्ञानरूपवृत्ताविव विकल्पेऽप्यनुपपत्तेस्तुल्यत्वेन विकल्पाङ्गीकारज्ञानानंगीकारादिवैषम्यस्य निर्युक्तिकत्वात् । न च विकल्पस्य ज्ञानत्वे तदन्यविज्ञानविषयत्वाभाव आपाद्यः । विकल्पविषयत्ववत् तदन्यज्ञानविषयत्वसंभवेनापादनस्याप्रयोजकत्वात् ।।

सत्वेन प्रतीत्यभाव आपाद्य इति पक्षखण्डनम्

न च सत्वेन प्रतीत्यभाव एवापाद्यः । येन पुंसा शशे शृङ्गाभावो नावगतः तस्य गोशृङ्गमस्तीति वाक्यादिव शशशृङ्गमस्तीति वाक्यादपि भ्रान्तिदर्शनात् । न हि गडधषादिशब्दवदत्र पदार्थानुपस्थापकत्वं न वा कुण्डमजाजिनमित्यादिवदन्वयाबोधकत्वम् । अयोग्यताज्ञानाभावस्य योग्यताज्ञानस्य वा आकांक्षादिसामग्रीसध्रीचीनस्य सत्वात् । अन्यथा प्रवृत्याद्यनुपपत्तेः । न च शशशृङ्गमस्तीत्यत्र शशशृङ्गस्य शृङ्गे शशीयत्वस्य वाऽऽरोपेणानिर्वाच्यविषयत्वम् । असच्छशशृङ्गमिति वाक्यश्रवणानन्तरं विकल्पविषयाखण्डशशशृङ्गादिकमनिर्वाच्यानात्मकं निःस्वरूपमिति वाच्यम् । गवि शशशृङ्गमस्तीत्यत्राप्यखण्डशशशृङ्गप्रतीतेः। प्रमात्वाप्रमात्वाभ्यामेव तदुक्तप्रतीत्योर्वैलक्षण्यात् ।।

### शशशृङ्गपदान्यपार्थकानीति तार्किकमतखण्डनम्

यत्तु शशशृङ्गादिपदान्यपार्थकानीति तार्किका आहुः । तत्र अनन्वयानिश्चयदशायां प्रवृत्तिपर्यन्तानुभवविरोधापत्तेः । नन्वनन्वयानिश्चयदशायामपि नाखण्डशशशृङ्गादिबोधकत्वम् । किन्तु सन्मात्रगोचरव्यधिकरणप्रकारकज्ञानं वा सदुपरागेण सद्गोचरज्ञानं वा । केवलासद्भाने सामग्रीविरहात् । उक्तं हि बौद्धधिकारे– 'सङ्गतिग्रहणाभावाच्छशशृङ्गादिपदानामबोधकता' इति चेन्न । व्यधिकरणज्ञानस्याप्यसत्संसर्गविषयकत्वेन सन्मात्रगोचरत्वासिद्धेः । सामग्र्यां सत्यां सदुपरागेणेव स्वातन्त्र्येणापि भानसंभवात् । शशशृङ्गपदस्य यौगिकत्वेन पृथक्संगत्यनपेक्षणाच्च । न चावयवशक्तिप्राधान्येन बोधनेऽखंडासद्बोधानुपपत्तिः । अवयवानां स्वशक्यपुरस्कारेण प्रत्यायकत्वादिति वाच्यम् । शशशृङ्गयोः शशशृङ्गसंसर्गस्यासतो बोधनात् । अन्यथा 'शशशृङ्गमसत्' 'शशशृङ्गं नास्ति' इत्यादिवाक्यानामप्यबोधकतापत्तेः । न चैषां शशे शृङ्गं नास्तीत्यर्थः । गवि शशशृङ्गं नास्तीत्यस्यानुपपत्तेः ।।

### अपरोक्षाभावः सत्वेनापरोक्षाभावो वा आपाद्य इति पक्षे दोषकथनम्

न चापरोक्षज्ञानाभावः सत्वेनापरोक्षाभावो वा आपाद्यः । स्वरूपेणैव त्रैकालिकनिषेधप्रतियोगिनो रूप्यादेरत्यन्तासत एवापरोक्षत्वेन विपर्ययापर्यवसानात् । न चेन्द्रियसन्निकर्षादिरूपायाः प्रत्यक्षसामान्यसामग्र्या असत्यभावात् कथं तत्प्रत्यक्षम् । ज्ञानसमशरीरे प्रातीतिकेऽपि सन्निकर्षाभावात् । न हि धीमात्रशरीरं रूप्यं स्वज्ञानात्प्रागस्ति । न च मन्मते ज्ञातैकसति रूप्यादौ साक्ष्यपरोक्षे अज्ञाननाशकान्तर्वृत्तिप्रयोजकसन्निकर्षानुपयोगः । चाक्षुषवृत्तिं विना साक्षिणा तद्ग्रहणासंभवात् । अन्यथाऽन्धस्यापि शुक्तिरूप्यज्ञानापत्तेः ।

न चासद्रूप्यस्यापरोक्ष्ये नृशृङ्गादेरपि तदापत्तिर्विशेषाभावात् । सविशेषत्वे चासत्वव्याकोप इति वाच्यम् । असतः सता निःस्वरूपत्वादिनेव नृशृङ्गशशशृङ्गादीनामपि परस्परनृशृङ्गशशशृङ्गशब्दैरेव परोक्षप्रतीतिव्यवहारविषयत्वादेर्विशेषस्यासत्वाविरोधिनो बुद्धिसिद्धस्य संभवात् ।।

न च सर्वसामर्थ्यहीनस्यासतः सता ज्ञानेन कथं संबन्धो विषयत्वस्य तत्र वक्तुमशक्यत्वात् । 'भाति' 'प्रतीयते' इत्यादिकर्तृत्वकर्मत्वादिविरोधाच्चेति वाच्यम् । अतीतादेः स्मृत्यनु-मित्यादिविषयत्वादिवदुपपत्तेः । न च तत्र प्रतीत्यादेरेव विषयत्वं न त्वतीतादेर्विषयत्वम् । प्रकृतेऽपि तुल्यत्वात् । न च शशशृङ्गस्य नरि भ्रमदशायां नृशृङ्गशब्देनेव शशशृङ्गशब्देनापि नृशृङ्गस्य प्रतीय-मानत्वेन नृशृङ्गादिशब्दैरेव प्रतीयमानत्वादेरपि परस्परं विशेषो वक्तुमशक्य इति वाच्यम् । शशशृङ्गशब्देन प्रतीयमानस्याज्ञात-सत्ताशून्यस्यानृशृङ्गस्यासंभवात् ।।

रूप्ये प्रतीतयोः इदन्त्वव्यावहारिकत्वयोरसत्वोपपादनम्

किञ्च अनिदमि रूप्ये प्रातिभासिके यदिदन्त्वं व्यावहारिकसत्त्वं च तत् द्वयं न तावत् सत् । अद्वैतव्याकोपात् । नाप्यनिर्वाच्यम्। तथा सति तस्यासद्वैलक्षण्यार्थं प्रातिभासिकत्वाय सत्वेन प्रतीत्या भाव्यम् । एवं च तदपि सत्वमनिर्वाच्यं चेत् तस्यापि सत्वेन प्रतीत्या भाव्यमित्यनवस्था । तथा च तयोरसत्वं वाच्यम् । टीकायां चेदंत्वसत्वयोः सत्वायोगादनिर्वाच्यत्वं तदप्रतीतौ प्रवृत्त्ययोगात् सत्वेन भाने च तस्मिन्नपि सत्वादिविक ल्पप्रसरेणानवस्थानात् इदन्त्वव्यावहारिकत्वयोरसत्वमित्युक्तम् ।।

न च त्वत्पक्षेऽपि असति रूप्ये यत्सत्वं प्रतीयते तस्य सत्वायोगादसत्वे च तथैव प्रतीतौ प्रवृत्त्यनुपपत्तिः । सत्वेन प्रतीतावप्यसत्वसिद्धेश्च[१] । न चासति निषेधप्रतियोगित्वासंभवेन रूप्यादेरनिर्वाच्यत्वम् । अविद्यमानघटादौ ध्वंसादिप्रतियोगित्ववद-सत्यत्यन्ताभाप्रतियोगित्वसंभवात् । न चानित्यो घटोऽस्तीति विद्यमान एव घटे ध्वंसप्रतियोत्वं भाति । भाविध्वंसप्रतियोगित्वा-भिप्रायेणैव तथा व्यवहारात् । तदजानतां तथा व्यवहाराभावाच्च । स्वरूपेणैव त्रैकालिकनिषेधप्रतियोगिनोऽ-निर्वाच्यस्यापि तदनुप-पत्तेस्तुल्यत्वाच्च । न च यत्किञ्चित्कालाबाध्यत्वमनिर्वाच्येऽस्ति । किञ्चित्कालसत्वस्य ह्यनित्यत्वमेव स्यात् ॥

न च शशशृङ्गास्तित्वस्यायोग्यत्वेन आपादयितुमशक्यत्वात् कथं तदभावः प्रत्यक्षः । शृङ्गमात्रस्य योग्यत्वनियमेनापादनसंभवात् । न च शृङ्गत्वस्य योग्यत्वव्याप्यत्वेऽपि शशशृङ्गास्तित्वं न तद्व्याप्तम् । योग्यनिष्ठस्य शशीयत्वस्यापि योग्यत्वात् । शब्देनैव तदभावसिद्ध्या तत् प्रत्यक्षाभावेऽपि क्षत्यभावाच्च ॥

प्रतितर्कपराहतिप्रदर्शनम् अद्वैतसिद्ध्युक्तप्रयोजनखण्डनं च

अपि च असद्विलक्षणं चेत् न बाध्येत सद्विलक्षणं चेत् न प्रतीयेत। अतोऽनुपपत्त्या शुक्तिरजतादावनिर्वाच्यत्वाभाव एव किं न सिद्ध्येत् । न चाबाधाप्रतीत्योर्लाघवात् सत्वासत्वे प्रयोजके न त्वसद्वैलक्षण्यसद्वैलक्षण्ये गौरवादिति वाच्यम् । बाधप्रतीत्योरेव

१. अत्र पङ्क्तिर्लुप्तेति भाति । 'सत्वेन प्रतीतावनवस्थानादिति वाच्यम् । (परमतेऽनिर्वाच्यसत्वस्य सत्वेनाभावे प्रातिभासिकत्वासिद्धिवत्) मन्मतेऽसतः सत्वस्य सत्वेनाप्रतीतावसत्वसिद्धेश्च' एवं पङ्क्तिविन्यासः स्यादिति भाति ।

प्रथमोपस्थितयोः प्रयोजकजिज्ञासायामसत्वसत्वयोः प्रयोजकत्वं कल्प्यते लाघवात् । प्रथमोपस्थितत्वाच्च । न तु सद्विलक्षणत्वादे-गौरवात्। चरमोपस्थितत्वाच्च । तदनन्तरं च भावप्रयोजकाभावादेव अभावोपपत्तौ न प्रयोजकान्तरकल्पना । नृशृङ्गादेरसत्वेऽपि न बाधः। प्रसक्त्यभवात् । न च प्रतीतौ न सत्वं प्रयोजकं उभयमते शुक्तिरूप्येऽप्यभावादिति वाच्यम् । रूप्ये एव सत्वस्य प्रतीत्याऽऽ-पाद्यमानत्वात् । न चासत्वं न बाधे प्रयोजकं नृशृङ्गादौ असत्वसत्वेऽपि बाधादर्शनादिति वाच्यम् । यथा तव मते नृशृङ्गादौ अबाध्ये बाधप्रयोजकत्वेनाभिमतस्य सद्वैलक्षण्यस्य सत्वेऽपि तस्य बाधं प्रति प्रयोजकत्वाक्षतिस्तथाऽसत्वस्य नृशृङ्गादौ सत्वेऽपि प्रयोजकत्वक्षतेरभावादित्यवधेयम् ।।

'नासदासीत्' इति श्रुतेरनिर्वाच्यत्वविषकत्वनिषेधः

न च 'नासदासीन्नो सदासीत्'[१] इत्यादिश्रुतयोऽनिर्वाच्यत्वे मानम्। सदसच्छब्दयोः पञ्चभूतपरत्वात् । 'न सत्तन्नासदुच्यते'[२] इत्यादौ भूते प्रयोगात् । 'यदन्यद्वायोरन्तरिक्षाच्चैतत् सत् वायुरन्तरिक्षं चासत्'[३] इति श्रुतेश्च । अन्यथा 'नासदासीत्' इत्यत्राप्रसक्त-प्रतिषेधापत्तिः स्यात् । न च 'नासदासीत्' इत्यनेन सद्भिन्नत्वे उक्तेऽसत्वप्रसक्तिः । 'तदानीं' इति वैय्यर्थ्यापत्तेः । न च 'नासीद्रजो नो व्योम' इति रजोनिषेधादावेव तदन्वयः । 'नो सदासीत्' इत्यनेनैव रजःप्रभृतिनिषेधसिद्धौ पृथकृतन्निषेधवैय्यर्थ्यात् । न च 'नो सदासीत्' इत्यत्र सच्छब्दस्य परमार्थसत्परत्वेन व्यावहारिकसतो

---

१. ऋ.सं. १०.१२९..१.

२. तत्त्वोद्योते उदहृता पैङ्गिश्रुतिः ।

३. तत्त्वो. उदाहृतमाध्यन्दिनश्रुतिः ।

रजःप्रभृतिनिषेधस्य न ततः प्राप्तिः । रजप्रभृतीनां स्वरूपेण तमसश्च पारमार्थिकत्वेन निषेध इति कुचोद्ये त्वद्दुराशाया एव बीजत्वात् ।।

'आनीदवातं स्वधया तदेकं'[१] इति वाक्यशेषाद्ब्रह्मणोऽप्यनिर्वाच्यत्वापत्तेश्च । न च ब्रह्मासत्वं श्रुत्यन्तरविरुद्धम् । 'विश्वं सत्यं'[२] 'सत्याद्भूतानि जतानि सत्यं भूतमयं जगत्' इति श्रुतिस्मृत्योर्विरोधस्य प्रधानाद्यसत्यत्वेऽपि सत्वात् इति ।।

।। इति अनिर्वाच्यत्वे प्रमाणभङ्गः ।।

## ३४. अथाभिनवान्यथाख्यातिः

### शुक्तिरजस्यात्यन्तासत्वे प्रत्यक्षानुमानोदाहरणम्

अतोऽसदेव शुक्तिरूप्यमङ्गीकार्यम् । 'असदेव रूप्यमत्राभात्' 'असद्रूप्यात्मना शुक्तिरभात्' इत्यनुभवो हि तत्र मानम् ।।

'विमतं असत् सत्वानधिकरणत्वात् शशशृङ्गवत्' । 'विमता अप्रमा असद्विषयिणी सत्वानधिकरणविषयत्वात् । सन्मात्राविषयत्वे सति सविषयत्वात् । नृशृङ्गमसदित्यादिवाक्यजन्यपरोक्षवत्' इत्याद्यनुमानं च मानम् ।।

### अनुमानयोरद्वैतसिद्ध्युक्तोपाधिनिषेधः

न च प्रथमे शब्दैकगम्यत्वं, द्वितीयतृतीययोः परोक्षत्वमुपाधिः। 'शशशृङ्गं जानामि' इत्यनुव्यसायविषत्वेन शशशृङ्गादेः शब्दैकगम्यत्वाभावेन साध्याव्यापकत्वात् । असद्विषयकानुव्यवसाये द्वितीयोपाधेरपि साध्याव्यापकत्वात् । साक्षादिति विशेषणेऽप्रयोजकत्वाच्च ।।

---

१. ऋ.सं. १०.१२९.२

२. ऋ.सं- २-२४-१२.

बौद्धमतवैलक्षण्यप्रदर्शनम्

न चासद्ख्यात्यङ्गीकारे बौद्धमतप्रवेशः । ख्यातिविषयमात्रस्यासत्त्वे हि तन्मतप्रवेशः । अस्मन्मते तु सतोऽसतश्च ख्यातिविषयत्वात् । असज्ज्ञानाङ्गीकारमात्रेण तन्मते प्रवेशेऽनिर्वाच्येऽसद्वैलक्षण्यज्ञानार्थं तवाप्यसज्ज्ञानावश्यकत्वेन तद्दोषापत्तेः । जरत्तार्किकैरप्यसत्संसर्गभानाङ्गीकाराच्च । अन्यथा 'इदं रूप्यत्वेन ज्ञातं' इत्यनुव्यवसायानुपपत्तेः। पुरोवर्तिनीष्टाभेदाग्रहे प्रवृत्त्यनुपपत्तेश्च ।।

न च नृशृङ्गादिशब्देन विकल्प एव मयाऽङ्गीक्रियते न ज्ञानम् । शुक्तिरूप्यादिविषयको विकल्प एव जायते न ज्ञानमित्यस्मदङ्गीकारेऽपि क्षतेरभावात् । न हि शब्दादेव विकल्पो जायते नान्यस्मादित्यत्र मानमस्ति । ज्ञानमात्रस्यैव विकल्प इति नामकरणासंभवाच्च । अतः सदेव शुक्त्यादि असद्रूप्याद्यात्मना भातीति ।।

।। इत्यभिनवान्यथाख्यातिः ।।

## ३५. अथ आविद्यकरूप्योत्पत्तिभङ्गः

शुक्तिरूप्यस्याज्ञानोपादानकत्वतत्त्वधीनाश्यत्वानुपपत्तिकथनम्

यत्त्वज्ञानोपादकं तत्त्वधीनाश्यं रूप्यममिति । तन्न । रूप्यं नष्टमुत्पन्नं चेति धीप्रसङ्गात् । न चोत्पादविनाशधीः भ्रान्तिदशायामापाद्यते बाधसमये वा । नाद्यः । पूर्वोत्पन्नाविनष्टशुक्त्यभिन्नतया ग्रहस्यैव प्रतिबन्धकत्वात् । न द्वितीयः । अत्यन्ताभावग्रहस्यैव प्रतियोगिग्रह इव तदुत्पादविनाशग्रहेऽपि

प्रतिबन्धकत्वादिति वाच्यम् । कदाप्यप्रतीतायाः[१] प्रातीतिकस्य प्रातीतिकोत्पत्तौ मानाभावात् । त्रयाणां सत्वेऽत्यन्ताभवबुद्धेरेवासंभवाच्च । त्रैकालिकव्याप्यवृत्त्यत्यन्ताभवाधिकरणे उत्पत्यादेर्व्याहतत्वाच्च । न च पारमार्थिकत्वेनैव तन्निषेधात्, न स्वरूपेणेत्युत्पत्याद्युपपत्तिः । पारमार्थिकत्वस्यापि पारमार्थिकत्वेनैव निषेधेऽनवस्थापत्तेः । स्वरूपेण निषेधे तदुत्पत्याद्यसंभवात् प्रातीतिकस्यापि तस्योत्पत्तेरभावे रूप्यादेरपि तदभावापत्तेः । निर्धर्मके ब्रह्मण्यपि व्याप्तेश्च । न चाब्रह्मनिष्ठपारमार्थिकत्वाप्रसिद्ध्या कथं तेन ब्रह्मणोभावः । निर्धर्मकेऽपि ब्रह्मणि पारमार्थिकत्वाभावेन तद्भिन्नस्य तत्त्वेनाभावानुपपत्तेस्तुल्यत्वात् । रूप्यस्याज्ञानोपादेयत्वेऽज्ञानं रूप्यमिति धीः स्यात् । उपादानस्योपादेयानुविद्धतया भाननियमात् । न च भवतामपि प्रकृतेर्घटाद्यनुविद्धतया भानं स्यात् । मृद्धट इति मृत्वेन तद्भानात् । प्रकृतित्वरूपावस्थाया अज्ञातसत्ताकत्वेन घटादाववस्थानेऽपि प्रातीतिकरूप्याद्युपापादनस्य प्रातीकिकस्याज्ञानस्याज्ञातसत्ताकत्वासंभवात् ॥

किञ्च अधिष्ठानतत्त्वज्ञानेनाज्ञाननिवृत्तावपि प्रतिबिम्बस्थले वृक्षाधोग्रत्वादिभ्रमो दृश्यते । न च सोपाधिके प्रतिबिम्बभ्रमोपादानाज्ञानमुपाधिनिवृत्तिसचिवज्ञानेन निवर्तते न केवलेनेति वाच्यम् । स्वप्रागभवनिृत्ताविवाज्ञाननिवृत्तावपि ज्ञानस्येतरानपेक्षणात् इति ॥

॥ इत्याविद्यकरूप्योत्पत्तिभङ्गः ॥

---

१. 'कदाप्यप्रतीतस्य' इति स्यादिति भाति ।

## ३६. अथ भ्रमस्य द्व्यात्मकत्वभङ्गः

इदं रूप्यं इत्यादिभ्रमस्य त्र्यात्मकत्वापादनम्

यच्चाधिष्ठानांशेऽन्तःकरणवृत्तिरध्यस्तांशे अविद्यावृत्तिरिति ज्ञानद्वयात्मकः सर्वोऽप्यध्यास इति । तन्न । इदमंशस्याप्यध्यस्तत्वेनेदमिति द्व्यात्मकम् । इदं रूप्यमिति त्र्यात्मकं स्वप्ने इदं रूप्यमिति चतुरात्मकं स्यात् । न चेदंत्वस्याध्यस्तत्वेऽपीदमिति न द्व्यात्मकम् । इदन्त्वाधिष्ठानस्य स्वप्रकाशत्वात् । अन्तःकरणवृत्तिसापेक्षाधिष्ठानप्रकाश एवाध्यासे मया द्व्यात्मकत्वमुपेयते न तु सर्वत्राध्यस इति वाच्यम्। अधिष्ठानस्य स्वप्रकाशत्वेऽप्यध्यस्तभानाय वृत्तेरावश्यकत्वात्। अन्यथा घटपटादिभानं सर्वस्य सर्वदा स्यात् ।।

रूप्यभ्रमस्याविद्यावृत्तित्वेऽनवस्थापादनम्
ज्ञानैक्यावगाह्यनुभवविरोधोद्भावनं च

किञ्च रूप्यज्ञानस्याविद्यावृत्तित्वेन प्रातिभासिकतया प्रतिभासावश्यंभावेन अध्यस्तविषयज्ञानस्य चाध्यस्तत्वनियमेनाविद्यावृत्तेरप्यविद्यावृत्तिप्रति बिम्बितचैतन्यवेद्यत्वम् । एवं तस्यापि तस्यापीत्यनवस्थापत्तेः । न चाविद्यावृत्तिप्रतिभासके चैतन्ये अविद्यावृत्तिः स्वत एवोपाधिरिति न वृत्यन्तरापेक्षा । आत्माश्रयापत्तेः। वृत्तिभेदे ज्ञानैक्यानुभवविरोधाच्च । न चाध्यस्तेनाभेदेन विषययोरैक्यापन्नत्वाज्ज्ञानयोरैक्यमुपचर्यते । धारावाहिकज्ञानेष्वैक्याध्यासापत्तेः। विषयैक्यस्य ज्ञानैक्यहेतुतायां मानाभावाच्च ।।

अद्वैतसिद्ध्युक्तपरिहारखण्डनम्

न च यथेमंशावच्छिन्नचैतन्यगताविद्यापरिणामित्वात् रूप्यमिदंत्वेन भाति तथेदमाकारान्तःकरणवृत्त्यवच्छिन्नचैतन्यगताविद्यापरिणामत्वेन

रूप्यज्ञानमिदंज्ञानत्वेन भातीति वाच्यम् । बाधकाद्विषययोरिव ज्ञानयोरपि भेदधीप्रसङ्गात् । न हि बाधं विनाऽऽरोपेऽन्यन्मानमस्ति। इदंवृत्तेर्ज्ञातैकसत्वेन तदवच्छिन्नचैतन्यगताज्ञानाभावेनाविद्या-वृत्तेरसंभवाच्च ।।

अविद्यावृत्तेः ज्ञानत्वनिराकरणम्

न चाविद्यावृत्तिर्ज्ञानमिति ज्ञानैक्यधीः । ततः संस्कारस्मृति-सुखदुःखेच्छाप्रवृत्तीनां ज्ञानकार्याणामनुपपत्तेः । न च वृत्तिभेदेऽपि इदंरूप्ययोरिदमंशावच्छिन्नचैतन्यप्रकाशत्वेन फलैक्यात् ज्ञानैक्यधीः। अपरोक्षभ्रमे परोक्षैकरसचैतन्यरूपफलैक्याभावात् तन्निबिन्धनैक्य-ज्ञानानुपपत्तेः । त्वन्मते यथाक्रममिदं रूप्याकारान्तःकरणवृत्त्य-विद्याप्रतिबिम्बिताभ्यां वा तदभिव्यक्ताभ्यां वेदमंशावच्छिन्नतदन-वच्छिन्नाभ्यामिदमंशरूप्याधिष्ठानचैतन्याभ्यां वा वेद्यत्वेन इदमंशान-वच्छिन्नात्, तदवच्छिन्नस्य भेदात् । अनवच्छिन्नशुद्धचितः सर्वसाधारण्यात् ।।

इदमंशावच्छिन्नस्योपादानत्वनिराकरणम्

न चेदमंशे तदवच्छिन्नचैतन्यमुपादानम् । आत्माश्रयापत्तेः । न वा रूप्यइदमंशावच्छिन्नमुपादानम् । इदं रूप्यमिति प्रतीत्यनुपपत्तेः। न चाविद्यावृत्तिर्नाज्ञाननाशिका किन्त्वन्तःकरणवृत्तिरिदमाकारा । तथा च तदभिव्यक्तचैतन्यमेव रूप्यमभिव्यनक्तीति फलैक्यमिति वाच्यम् । इदमाकारवृत्त्यभिव्यक्तचैतन्येनैव रूप्यप्रकाशेऽविद्या-वृत्त्यङ्गीकारस्याप्रामाणिकत्वापत्तेः ।।

।। इति भ्रमस्य द्व्यात्मकत्वभङ्गः ।।

## ३७. अथ सत्तात्रैविध्यभङ्गः

यश्च ब्रह्म परमार्थसत्, घटादिकं व्यावहारिकं, शुक्तिरूप्यं प्रातीतिकं सदिति विभागः तन्न । प्रातिभासिकादप्यपकृष्टस्य स्वाप्नरूप्यस्य व्यावहारिकादप्युत्कृष्टाया अविद्यानिवृत्तेः सत्वात् । जागरे अधिष्ठानतावच्छेदकेदमंशस्याधिकसत्ताकत्वदर्शनेन स्वप्नेऽपि तदौचित्यात् । न च स्वप्ने नेदमधिष्ठानतावच्छेदकम् । अविद्यावच्छिन्नमेव हि तत्र तत्राधिष्ठानम् । इदमधिष्ठानतानवच्छेदकत्वे इदं रूप्यमिति प्रतीत्यनुपपत्तेः ।।

### विभागस्य तात्त्विकत्वातात्त्विकत्वाभ्यां निराकरणम्

किञ्च विभागस्तात्त्विकश्चेदद्वैतहानिः । नो चेत् त्रैविध्यानुपपत्तिः। न च व्यावहारिकोऽयं विभागः । तात्त्विकस्य ब्रह्मणो तात्त्विकाच्छुक्तिरूप्याद्विभागस्यातात्त्विकत्वे विभागस्य तात्विकत्वापत्तेः।।

### अद्वैतसिद्ध्युक्तभेदकनिराकरणम्

यत्तु सप्रकारनिःष्प्रकारकज्ञानबाध्यत्वाभ्यां शुद्धब्रह्मधीबाध्यत्वतदन्यबाध्यत्वाभ्यां वा महावाक्यजन्यधीबाध्यत्वतदन्यधीबाध्यत्वाभ्यां वा स्वबाधकधीबाध्यत्वतदन्यधीबाध्यत्वाभ्यां वा व्यावहारिकप्रातीतिकयोर्भेद इति । तन्न । त्वदभिमतप्रातीतिकस्य देहात्मैक्यादेर्महावाक्यजन्यनिष्प्रकारकशुद्धब्रह्मधीनिवर्त्यत्वेनाव्याप्तेरतिव्याप्तेश्च । स्वबाधकेनैव ब्रह्मज्ञानेन तन्निवृत्तेश्च । निष्प्रकारकशुद्धब्रह्मधीनिवर्त्यत्वेन अव्याप्तेरतिव्याप्तेश्च । स्वबाधकेनैव ब्रह्मज्ञानेन तन्निवृत्तेश्च । निष्प्रकारकज्ञानस्य बाधकतायाः स्वबाधकतायाश्च अलीकत्वात् । ब्रह्मण्यारोपितक्षणिकत्वादेरुक्तब्रह्मज्ञानेनैव बाधाच्च । ब्रह्मज्ञानाव्यवहितभ्रमविषयप्रातीतिकलक्षणाव्याप्तेर्व्यावहारिकलक्षणातिव्याप्तेश्च ।

न वा करणसंगिदोषजन्यत्वतदभावाभ्यां भेदः । शुक्तिनिष्ठ-चाकचिक्यादिदोषस्य करणानिष्ठत्वात् । करणनिष्ठत्वकल्पनाया उभयत्र तुल्यत्वादिति।।

।। इति सत्तात्रैविध्यभङ्गः ।।

उपाधिबाधप्रतिपक्षयुक्तो विपक्षबाधोज्झितसाध्यहीनः ।
दृश्यत्वहेतुर्जगतो मृषात्वे न स्यात् प्रमाणं जडता तथाऽन्यत् ।।१।।

श्रीविष्णोरुदयान्नाशात्तेनैव पालनात्तथा ।
कार्यकारणरूपं हि विश्वं सत्यमिति स्थितम् ।।२।।

न दृश्यन्ते न पाल्यन्ते नोत्पाद्यन्ते हि मायिकाः ।
मायासमाहहीनेन नाश्यं ते न हि कुत्रचित् ।।३।।

श्रुतिशिखरसिद्धस्य सर्वज्ञस्याज्ञतां वदेत् ।
तत्पालितस्य मिथ्यात्वं कोऽन्यो बौद्धं विनाऽधमः ।।४।।

इह सुसमयभावं नैव बुध्वा विबुद्धः
प्रलपति यदनन्तेऽद्वैतवादी कुवादी ।
तदनु किमु विजेतुं स्पर्धते तत्त्ववादी
स्वररुतमधि कृत्वा किं गजेन्द्रस्य गर्जा ।।

।। इति श्रुतिसिद्धान्ततत्त्वरत्नप्रकाशिकायां श्रीरामाचार्यविरचितायां द्वितीयपरिच्छेदः समाप्तः ।।

# अथ तृतीयपरिच्छेदः

## १. अथ विवरणोक्तनियमविधित्वभङ्गः

सिद्धेः सहस्रधा ध्वंसो ध्वान्ताद्वैतस्य सर्वथा ।
सिद्धान्तानां प्रकाशेन तर्कोऽयं बृंहितश्रुतेः ।।१।।

जाता तस्य द्वितीयस्य परिच्छेदस्य पूर्णता ।
श्रीमुकुन्दप्रसादाद्धि विघ्नवृन्दनिवारकात् ।।२।।

कुयोगिनोऽप्यनायासाद्यत्प्रसादात्तरन्ति हि ।
दुस्तरं भवपाथोधिं तं वन्दे श्रीहयाननम् ।।३।।

समन्वयाविरोधाभ्यां सिद्धोऽनन्तगुणालयः ।
हरिस्तत्प्राप्तये चात्रोच्यते साधनसङ्ग्रहः ।।४।।

अथ स्वधर्मानुष्ठानादिना जातजिज्ञासः शमदमादिसंपन्नो मुमुक्षुरिहामुत्र विषयभोगे विरक्तो हरिभक्तो गुरुं प्राप्य श्रवणमनननिदिध्यासनादि कृत्वा हरिमपरोक्षीकृत्य तत्प्रसादेन मुक्तो भवति । परोक्षस्यापि हरेः श्रवणादिवासितेन मनसा तत्प्रसादादेवापरोक्ष्यं भवति । 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः'[१] इति श्रुतेः ।।

### 'यन्मनसा न मनुते' इति श्रुत्यर्थकथनपूर्वं ब्रह्मणः उपास्यत्वसमर्थनम्

ननु 'यन्मनसा न मनुते येनाहुर्मनो मतम् । तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते'[२] इति श्रुतौ ब्रह्मण उपास्यत्वप्रतिषेधात्

---

१. बृ.उ. ४.४.५.
२. तल.उ. १.६.

कथं तस्य ध्येयत्वमिति चेत् । न । यत् श्रवणदर्शनादिजनितमानसवासनामयस्य वस्तुनो मनसाऽवलोकनम् तद्धि तस्य ध्यानम् । यथा प्रतिमायां क्रियमाणाऽर्चा तत्स्थतया चिन्त्यमानस्य देवस्य भवति । नतु प्रतिमामात्रस्य । एवं श्रुत्युक्तं ध्यानमपि बिम्बभूतस्य ब्रह्मण एव नतु ब्रह्म श्रुत्वा मनसा निर्मितस्य वस्तुनः । अतो न श्रवणमनननिदिध्यासनानां भिन्नविषयत्वम् । इदं श्रवणजनितमानसवासनामयं वस्तु यदुपासते अवलोकते तद्ब्रह्म न । किन्तु यच्छ्रुत्वा तत्सदृशं वस्तु मनसा कल्पते तदेव ब्रह्म त्वं विद्धीति श्रुत्यर्थः । विजातीयप्रत्ययानन्तरितसजातीयप्रत्ययप्रवाहो निदिध्यासनापरपर्यायो ध्यानम् । तच्च प्रतिबिम्बांशे मानसापरोक्ष्यं बिंबांशे स्मरणम् । 'यन्मसा' इत्यादिश्रुत्या ध्यानकालिकमानसापरोक्षवृत्त्यविषयत्वं 'मनसैवानुद्रष्टव्यं'[१] इत्यनया च ध्यानपरिपाके सतीश्वरप्रसादेन मानसापरोक्षवृत्तिविषयत्वं बोध्यते ।।

### ब्रह्मणोऽबोधकत्वबोधकश्रुत्यर्थकथनम्

ननु 'यस्यामतं तस्य मतं यस्य मतं न वेद सः । विज्ञातं विजानतां विज्ञातमविजानताम्'[२] ।। 'अवचनेनैव प्रोवाच । स ह तूष्णीं बभूव'[३] इति श्रुत्या ब्रह्मणोऽज्ञेयत्वमुक्तमिति कथं तज्ज्ञानान्मुक्तिरिति चेन्न । यथाश्रुतमतादीनां युगपदेकस्मिन् व्याहतत्वात् । अवचनहेतुकवचनस्यालीकत्वाच्च । यस्य विषयभोगादिकममतं तस्य ब्रह्म मतम् । यस्य तन्मतं स ब्रह्म न वेद । विषयान् विजानतां ब्रह्माविज्ञातं तानविजानतां ब्रह्म

१. काठ.उ. २.११, बृ.उ. शरीरब्राह्मण १९मन्त्र.

२. तल.उ. २.३.

३. ब्र.सू.भा. १.१.५. इत्यत्रोदाहृता श्रुतिः ।

विज्ञातम् । अवचनेनैवार्थान्तरबोधकवचनभिन्नवचनेनैव । इतर-व्यायासाहित्येनेति यावत् । ब्रह्म प्रोवाच । स तत्काले तूष्णीं इतरार्थबोधकवचने निवृत्तव्यापारो बभूव । 'तमेवैकमात्मानं जानथ अन्या वाचो विमुञ्चथ'[१] इति श्रुतेरिति हि श्रुत्यर्थः । 'दृश्यते त्वग्र्यया बुद्ध्या'[२] 'मनसैवानुद्रष्टव्यं' यन्मनसा न मनुते'[३] इति श्रुतिद्वयस्य वासितावासितमनोभिप्रायत्वात् । 'मया प्रसन्नेन तवार्जुनेदं रूपं परं दर्शितमात्मयोगात्'[४] इत्यादिस्मृतेश्च ॥

### श्रवणमननयोरुपयोगकथनम्

तत्र सिद्धार्थोक्तिरूपेण गुरूपदेशेनानेकशाखास्थवाक्यार्थग्रहणमात्रं श्रवणम् । तच्चाज्ञानमात्रविरोधि । नतु मननमिव संशयादिविरोधि। मननरूपन्यायावतरे धर्म्यर्पकतयाऽङ्गम् । मननं तु 'अयमेव वाक्यार्थो युक्तो नान्यः' इति निर्णयहेतुयुक्त्यनुसन्धानम् । तत्र समन्वयाध्यायोक्ता उपक्रमादियुक्तयो वाक्यार्थतत्त्वनिर्णायकाः । युक्तिसमयपादाभ्यामुक्तास्तु युक्तत्वनिर्णायका इत्युभयविधयुक्त्यनु-सन्धानमपि मननान्तर्गतम् ॥

### श्रवणविधेरपूर्वविधित्वसमर्थनम्

विजातीयप्रत्ययानन्तरितं निरन्तरं ध्यानं निदिध्यासनम् । तत्र श्रवणादिविधिर्मानान्तराप्राप्तिफलकोऽपूर्वविधिः । श्रवणादेरपरोक्षधी-साधनताया अन्यतोऽप्राप्तत्वात् । न च गान्धर्वशास्त्रविचारे षड्जादिसाक्षात्कारे हेतुता दृष्टेति वाच्यम् । षड्जादीनामुपदेशं

१. काठ.उ. १.३.१२.
२. आथ.उ. ४.६.
३. तल.उ. १.६.
४. भग.गी.१०-

विनैव प्रत्यक्षत्वात् । तन्निष्ठजातेः पद्मरागत्वादेरिवोपदेशसहकृतेन्द्रियगम्यत्वेऽपि तद्भिन्नप्रत्यक्षे उपदेशानपेक्षणात् । चाक्षुषादिप्रत्यक्षेऽऽलोकादिसंयोगचक्षुः- प्रणिधानादेरिव श्रावणप्रत्यक्षे शब्दनिष्ठषड्जत्वादिधर्मविचारस्य हेतुत्वेऽप्यात्मप्रत्यक्षसामग्र्यां विचारस्यानिविष्टत्वात् । अन्यथा धर्मविचारेण धर्मादेरप्यापरोक्ष्यापत्तेः । न चापरोक्षार्थकशास्त्रविचारादापरोक्ष्यम् । आत्मा च षड्जादिवदपरोक्ष इति वाच्यम् । आत्मपदेन जीवोक्तौ तस्य सदाऽऽपरोक्ष्यत्वेनोपदेशवैय्यर्थ्यात् । ईशोक्तौ च तस्य धर्मवत् परोक्षत्वेन विचारेणापरोक्ष्यासंभवात् । सन्दिग्धत्वसप्रयोजनत्वयोरेव सर्वत्र विचार्यत्वे तन्त्रत्वात् । शतशो विचारेऽपि तद्योग्यस्वर्गनिध्यादीनामापरोक्ष्यादर्शनाच्च । न च निध्यापरोक्ष्यहेतोः सन्निकर्षस्याभावान्न तत् । सन्निकर्षाभावाच्चाक्षुषाद्यपरोक्ष्याभावेऽपि शब्दापरोक्ष्ये तत्र सन्निकर्षस्याहेतुत्वेन निध्यादेस्तदापत्तेः । अतः श्रवणादेरपूर्वविधिरिति तज्जन्यादृष्टयुक्तेन मनसा परोक्षस्यापि हरेरापोक्ष्यमिति सिद्धम् ॥

### व्रीहिमात्रे नखविदलनादेः प्राप्त्या 'व्रीहीनवहन्ति' इत्यत्र नियमविधिवदात्ममात्रे मानान्तरप्राप्तिसद्भावाद् नियमविधिरिति पक्षखण्डनम्

परमते नियमविधिर्न संभवति । निर्विशेषात्मनि मानान्तराप्राप्तेः। न च यथाऽपूर्वीयेषु व्रीहिविशेषेषु नखविदलनादेरप्राप्तावपि व्रीहिसामान्ये तत्प्राप्त्या 'व्रीहीनवहन्ति' इति नियमविधिस्तथाऽऽत्मसामान्ये मानान्तरप्राप्त्यैव निर्विशेषे तत्प्राप्त्या नियमविधिरिति वाच्यम् । 'व्रीहीनवहन्ति' इत्यत्र व्रीहिपदं ह्यपूर्वीयद्रव्यपरं नतु व्रीहिमात्रपरम् । अन्यथा यवेष्ववघात औपदेशिको न स्यात् । नीवारेषु वा व्रीहित्वाभावेनातिदेशो न स्यादिति नवमे स्थापितत्वात्। तथा च वैतुष्यद्वारकापूर्वसाधनद्रव्योद्देश्येनावघातविधानात् भवति

नियमविधिः । अन्यथा वैतुष्यमात्रेऽवघातनियमे द्रव्यार्जनयाजनाद्युपायनियमवत् तस्य पुरुषार्थत्वप्रसङ्गेन लौकिकेष्वपि व्रीहिषु दलने प्रत्यवेयात् । निर्विशेषसविशेषरूपविशिष्टद्वयानुगतविशेषाभावात् तद्वारा वेदान्तवेद्ये चिन्मात्रे मानान्तरप्राप्तेश्च ।।

अप्राप्तवेदान्तश्रवणादिपरिपूरणार्थो नियम इति कौमुद्युक्तपक्षखण्डनम्

यत्तु यथा मन्त्रार्थज्ञानस्य कल्पसूत्रात्मीयग्रहणकवाक्यादिनाऽपि प्राप्तत्वेन पक्षे प्राप्तं मन्त्रसाध्यत्वं नियम्यते मन्त्रैरेव मन्त्रार्थस्मृतिः कार्येति । तथा वेदान्तमूलकस्त्रीशूद्रादिसाधारणपुराणादिप्राप्त्या पक्षे प्राप्तवेदान्तश्रवणादिनियमविधिरिति ।

तन्न । 'इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्'[१] इत्यादिस्मृतिविरोधापत्तेः । न ह्यविचारितेनोपबृंहणं संभवति । न च वेदान्ततात्पर्यनिर्णयतद्विचारापेक्षायामपि ब्रह्मज्ञाने तद्विचारापेक्षायामपि ब्रह्मज्ञाने तद्विचारापेक्षा नास्ति । विवरणरूतयैव हि स्मृत्या वेदतात्पर्यं निर्णीयते । विविरणविव्रियमाणयोः समानार्थकत्वादिति स्मृत्यादितः सुतरां ब्रह्मनिर्णयः । विप्रकीर्णनानाशाखार्थसंग्रहादिरूपेणेतिहासादिना तत्त्वनिश्चयदर्शनाच्च । सति च तस्मिन् विविदिषाद्वारा तदर्थायान्तःकरणशुद्धेरनपेक्षणात् । आपरोक्ष्यं च दशमस्त्वमसीति लौकिकवाक्यादिव विषयस्वभावादेव सिद्ध्या वेदजन्यब्रह्मज्ञाने इतिहासादिजन्यादधिकस्यापरोक्षस्याननुभवेन तस्य नियमादृष्टसाध्यत्वात् । ज्ञानस्य स्वप्रागभावनिवर्तन इवाज्ञाननिवृत्तावदृष्टनिरपेक्षत्वात् । अन्यस्य च नियमादृष्टसाध्यस्याभवात् । अत एव शूद्रप्रणीतात्मप्रबन्धादिप्राप्तिनिमित्तकाप्राप्तांशपूरणार्थो नियम-

---

१. मा.आदि. १.२०४, गी.भा उपोद्घाते च ।

विधिरिति निरस्तम् । पण्डितस्य तदप्राप्तेः । मन्दस्य निषेधमुल्लंघ्य विप्रवृत्तस्य विधिना निवर्तयितुमशक्यत्वात् । दशमस्त्वमसि इति वाक्यादिव ततोऽपि ब्रह्मापरोक्ष्यसंभवाच्चेति ।।

।। इति विवरणोक्तनियमविधित्वभङ्गः ।।

## २. अथ परोक्तश्रवणादिविधिभङ्गः

शक्तितात्पर्यावधारणं श्रवणमिति पक्षखण्डनम्

यत्तु शक्तितात्पर्यावधारणं श्रवणमति । तन्न । सर्वशब्दावाच्ये ब्रह्मणि शक्त्यसंभवात् । संशयधर्मिणो निर्णीतत्वेन विशेषस्य तत्राभावेनावधारणीयाभावाच्च । ज्ञानरूपेऽवधारणे विधेस्त्वद्रीत्याऽसंभवाच्च । न चावधारणं मनोवृत्यन्तरम् । यत्र यत्र ज्ञाने विधिः प्रतीयते तत्र सर्वत्र भिन्नमनोवृत्तिरिति वक्तुं शक्यत्वेन ज्ञाने विधिर्नास्तीत्युक्ते निष्फलत्वापत्तेः । तात्पर्यरूपे विषये उपक्रमादिरूपे च प्रमाणे सति जायमानस्य ज्ञानबहिर्भावानुपपत्तेश्च । तद्बहिर्भूतवाग्धेनूपासनादौ प्रमाणवस्तुपरतन्त्रत्वादर्शनाच्च ।।

।। इति परोक्तश्रवणादिविधिभङ्गः ।।

## ३. अथ स्वमते श्रवणादिविध्युपपत्तिः

वेदविचारत्वावच्छिन्ने ब्रह्मज्ञानकारणत्वस्याप्राप्तत्वेनापूर्वविधित्वसमर्थनम्

ननु प्रतिवाक्यमस्यायमर्थ इति सिद्धार्थोक्तिरूपगुरूपदेशे अनेकशाखार्थवाक्यार्थज्ञाने वेदान्तरूपवाक्यार्थविचारस्य सामान्यतः साधनत्वेन प्राप्तत्वान्न श्रवणेऽपूर्वविधिरति चेन्न । यथा हि

घटादावितरभेदे सिद्धेऽपि पृथिवीत्वावच्छिन्ने तदसिद्ध्या पृथिवीतरेभ्यो भिद्यत इत्यत्र न सिद्धसाधनम्, यथा च स्थानप्रकरणोक्तरीत्या राजसूयान्तर्गतेष्टिपशुसोमेषु प्रातिस्विकरूपेण चोदकेनेतिकर्तव्यता प्राप्तावपि राजसूयरूपे तदप्राप्तिः, तथा वेदविचारत्वावच्छिन्ने ब्रह्मधीहेतुताया अप्राप्तेरपूर्वविधित्वोपपत्तिः । न हि कर्मकाण्डादिना ब्रह्मकाण्डेऽप्यवान्तरकारणादिवाक्येन स्वरवर्णपदादिना चापाततो ब्रह्मधीरस्ति ।।

### अद्वैतसिद्ध्युक्तपक्षखण्डनम्

एतेन च सामन्यतः प्राप्तसाध्यसाधनभावमनादृत्य विशेषोपाधिना अप्राप्तसाधनत्वप्राप्तयेऽपूर्वविध्यङ्गीकारे ज्योतिष्टोमादिवाक्यविचारेऽपि तेन रूपेण तद्वाक्यार्थज्ञानं प्रत्यप्राप्तसाधनतासिद्धयेऽपूर्वविध्यन्तरकल्पनापत्तिरिति निरस्तम् । कर्मकाण्डाकाशादिपदैर्ज्योतिष्टोमादिवाक्यगतवर्णैरुदात्तादिस्वरैश्च सामन्यतोऽपि ब्रह्मज्ञानाप्राप्तेः ।।

### प्रकारत्रयेण निदिध्यासनविधेरपूर्वविधित्वसमर्थनम्

निदिध्यासनस्याव्यक्तस्वभावब्रह्मसाक्षात्कारहेतुता नान्यतः प्राप्तेति निदिध्यासितव्य इत्यपूर्वविधिः । तथाऽज्ञातायुक्ते च निदिध्यासनासंभवेन श्रवणमननयोर्निदिध्यासने लिङ्गादेव प्राप्तावपि नियतविषयकनिदिध्यासनविषयगुणान्यगुणेषु लिङ्गेन तयोरप्राप्तेस्तद्विधिरप्यपूर्वविधिः । एवं च श्रवणमननयोर्निदिध्यासितव्यगुणांशे दृष्टद्वारेणान्यत्र त्वदृष्टद्वारेण निदिध्यासनाङ्गत्वम् ।।

यद्वा गुरुप्रसादपूर्वकत्वरहितस्वप्रयत्नमात्रसाध्यवाक्यार्थग्रहणादिप्राप्तिनिमित्तकः श्रोतव्य इत्यादिनियमोऽस्तु । 'आचार्यवान् पुरुषो वेद'[१] इति श्रुतेः ।।

१. छा.उ. ६.१४.२.

यद्वा दुःशास्त्ररूपोपायान्तरप्राप्तिनिमित्तको नियमोऽस्तु । पाशुपताद्यागमविचारस्य ब्रह्मप्रमाहेतुत्वाभावेऽपि जगत्कारणज्ञान-हेतुतायाः प्राप्तेः ॥

यद्वा विचारसाध्यज्ञानविशेष्यात्मज्ञानेष्वनुमानादेः प्राप्त्या नियमोऽस्तु ।

न च यदाकारज्ञाने विचारो हेतुस्तदाकारज्ञने उपायान्तरप्राप्तिर्नियमे तन्त्रम् । इदं तत्त्वत एव परामृष्टव्यमित्यादावेकस्मिन् विशेष्ये उपायान्तरप्राप्त्या नियमदर्शनात् । न ह्येकस्मिन्नेवाकारे तात्त्विकत्वा-तात्त्विकत्वयोः प्राप्तिरस्ति । परमते तु विशेष्यस्यैवौपनिषदत्वा-त्तत्रैवोपायान्तरप्राप्तिरिति वैषम्यम् । संभवति च शब्दयुक्तिजन्य-ज्ञानवाचिभ्यां श्रोतव्यमन्तव्यपदाभ्यां दुरागमरूपशब्दाभासतदनु-ग्राहकन्यायाभासजन्यधीव्यावर्तनमिति ॥

॥ स्वमते श्रवणादिविध्युपपत्तिः ॥

## ४. अथ ज्ञानविध्युपपत्तिः

### ज्ञानस्य प्रमाणवस्तुपरतन्त्रत्वेनाविधेयत्वमिति पक्षखण्डनम्

न चानिच्छतोऽपि दुर्गन्धधीदर्शनान्न ज्ञानं पुंतन्त्रम् । किं तु वस्तुप्रमाणाधीनमिति न विधेयम् । लिङ्गादयः श्रूयमाणा अपि शिलातलप्रयुक्तक्षुरतैक्ष्ण्यवत्कुण्ठीभवन्तीति चेन्न । 'पत्न्यवेक्षितमाज्यं भवति' 'विदुषा कर्म कर्तव्यं' 'तस्मात् पश्येत नित्यशः' इत्यादिना तद्विधानात् । न च तत्र तद्धेत्विन्द्रियसंप्रयोग एव विधेयः । अनिच्छतोऽपि दुर्गन्धादिज्ञानवत् संप्रयोगस्यापि दर्शनात् ।

एकश्रोत्रगतानेकगकारेषु बुभुत्साप्रयत्नाभ्यामभीष्टगकारज्ञानदर्शनाच्च । न चानभिमतविषयवैमुख्यस्यैव बुभुत्साप्रयत्नसाध्यतया ज्ञानं प्रति तयोर्न प्रयोजकत्वम् । अनभिमतविषयवैमुख्ये सत्यप्यभिमत-विषयसामुख्यं विना ज्ञानाभावस्यानुभवसिद्धत्वात् । 'यदेव विद्यया करोति तदेव वीर्यवत्तरं भवति'[1] इति विद्याया अङ्गत्वश्रवणाद-विहितस्याङ्गत्वासंभवात् ॥

ब्रह्मज्ञानस्येच्छाप्रयत्नसाध्यत्वसमर्थनम्

किञ्च यथा दुर्गन्धादिज्ञानस्येच्छाविषयत्वाभावेऽपि ब्रह्मज्ञानस्य तद्विषयत्वं, यथा च ज्ञानान्तरस्य नियमादृष्टसाध्यत्वेऽपि ब्रह्मज्ञानस्य तत्साध्यत्वं, यथा वा पर्वतादिज्ञानस्य नयनोन्मीलने सति प्रयत्नान्तरनिरपेक्षत्वेऽपि ध्रुवारुन्धत्यादिज्ञाने तत्सापेक्षत्वं तथाऽति-सूक्ष्मब्रह्मज्ञानस्येच्छाप्रयत्नसाध्यत्वसंभवात् । शास्त्रार्थज्ञानस्य नियमेन पुंतन्त्रत्वदर्शनात् । ब्रह्मणश्च शास्त्रार्थत्वात् तज्ज्ञानमपि पुंतन्त्रम् । प्रशस्ताप्रशस्तज्ञानयोर्विधिनिषेधदर्शनाच्च । सर्वत्र ज्ञान विधेस्तत्साधनविषयकत्वकल्पने उपासनाविधेर्यागादिकर्मविधेश्च तत्साधनमनोधारणादिविषयकत्वापत्तेः । 'विज्ञाय प्रज्ञां कुर्वीत'[2] इत्यादिज्ञाने विधिसत्वाच्च । त्वया विधेयत्वेनाङ्गीकृतस्य ध्यानस्य ज्ञानभिन्नत्वे तद्विषये जानामीत्यनुभवस्य संस्कारस्मृत्यादेः तदभिध्यानाद्विश्वमायानिवृत्तिरित्यविद्यानिवृत्तेश्च ततोऽसंभवापत्तेः ॥

प्रकारचतुष्टयेन विधीयमानज्ञानस्वरूपप्रदर्शनम् अद्वैतसिद्ध्युक्तसमाधानखण्डनं च

तच्च विधीयमानज्ञानं शाब्दो वा, तदभ्यासो वा, तत्त्वमनपेक्ष्या-रोपितविषयतया ध्यनं वा, आपरोक्ष्यफलकं ज्ञानान्तरं वा । न

१.छा.उ. १.१.८
२.बृ.उ. ६.४.२१.

चाद्ये कर्मकाण्ड इव गृहीतसङ्गतेः स्वतःसिद्धत्वेन कृत्यसाध्यता । विध्यविषयत्वे कर्मकाण्डेऽप्यापातजन्यस्य स्वतःसिद्धत्वेऽपि विमर्शजन्यस्य कृतिसाध्यत्वात् । अन्यथाऽध्ययनविधेरुत्तरक्रतुविधेर्वा तदाक्षेपकत्वानुपपत्तेः ॥

न च द्वितीये मोक्षायापरोक्षाय वा । आद्ये मोक्षस्य नैयोकिकत्वे स्वर्गादिवदनित्यत्वं स्यात् । उभयत्र हेतुत्वसंभवात् । अविद्यादिध्वंसस्य नैयोकित्वेऽपि ध्वंसत्वात् श्रुतिबलाच्च नित्यत्वोपपत्तिः । न च भवन्मते नाविद्याध्वंसो मोक्षः । किन्तु लोकावाप्तिः । तस्य च स्वर्गादिवदनित्यत्वसंभवेऽस्य[1] स्वरूपानन्दाविर्भावस्याविद्याध्वंसपर्यवसन्नस्यास्मन्मते मोक्षत्वात् ॥

न चाभ्यास आपरोक्ष्ये हेतुर्दृष्टविधयाऽदृष्टविधया वा । नाद्यः । परोक्षज्ञानाभ्यासेन तदापरोक्ष्यादर्शनात् । न द्वितीयः । ज्ञानस्य प्रमाणमात्राधीनत्वादिति वाच्यम् । प्रोषितं...[2] पुत्रादिपरोक्ष्याभ्यासेन तदापरोक्ष्यदर्शनात् । न च तद्वदेवाप्रमात्वं स्यात् । तद्विषयबाधाभावात्। ध्यानादिना प्रसन्नदेवतासाक्षात्कारदर्शनेन ध्यानसंस्कृतेनादृष्टोपगृहीतेन मनसा ब्रह्मापरोक्ष्योपपत्तेश्च ॥

न च चतुर्थे शब्दस्य ब्रह्मणि प्रामाण्यं न स्यात् । ज्ञानादिविधायकानां सत्यज्ञानादिवाक्यानां ब्रह्मणि प्रमाणत्वात् ॥

॥ इति ज्ञानविध्युपपत्तिः ॥

---

१. 'तस्य च स्वर्गादिवदनत्यत्वम् । स्वरूपानन्दाविर्भावस्य...' एवं वाक्यं स्यादिति भाति ।

२. अत्र पङ्क्तिर्लुप्तेति भाति ।

## ५. अथ शब्दादपरोक्षत्वभङ्गः

### शाब्दप्रत्यक्षे परोक्तश्रुत्यनुमानोदाहरणम्

ननु न परोक्षज्ञानाभ्याससंस्कृतमनसा ब्रह्मापरोक्ष्यम् । किन्तु 'तत्त्वमसि' इत्यादिवाक्यादेव । 'तद्धास्य विजज्ञौ'[१] 'तमसः पारं दर्शयति'[२] 'वेदान्तविज्ञानसुनिश्चितार्थाः'[३] इत्यादावुपदेशादेवापरोक्षत्वोक्तेश्च ॥

विमतं शाब्दज्ञानमपरोक्षमपरोक्षमात्रविषयकज्ञानत्वात् सुखादिज्ञानवत् । अपरोक्ष्यत्वं वेदान्तवाक्यजन्यज्ञानवृत्ति अपरोक्षज्ञाननिष्ठात्यन्ताभावाप्रतियोगित्वात् ज्ञानत्ववदित्यनुमानाच्चेति चेन्न ॥

### शाब्दप्रत्यक्षे उदाहृतश्रुतीनामन्यार्थकथनम्

विजज्ञावित्यादेः परोक्षज्ञानेनाप्युपपत्तेः । 'पारं दर्शयति' इत्यादेः ग्रामोपदेष्टरि ग्रामं दर्शयतीत्यादिवदुपपत्तेः । 'मनसैवानुद्रष्टव्यं' इत्यादिश्रुतिविरोधाच्च । सुशब्दस्याप्रामाण्यशङ्कानिरासकत्वेन बलादापरोक्ष्यजनकत्वाप्राप्तेश्च । न च निश्चितपदेनैव तद्व्यावृत्तिः । तस्य च संशयव्यावर्तकत्वेऽप्यप्रामाण्यव्यावर्तकत्वासंभवात् ॥

### शाब्दप्रत्यक्षे उदाहृतानुमानखण्डनम्

विमतं नापरोक्षं शब्दजन्यज्ञानत्वात् ज्योतिष्टोमवाक्यजन्यज्ञानवत् । शब्दो नापरोक्षधीहेतुः शब्दत्वात् ज्योतिष्टोमादिशब्दवत् । अपरोक्षत्वं न शब्दजन्यधीवृत्ति अपरोक्षमात्रवृत्तित्वात् चाक्षुषत्वादिवदिति

१. छा.उ. ६.८.६.
२. छा.उ. ७.२६.२.
३. आथ.उ. ६.६.

प्रतिरोधाच्च । न च 'दशमस्त्वमसि' इत्यादिशब्दजन्यापरोक्ष्ये व्यभिचारः । तस्यापि पक्षतुल्यत्वात् ॥

शब्दः नापरोक्षधीहेतुः शब्दत्वात् इति हेतोर्व्यभिचारोद्धारः

किञ्च स्वात्मनो दशमत्वं पश्यतः शब्देनापरोक्षधीः उत अपश्यतः। नाद्यः । तस्य स्पृष्टवह्निं प्रति प्रयुक्ताद्वह्निरुष्ण इत्यादिवाक्याज्जन्य-ज्ञानस्येव परोक्षत्वेऽपि प्रत्यक्षसिद्धार्थानुवादित्वमात्रेण प्रत्यक्ष-त्वाभिमानात् । अन्यथोष्णत्वे शब्दात् स्पार्शनत्वजातिमज्ज्ञानं स्यात् । द्वितीये यदीन्द्रियव्यापारोऽस्ति तदा रत्नतत्त्व इवोपदेश-सहकृतेन्द्रियेणैव प्रत्यक्षधीः। यदि नास्ति तदा 'धर्मवांस्त्वमसि' 'पर्वतो वह्निमान्' इत्यादाविव धर्म्यंशेऽपरोक्षत्वेऽपि दशमत्वांशे परोक्षत्वात् । न च परोक्षेणापरोक्षभ्रमनिवृत्तिर्न स्यात् । 'धर्मवांस्त्वमसि' इत्यादिवत् तत्संभवात् । इन्द्रियान्तरजन्येनोपदेश-सहकृतेनापरोक्षेण तन्निवृत्त्युपपत्तेश्च । वेदान्तजन्यस्य धर्मादि-ज्ञानस्यापरोक्ष्यापत्तेश्च । न चापरोक्षार्थकशाब्दस्यापरोक्षत्वनियमः। शब्दस्यापरोक्षज्ञानजनकत्वस्वाभाव्ये ह्यन्यविषयकापरोक्षजनकतापि स्यात् । विषयापरोक्षस्य तन्निमित्तत्वे जीवेशाभेदबोधकानुमाना-दप्यापरोक्ष्यापत्तेः । एतेन यं शाब्दबोधमादाय यस्य बोद्धृत्वं तदभिन्नार्थावगाहित्वनिमत्तं तदर्थस्य साक्षात्त्वमिति निरस्तम् । 'परमधर्मवांस्त्वमसि' इत्यादिशब्दादप्यापरोक्ष्यापत्तेः ॥

अद्वैतसिद्ध्युक्तश्रुतिविरोधपरिहारः

न च 'तं त्वौपनिषदं पुरुषं पृच्छामि'[1] इत्यादौ तत्र साधुरिति तदन्यासाधुत्वे सति तत्साधुत्वरूपसाध्वर्थकतद्धितेनापरोक्ष्यजनकत्वं

---

१. बृ.उ. ५.९.२७.

शब्दस्येति वाच्यम् । परोक्षज्ञानविषयत्वेनाप्यौपनिषदत्वोपपत्तेः । न च धर्मादेरप्यौपनिषदत्वापत्तिः । धर्मादेर्योगिप्रत्यक्षगम्यत्वात् । न च 'यन्मनसा न मनुते'[1] इति मनसः करणत्वनिषेधात् श्रुतिरेव ब्रह्मापरोक्ष्ये हेतुः । 'यतो वाचो निवर्तन्ते'[2] इति शब्दस्यापि तन्निषेधात् । न च शक्त्या अबोधकत्वपरं तत् । 'मनसैवानुद्रष्टव्यं'[3] इति तृतीयाश्रुत्यनुसारात् 'न मनुते' इत्यस्यापक्कमनोविषयत्वात् । 'मनःषष्ठानीन्द्रियाणि'[4] इति मनस इन्द्रियत्वसिद्धेः । इन्द्रियाणामपरोक्षधीजनकत्वं हि चक्षुरादिषु क्लृप्तम् । शब्दस्यापरोक्षजनकत्वं तु न क्वापि क्लृप्तमिति तत्कल्पनेऽतिगौरवम् ।।

।। इति शब्दादपरोक्षत्वभङ्गः ।।

## ६. अथ श्रवणमननयोर्निदिध्यासनाङ्गत्वोपपत्तिः

तदेवमुपनिषदेकजन्यपरोक्षज्ञानविषयस्य हरेरापरोक्ष्ये निदिध्यासनं हेतु । श्रवणमनने तदङ्गे । न ह्यज्ञातस्यायुक्तस्य निदिध्यासनं संभवति ।।

श्रवणमङ्गि मनननिदिध्यासने अङ्गे इति विवरणमतखण्डनम्

यत्तु श्रवणमङ्गि प्रमाणस्य प्रमेयावगमं प्रत्यव्यवधानात् । मनननिदिध्यासने तु चित्तस्य प्रत्यगात्मप्रवणसंस्कारपरिनिष्पन्नतदेकाग्रवृत्तिकार्यद्वारेण ब्रह्मानुभवहेतुतां प्रतिपद्येते इति फलोपकार्यङ्गे इति ।।

१. तल.उ. १.६.
२. तैत्त.उ. २.९.
३. बृ.उ. ६.४.१९.
४. भग.गी. १५.७.

तत्र श्रवणं हि विचाररूपं न शाब्दज्ञाने करणम् । वेदेन धर्म इव ब्रह्मणि प्रमीयमाणे विचारस्यानुमानादौ तर्कस्येव शब्दरूपे तज्ज्ञानरूपे वा करणे इतिकर्तव्यतामात्रत्वात् । न च शब्दशक्तितात्पर्यावधारणं विचारः । अवधृतशक्तितात्पर्यकश्च शब्दः करणमिति विचारस्य करणकोटिप्रवेशेन नेतिकर्तव्यतात्वमिति वाच्यम् । आकांक्षादिसहितशब्दज्ञानस्यैव करणत्वसंभवे तात्पर्यभ्रमनिरासोपक्षीणोक्ततात्पर्यज्ञानस्य करणकोट्यप्रवेशात् । अन्यथा मननादेरपि तत्प्रवेशापत्तेः ।।

### आकांक्षाज्ञानस्य शाब्दबोधहेतुत्वकथनम्

न चाकांक्षादिधियोऽपि निराकांक्षत्वादिभ्रमनिरासकत्वेनोपक्षीणत्वेनाकांक्षादिकमपि करणकोटिनिविष्टं न स्यादिति वाच्यम् । आकांक्षादिज्ञानं विना कुत्रापि शाब्दबोधो नास्तीत्यन्वयव्यतिरेकाभ्यामाकांक्षादेः करणकोटिप्रवेशोपपत्तेः । तात्पर्यज्ञानस्य नानार्थस्थले क्वचिदुपयोगेऽप्यन्योन्याश्रयदोषेण करणाप्रवेशात् ।।

### तात्पर्यग्रहस्य शाब्दबोधहेतुत्वकथनम्

न च सामान्यतोऽर्थावगमे न तात्पर्यग्रहसंभवः । त्वदभिमतनिर्विशेषसामान्यविषयोरभावात् । न च सर्वत्र तात्पर्यज्ञानस्याजनकत्वेऽपि यत्र तात्पर्यसंशयविपर्ययोत्तरशाब्दधीः तत्र तात्पर्यज्ञानस्य हेतुता ग्राह्यसंशयविपर्ययोत्तरप्रत्यक्षविशेषदर्शनस्येवेति वाच्यम् । निर्विशेषे संशयविपर्ययाद्यसंभवात् । न च तात्पर्यधियो योगेऽवघातादेरिव शब्दे संनियोज्योपकारकतया करणकोटिप्रविष्टत्वेनाङ्गित्वम् । सन्निपत्योपकारकत्वेऽपि हि न फलोपकारकमनननिदिध्यासने प्रत्यङ्गित्वम् । अन्यथा प्रयाजादिकं

प्रत्यवघातादेरङ्गित्वापत्तेः । न च विशिष्टत्वेन यागप्रविशष्टतयाऽङ्गित्वे इष्टापत्तिः । असाधारण्येन शेषितात्वसाधारणफलोपकारकत्वं स्यात् । सापि श्रवणस्य संभावितैव । असंभावनानिवृत्तिरूपासाधारणोपकारजनकत्वादिति वाच्यम् । श्रवणत्वेन श्रवणस्याङ्गित्ववदवघातत्वेनावघातस्य प्रयाजादिशेषित्वस्यापाद्यत्वात् । प्रयाजादिजन्योपकारस्य यथा याग एवोपयोगो न त्ववघाते तथा मननजन्यासंभावनानिवृत्त्यादेः शब्दे एव ह्युपयोगो नतु श्रवणे ॥

### श्रवणस्य कारणत्वेनाङ्गित्वं मनननिदिध्यासनयोस्तु अङ्गत्वमिति चित्सुखपक्षखण्डनम्

न च करणीभूतशब्दगतातिशयहेतुत्वात् श्रवणस्य करणत्वेनाङ्गित्वं मनननिदिध्यासनयोस्तु सहकारिभूतचित्तगतातिशयहेतुत्वात् फलोपकार्यङ्गतेति वाच्यम् । करणीभूतसोमयागे शब्दस्थानीयेऽतिशयाधायकं करणान्तर्गतं तात्पर्यावधारणस्थानीयमभीषवादिकं प्रति शब्दसहकारिचित्तस्थानीयदीक्षणीयाङ्गस्य मननादिस्थानीयस्य प्रयाजादेरङ्गत्वापत्तेः ॥

### मननस्य परोक्तचित्तैकाग्र्यहेतुत्वखण्डनम्

किञ्च लोके परोक्षधीजनकत्वं शब्दस्य क्लृप्तम् । तथा च शब्दातिशयाधायकस्य श्रवणस्य साक्षात्कारफलजनकमननाद्यङ्गित्वमनुपपन्नम् । मननस्य युक्त्यनुसन्धानरूपस्यायुक्तत्वशङ्कानिवर्तकतैव दृष्टा । न तु चित्तैकाग्र्यहेतुत्वम् । तत्कल्पने दृष्टहान्यापत्तेः । मननविधेस्तवाप्यपूर्वविधित्वापत्तेः । 'मतिर्यावदयुक्तता' इतिस्मृतिविरोधाच्च ॥

### अद्वैतसिद्ध्युक्तपक्षान्तरखण्डनम्

एतेन तादृक्शङ्कायां सत्यां नानाकोटौ चित्तविक्षेपस्य तस्याश्च निवृत्तौ युक्तत्वेनावधारणविषया कोटौ चित्तप्रवणतायास्तात्पर्यमिति निरस्तम् । विपरीतशङ्कानिवृत्तौ प्रवणताया अर्थसिद्धत्वात् । रूप्यसंस्कारानुवृत्तावपि शुक्तिसाक्षात्कारदर्शनेन विपरीतभावनाया ज्ञानप्रतिबन्धकत्वासिद्ध्या तन्निवृत्तेर्ज्ञानहेतुत्वासिद्धेश्च । न चेयं शुक्तिरिति ज्ञानानन्तरं तद्रजततया ज्ञातमिति स्मृतेर्ज्ञानगोचरसंस्कारसत्वेऽपि तद्रूप्यमित्यस्मरणेन विपरीतसंस्कारनिवृत्तिस्तत्राप्यस्तीति वाच्यम् । रूप्यसंस्कारसत्वेऽपि शुक्तिसाक्षात्कारवत्प्रपञ्चसंस्कारसत्वेऽपि ब्रह्मसाक्षात्कारसंभवेन न निदिध्यासनं संस्कारनिवृत्तिद्वारा ब्रह्मसाक्षात्कारहेतुरित्यात्र त्वदुक्तार्थव्यधिकरणत्वात्। अश्रुतस्यामतस्य निदिध्यासनासंभवात् सामर्थ्यरूपलिङ्गेन 'ततस्तं पश्यते निष्कलं ध्यायमानः'[१] इत्यादिवाक्येन च निदिध्यासनस्य फलसंबन्धात् प्रकरणेन च श्रवणादेर्हि निदिध्यासनाङ्गत्वम्॥

न च 'द्रष्टव्यः श्रोतव्यः' इति पाठसान्निध्यात् श्रवणे फलसंबन्धः। पाठस्य लिङ्गाद्यपेक्षया दुर्बलत्वात् । न च निदिध्यासनरूपभावना प्रकर्षजन्यत्वे साक्षात्कारस्य स्त्रीसाक्षात्कारवदप्रमात्वापत्तिः । मूलप्रमाणदार्ढ्येन विषयाबाधेन च प्रामाण्योपपत्तेः । अतः श्रवणमननाङ्गकनिदिध्यासनसहकृतेन मनसैव हरेरापरोक्ष्यम् ॥

॥ इति श्रवणमननयोर्निदिध्यासनाङ्गत्वोपपत्तिः ॥

---

१. आथ.उ. ५.८.

## ७. अथ जिज्ञासासूत्रस्य मननविधिमूलत्वम्

'अथातो ब्रह्मजिज्ञासा' इति सूत्रं मननविधिमूलकम् । तत्सूत्रोक्तविचारस्य तत्त्वनिर्णायकन्यायानुसन्धानरूपत्वात् । अन्यथा न्यायग्रनथनात्मकशास्त्रारंभसिद्धये तत्कर्तव्यतोक्तिरित्युक्ता स्यात् । न तु श्रवणविधिमूलकम् । जिज्ञासासूत्रस्य श्रवणविधिसमानविषयत्वाभावेन तन्मूलकत्वासंभवात् ॥

### ब्रह्मोपयुक्तविचारकर्तव्यताप्रतिपादकमादिसूत्रं मननविधिमूलकम्

किञ्च युक्तायुक्तत्वसंशयादेः संशयपूर्वक्षसिद्धान्तैः मीमांसाशास्त्रग्रथितात् संशयादिनिवर्तकात् न्यायजातादन्येनानिवृत्तेः तादृशन्यायग्रथनात्मकमीमांसाशास्त्रत् ब्रह्मोपयुक्तविचारकर्तव्यतां प्रतिपादयदादिसूत्रं मननविधिमूलकमेव । न च तात्पर्यविषययुक्तत्वादिसंशयादिनिवर्तकविचारापेक्षया तात्पर्यनिर्णायकश्रवणाक्षिप्तलिङ्गविचारस्याभ्यर्हिततया तदाक्षेपकश्रवणविधिमूलकत्वं युक्तमिति वाच्यम् । तात्पर्यनिर्णायकलिङ्गविचारापेक्षया लिङ्गतात्पर्यायुक्तत्वादिशङ्कानिवर्तकविचारस्यैवाभ्यर्हितत्वात् ॥

### अद्वैतसिद्ध्युक्तश्रवणमननभेदखण्डनम्

यत्तु समन्वयाध्यायोक्ततात्पर्यनिश्चायकोपयुक्तयुक्त्यनुसन्धानं श्रवणम् । द्वितीयाध्यायोक्तयुक्तानुसंधानं मननमिति । तत्र 'आदौ यच्छ्रद्धया सिद्धं पश्चान्यायेन साधितं' इति न्यायेन युक्त्यनपेक्षश्रद्धामात्रेण प्रतिवाक्यं 'अयमस्य वाक्यस्यार्थः' इति गुरुमखाद्वेदार्थग्रणं श्रवणम्। पश्चान्न्यायानुसंधानं मननमिति भेदसंभवे युक्तिष्वेव

श्रवणमननभेदकल्पनानौचित्यात् । 'मन्तव्यश्चोपपत्तिभिः' 'मतिर्यावदयुक्तता'[१] इत्यादिस्मृतेः ।।

।। इति जिज्ञासासूत्रस्य मननविधिमूलत्वम् ।।

।। इति श्रुतिसिद्धान्ततत्त्वरत्नप्रकाशिकायां श्रीरामाचार्यविरचितायां तृतीयपरिच्छेदः ।।

१. ब्र.सू.भा. ४.१.१२ इत्यत्रोदाहृतवचनम् ।

# अथ चतुर्थपरिच्छेदः

## १. अथ मुक्तौ तारतम्योपपत्तिः

मुक्तसङ्घा हि नन्दन्ति छायां यत्पादयोः श्रिताः ।
तं वन्दे श्रीहयग्रीवं श्रीसेवितपदाम्बुजम् ।।१।।

उक्तसाधनसंपन्नैर्हरिप्रासादभागिभिः ।
प्राप्यते यत्फलं श्रेष्ठं तदत्र वर्ण्यते स्फुटम् ।।२।।

कर्मक्षयः समुत्क्रान्तिरर्चिरादिगतिस्तथा ।
पूर्णानन्दानुभूतिश्चेति मुक्तिश्चतुर्विधा ।।३।।

हरिप्रसादयुक्तस्य स्यादेकस्य क्रमादियम् ।
तारतम्येन सा हि स्यात् स्वरूपाणां तथात्वतः ।।४।।

प्राणोदारहणपूर्वं चतुर्विधमुक्तिस्वरूपप्रदर्शनम्

भगवदपरोक्षहेतुकतत्प्रसादात् जीवं प्रति ब्रह्माच्छादिकाया कर्मरूपाविद्याया अनाद्यविद्यायाश्च निवृत्तिः । अथ देहादुत्क्रमणम्। ततोऽर्चिरादिमार्गेण लोकविशेषस्थं हरिरूपविशेषं प्राप्य लिङ्गदेह-जीवपूर्णानन्दाच्छादकाविद्यानाशपूर्वकं स्वपूर्णानन्दाविर्भावरूपां मुक्तिमाप्नोति । 'तदधिगम उत्तरपूर्वाघयोरश्लेशविनाशौ तद्व्यपदेशात्'[१] इति सूत्रात् । तस्य ब्रह्मणोऽधिगमे ज्ञान सति उत्तरस्य भाविनोऽघस्य पापस्यासंश्लेशोऽसंबन्धः पूर्वस्य कृतस्य विनाशः । 'तद्यथा पद्मपलाश आपो न श्लिश्यन्ते एवंविदि पापं कर्म न श्लिष्यते । तद्यथेषीकातूलमग्नौ

---

१. ब्र.सू. ४.१.१३

प्रोतं प्रदूयतैवं है वास्य सर्वे पाप्मानः प्रदूयन्ते'[१] 'क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे'[२] इति श्रुत्या 'ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुतेऽर्जुन'[३] इति स्मृत्या च ज्ञानात्कर्मक्षयव्यपदेशात् । 'नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि' इत्यादिश्रुतिस्तु प्रारब्धकर्माभिप्राया । 'तासां मूर्धानमभिनिःसृतैका तयोर्ध्वमायन्नमृतत्वमेति'[४] 'स एवं विद्वानस्माच्छरीरभेदादूर्ध्वमुत्क्रम्यामुष्मिन् स्वर्गे लोके सर्वान् कामानास्वाऽमृतः समभवत्'[५] इति श्रुत्या,

ऊर्ध्वमेकः स्थितिस्तेषां यो भित्वा सूर्यमण्डलम् ।
ब्रह्मलोकमतिक्रम्य तेन याति परां गतिम्[६] ।।

इति स्मृत्या चोत्क्रमणोक्तेः । 'यो वेद निहितं गुहायां परमे व्योमन् । सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता'[७] इति श्रुतेः ।।

उक्तश्रुतीनामवान्तरमोक्षविषयकत्वनिराकरणम्

न च सोऽवान्तरमोक्षः । 'अस्माच्छरीरात्समुत्थाय परंज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते । स तत्र पर्येति जक्षन् क्रीडन् रममाणः'[८] इत्यादिना स्वस्वरूपाविर्भावरूपपरममोक्षोक्तेः ।

---

१. छा.उ.

२. आथ.उ. ४.११.

३. भग.गी. ४.३७

४. काठ.उ. २.३.१७.

५. बृ.सू.भा. ४.४.२३. इत्यत्रोदाहृता श्रुतिः ।

६.

७. तैत्त.उ. २.२.

८. छा.उ. ८.१२.३.

'न तस्य प्राणा उत्क्रामन्ति'[१] इति श्रुत्या मुक्तसंबन्धिप्राणानामनुक्रमणमुक्तम् । ननु[२] जीवस्य । अनुत्क्रमणजन्माभावात् प्राणोत्क्रमणरूपं मरणं तस्य न भवतीति भावः । 'यो कामो निष्कामं आप्तकामं आत्मकामो न तस्मात् प्राणा उत्क्रमन्ति'[३] इति वाक्यस्य पुनस्तस्मात् प्रणोत्क्रमणं न भवतीत्यर्थः । 'न जायते म्रियते वा कदाचित्'[४] इति श्रुतेः । न च जीवनित्यत्वपरेयं श्रुतिर्न तु प्राणोत्क्रमणाद्यभावपरेति वाच्यम् । विपश्चिदिति वैय्यर्थापत्तेः । स्वरूपनित्यताया अज्ञसाधारण्यात् ।।

केषाञ्चित् चतुर्विधमुक्तिः केषाञ्चित् तिस्र इत्यादिकथनम्

निवृत्ताविद्यानां च स्त(स्व)लिङ्गादेहानां[५] जलेन तडगघटकरकशरावादीनामिव हरिप्रसादेन स्वयोग्यतानुसारादाविर्भूतानन्देन पूर्णानां सालोक्यसारूप्यसामीप्यसायुज्यभेदात् चतुर्विधा मुक्तिः । तत्र केषाञ्चिदेका, केषाञ्चिद्वे, केषाञ्चित् तिस्रः, केषाञ्चित् चतस्रः । यथा [६]तलोकस्थशुकशारिकादीनां, यथा तत्सारूप्यं प्राप्नुवतां द्वारपालानां, यथा च गरुडादीनां, यथा च विग्रहविशेष्वेव यं प्राप्य नीडात् पक्षिवत् बहिर्गतानां सालोक्यादिकं प्राप्नुवतां नन्दसुनन्दादीनामिति विवेकः ।।

---

१. बृ.उ. ६.४.६.
२. 'नतु' इति स्यादिति भाति ।
३. बृ.उ. ६.४.६
४. भग.गी. २.
५. 'तल्लिङ्गदेहानां' इति स्यादिति भाति ।
६. 'तल्लोकस्थ...' इति स्यादिति भाति ।

ऐच्छिक एव तेषां विग्रहः । 'सङ्कल्पादेव तच्छ्रुतेः'[१] इति सूत्रात्। 'यदि पितृलोककामो भवति संकल्पादेवास्य पितरः समुत्तिष्ठन्ति'[२] इत्यादिश्रुतेश्च ।।

### सायुज्यपदस्य ऐक्यार्थकत्वनिराकरणम्

न च सायुज्यमैक्यमिति शङ्क्यम् । सह युनक्तीति संयुक् । सयुजो भावः सायुज्यमिति व्युत्पत्या संबन्धविशेषस्यैव सायुज्यपदार्थत्वात् । 'अथ पुनर्मृत्युं जयति ब्रह्मणः सायुज्यं गच्छति' इत्यादिश्रुतेरपि सम्बन्धपरत्वात् । 'यद्देवानामेव महिमानं गत्वाऽऽदित्यस्य सायुज्यं गच्छति । पितृणामेव हि स्थानं गत्वा चन्द्रमसः सायुज्यं गच्छति । अग्नेर्वायोरादित्यस्य सायुज्यं गच्छति' इत्यादिश्रुतिषु सायुज्यशब्दस्य संबन्धविशेषे प्रसिद्धेः । न चात्र सायुज्यशब्दस्यैक्यपरत्वशङ्कापि । मुक्तौ परेणापि जीवानामभेदानङ्गीकारात् । एकत्रैक्यं प्राप्तानामन्यत्रागमनासंभवाच्च । अत एव 'अन्तरं ब्रह्मविदो विदित्वा लीना ब्रह्मणि तत्परा योनिमुक्ताः' इति श्रुतिरपि व्याख्याता । एकत्र वृक्षे लीनानां पक्षिणां वृक्षादिभेददर्शनाच्च ।।

### मुक्तावपि भेदसमर्थनं, मुक्तानां दिव्यविग्रहोपपादनं च

'पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनामृतत्वमेति' इत्यादिश्रुत्या भेदज्ञानस्यैव मोचकत्वोक्तेः मोक्षेऽपि भेद आवश्यकः। 'यथाक्रतुरस्मिंल्लोके पुरुषो भवति तथेतः प्रेत्य भवति'[३] इत्यु-

---

१. ब्र.सू. ४.४.८

२. छा.उ. ८.२.१.

३. छा.उ. ३.१४.१.

'न तस्य प्राणा उत्क्रामन्ति'[१] इति श्रुत्या मुक्तसंबन्धिप्राणानामनुक्रमणमुक्तम् । ननु[२] जीवस्य । अनुत्क्रमणजन्माभावात् प्राणोत्क्रमणरूपं मरणं तस्य न भवतीति भावः । 'यो कामो निष्कामं आप्तकामं आत्मकामो न तस्मात् प्राणा उत्क्रमन्ति'[३] इति वाक्यस्य पुनस्तस्मात् प्रणोत्क्रमणं न भवतीत्यर्थः । 'न जायते म्रियते वा कदाचित्'[४] इति श्रुतेः । न च जीवनित्यत्वपरेयं श्रुतिर्न तु प्राणोत्क्रमणाद्यभावपरेति वाच्यम् । विपश्चिदिति वैय्यर्थापत्तेः । स्वरूपनित्यताया अज्ञसाधारण्यात् ।।

केषाञ्चित् चतुर्विधमुक्तिः केषाञ्चित् तिस्र इत्यादिकथनम्

निवृत्ताविद्यानां च स्त(स्व)लिङ्गादेहानां[५] जलेन तडगघटकरकशरावादीनामिव हरिप्रसादेन स्वयोग्यतानुसारादाविर्भूतानन्देन पूर्णानां सालोक्यसारूप्यसामीप्यसायुज्यभेदात् चतुर्विधा मुक्तिः । तत्र केषाञ्चिदेका, केषाञ्चिद्द्वे, केषाञ्चित् तिस्रः, केषाञ्चित् चतस्रः । यथा [६]तलोकस्थशुकशारिकादीनां, यथा तत्सारूप्यं प्राप्नुवतां द्वारपालानां, यथा च गरुडादीनां, यथा च विग्रहविशेष्वेव यं प्राप्य नीडात् पक्षिवत् बहिर्गतानां सालोक्यादिकं प्राप्नुवतां नन्दसुनन्दादीनामिति विवेकः ।।

---

१. बृ.उ. ६.४.६.
२. 'नतु' इति स्यादिति भाति ।
३. बृ.उ. ६.४.६
४. भग.गी. २.
५. 'तल्लिङ्गदेहानां' इति स्यादिति भाति ।
६. 'तल्लोकस्थ...' इति स्यादिति भाति ।

ऐच्छिक एव तेषां विग्रहः । 'सङ्कल्पादेव तच्छ्रुतेः'[१] इति सूत्रात्। 'यदि पितृलोककामो भवति संकल्पादेवास्य पितरः समुत्तिष्ठन्ति'[२] इत्यादिश्रुतेश्च ।।

### सायुज्यपदस्य ऐक्यार्थकत्वनिराकरणम्

न च सायुज्यमैक्यमिति शङ्क्यम् । सह युनक्तीति संयुक् । सयुजो भावः सायुज्यमिति व्युत्पत्या संबन्धविशेषस्यैव सायुज्यपदार्थत्वात् । 'अथ पुनर्मृत्युं जयति ब्रह्मणः सायुज्यं गच्छति' इत्यादिश्रुतेरपि सम्बन्धपरत्वात् । 'यद्देवानामेव महिमानं गत्वाऽऽदित्यस्य सायुज्यं गच्छति । पितृणामेव हि स्थानं गत्वा चन्द्रमसः सायुज्यं गच्छति । अग्नेर्वायोरादित्यस्य सायुज्यं गच्छति' इत्यादिश्रुतिषु सायुज्यशब्दस्य संबन्धविशेषे प्रसिद्धेः । न चात्र सायुज्यशब्दस्यैक्यपरत्वशङ्कापि । मुक्तौ परेणापि जीवानामभेदानङ्गीकारात् । एकत्रैक्यं प्राप्तानामन्यत्रागमनासंभवाच्च । अत एव 'अन्तरं ब्रह्मविदो विदित्वा लीना ब्रह्मणि तत्परा योनिमुक्ताः' इति श्रुतिरपि व्याख्याता । एकत्र वृक्षे लीनानां पक्षिणां वृक्षादिभेददर्शनाच्च ।।

### मुक्तावपि भेदसमर्थनं, मुक्तानां दिव्यविग्रहोपपादनं च

'पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनामृतत्वमेति' इत्यादिश्रुत्या भेदज्ञानस्यैव मोचकत्वोक्तेः मोक्षेऽपि भेद आवश्यकः। 'यथाक्रतुरस्मिंल्लोके पुरुषो भवति तथेतः प्रेत्य भवति'[३] इत्यु-

---

१. ब्र.सू. ४.४.८

२. छा.उ. ८.२.१.

३. छा.उ. ३.१४.१.

पायफलयोरेकाकारतया: श्रुत्युक्तत्वात् । 'जगद्व्यापारवर्जं'[१] इति सूत्रेण मुक्तानामीश्वरत्वनिषेधाच्च । न ह्यभेदे तन्निषेधो युज्यते ।

ये च मुक्ता भवन्तीह नरा भरत सत्तम ।
तेषां लक्षणमेतत् यत् श्वेतद्वीपनिवासिनाम् ।।

तत्र नारायणपरा मानवाश्चन्द्रवर्चसः ।
अतीन्द्रिया अनाहारा अनिष्पन्दाः सुगन्धिनः ।।

एकान्तिनस्ते पुरुषाः श्वेतद्वीपनिवासिनः ।
तत्र ये पुरुषा सर्वे पञ्चेन्द्रियविवर्जिताः ।।

प्रतिबुद्धाश्च ते सर्वे भक्तश्च पुरुषोत्तमम् ।
अर्चयन्ति सदा देवं तैः सार्धं रमते च सः ।।

न तत्राभ्यधिकः कश्चित् सर्वे ते समतेजसः ।
कृताञ्जलिपुटा हृष्टा नम इत्येव वादिनः ।।

इति भारते मुक्तानां प्राकृतविग्रहाभावेऽपि दिव्यविग्रह उक्तः । विग्रहोऽपीच्छाधीन एव न त्वावश्यकः । 'अशरीरो वाव तदा भवति' इति श्रुतेः ।।

प्राकृतशरीराभावेऽपि मुक्तानां स्वरूपदेहेन भोगसमर्थनम्

अशरीरत्वेऽपि स्वरूपेणैव तेषामानन्दानुभवरूपो भोगः । 'चितिमात्रेण तदात्मकत्वादित्यौडुलोमिः'[२] इति सूत्रात् चितिमात्रेण स्वरूपेण केषाञ्चित् मुक्तानां भोगः । चिन्मात्रात्मकं हि मुक्तानां

---

१. ब्र.सू. ४.४.१७.

२. ब्र.सू. ४.४.६.

स्वरूपमित्यर्थकात् 'सर्वं ह वा एतदचित्परित्यज्य चिन्मात्र एवैष भवति । चिन्मात्र एवावतिष्ठते । तामेतां मुक्तिरित्याचक्षते'[१] इत्यादिश्रुतेश्च ।।

### मुक्तौ जीवानां तारतम्यकथनम्

सा च मुक्तिस्तारतम्येन भवति । जीवस्वरूपाणां तारतम्ययुक्तत्वात्। न च 'निरञ्जनः परमं साम्यमुपैति'[२] इति श्रुतिविरोधः । सातिशयत्वेन मुक्तेः स्वर्गादिवदनित्यत्वे अधिकदर्शनात्, दुःखद्वेषेर्षादिकं च स्यादिति वाच्यम् । निर्मुक्तत्वपूर्णत्वादिनैव साम्योक्तेः । 'जगद्व्यापारवर्जं' इति सूत्रेणेश्वरवैलक्षण्यस्य जीवेषूक्तेश्च। जन्यस्यैव सातिशयस्य भावस्य नाशो दृष्टः । तारतम्ययुक्तस्य प्रागविद्ययाऽऽच्छादितस्य जीवानन्दस्याविद्यानिवृत्तौ स्वप्रकाशतयाऽवस्थानं मुक्तिः । 'न जायते म्रियते वा विपश्चित्'[३] इत्यादिश्रुत्या जीवोत्पत्तिनिषेधात् । गुर्वाद्याधिक्यदर्शनस्य सुखहेतुताया एव दृष्टत्वेन स्वोत्तमदर्शनस्य दुःखाद्यहेतुत्वात् । दुःखादिहेत्वविद्याविद्यकयोर्नाशाच्च । विभुत्वाणुत्वशेषत्वाशेशित्वस्वातन्त्र्यपारतन्त्र्यजगत्कर्तृत्वाकर्तृत्वादिना जीवेशयोस्तारतम्यं जीवान् प्रति शेषिणो लक्ष्मीतत्त्वात्, तान् प्रति नियामकात् विष्वक्सेनादिश्चेतरेषामपकृष्टत्वात् जीवानां परस्परं तारतम्यम् ।।

### श्रुत्या मुक्तावानन्दतारतम्यसमर्थनम्

'सैषाऽऽनन्दस्य मीमांसा भवति । ते ये शतं मानुष आनन्दाः। स एको मनुष्यगन्धर्वाणामानन्दः । श्रोत्रियस्य चाकामहतस्य'[४]

१. ब्र.सू.भा. ४.४.६. इत्यत्रोदाहृता श्रुतिः ।
२. आथ.उ. ५.३.
३. भग.गी. २.१६
४. तैत्त.उ. २.१७.

इत्यादितैत्तरीयश्रुत्या, 'अथ ये शतं देवानामानन्दाः । स एक आजानजदेवानामानन्दाः । यश्च श्रोत्रियोऽवृजिनोऽकामहतः'[१] इत्यादिवाजसनेयश्रुत्या 'अक्षण्वन्तः कर्णवन्तः सखायो मनोजवेष्वसमा बभूवुः'[२] इत्याद्यैतरेयश्रुत्या, 'नृपाद्याः शतधृत्यन्ता मुक्तिगा उत्तरोत्तरम् । सर्वैर्गुणैः शतगुणा मोदन्ते'[३] इत्यादि श्रुत्या च, 'मुक्तानामपि सिद्धानां नारयणपरायणः । सुदुर्लभः प्रशान्तात्मा कोटिष्वपि महामुने'[४] इत्यादिस्मृत्या च मुक्तानां तारम्यसिद्धिः ।।

अनुमानेन मुक्तानामानन्दतारतम्यसमर्थनम्

मुक्तजीवभोगः ईश्वरभोगान्निकृष्टः जीवभोगत्वात् । संसारिभोगवत्। एवं जीवज्ञानं पक्षीकृत्य प्रयोग ऊह्यः ।।

ईश्वरानन्दो जीवानन्दादुत्कृष्टः तन्नियामकानन्दत्वात् । ईश्वरो जीवस्वभावानन्दादुत्कृष्टस्वभावानन्दादिमान् तत्प्रेप्सुत्वे सति तत्र शक्तत्वात् । एवमस्मदादिभोगः मुक्तचतुर्मखभोगादपकृष्टः अस्मदादि-भोगत्वात् संसारस्थास्मदादिभोगवदित्यनुमानानि च मानम् ।।

न च मुक्तौ जीवत्वेश्वरत्वासिद्ध्याऽऽश्रयासिद्धिसाध्याप्रसिद्धिस्व रूपासिद्ध्यादिदोषः । 'तैः सार्धं रमते च सः' इत्याद्युक्तभारतवचनेन जीवेशादेः सिद्धेः । 'परंज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते' इत्यादिश्रुत्या प्राप्यप्रापकभावेन तत्सिद्धेश्च ।।

---

१. बृ.उ. ६.३.३३.

२. ऋ.सं. १०.७१.७.

३. वि.त.नि. तृतीयपरिच्छेदोदाहृतपाद्मवचनम् ।

४. भाग.पु. ६.१४.५

### 'सैषाऽऽनन्दस्य' इत्यादिश्रुतेरौपाधिकानन्दपरत्वनिषेधः

न च सैषाऽऽन्दस्येत्यादिश्रुतिरौपाधिकानन्दपरा । औपाधिकान्दस्यामीमांसत्वात् । उपाधेरश्रवणाच्च । स्वरूपसुखानां प्रत्येकमेकत्वेनाणुत्वेन च संख्यापरिमाणकृतवैषम्याभावेऽपि जलसुधापानजन्यसुखयोरिव मधुरमधुरतरत्वादिवच्च स्वरूपकृतवैषम्यं मुक्तौ युक्तम् । जन्यवैषयिकसुखे तारतम्यस्य साधनतारतम्याधीनत्वेऽपि मुक्तैरनुभूतनित्यानन्दे मुक्तमानसिद्धतारतम्यस्य साधनतारतम्यानपेक्षणात् ।।

### अकामहतशब्देन तारतम्यसमर्थनम्

किञ्चोत्तरोत्तरं शतगुणानन्दप्रकाशकवाक्येषु प्रतिवाक्यं मुक्तावकामहतशब्दप्रयोगात् मानुषानन्दादकामहतमुक्तानन्देऽपि तातरम्यं सिद्धम् । न चैवं 'तस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति'[१] इति सर्वेषां लौकिकानन्दानां परमानन्दान्तर्भावोऽनेन वाक्येनोक्तः। लौकिकानन्दस्यानित्यस्य नित्यस्वरूपानन्दान्तर्भावासंभवात् । सर्वभूतानां परमानन्दस्वरूपेश्वराधीनत्वस्यैव वाक्येन बोधनाच्च । 'सोऽश्नुते सर्वान् कामान्' इत्यनेनापि स्वयोग्यसर्वकामावाप्तिरेवोच्यते ।।

### अद्वैतसिद्ध्युक्तश्रुतिविरोधपरिहारखण्डनम्

किञ्चैकस्य श्रोत्रियस्य सर्वत्र परामर्शे मानुषादिभ्यः सावधारणं शतगुणितमानुष्यगन्धर्वाद्यनेकानन्दानामेकस्मिन् विरोधात् । भिन्नस्य परामर्शे ह्यकामहतत्वादेरेकरूपतया श्रुतस्याव्यवस्थापकत्वात् आनन्दव्यवस्था न स्यात् । यदि व्यवस्थार्थं तत्र तत्र तत्पदाकामः

१. बृ.उ. ६.३.३२.

तदितरपदकामश्च लक्ष्यते तदाऽश्रुतकल्पना बाधश्च । न हीन्द्रादिपदे राजपदे वा निष्कामस्य भिक्षुकस्य इन्द्राद्यानन्दानुभवोऽस्ति । तस्मात् श्रुत्या पूर्ववाक्येन मुक्तानां तारतम्यमुक्त्वा 'श्रोत्रियस्य च' इत्यादिना 'यश्च श्रोत्रियः' इत्यादिना चोत्तरवाक्येन मुक्तस्य तदुच्यते । न च सर्वेषु वाक्येष्वकामहतस्यैकत्वेऽपि तदानन्दे सर्वानन्दानामन्तर्भावः। स एव तस्मिन् तस्मिन्नानन्दे वक्तव्ये परामृश्यते । तत्तदिन्द्रादिसाम्येन तस्य सर्वत्राभिधानोपपत्तिरिति वाच्यम् । मुक्तानन्दे सर्वेषां मुक्तान्दानामन्तर्भावे मानाभावात् ।।

साधनतारतम्येन मुक्तावानन्दतारतम्यकथनम्

मुक्तसुखं परस्परतारतम्यवत् परस्परतारतम्यवत्साधनवत्वात् संमतवत् । न चासिद्धिः । 'भक्तिः सिद्धेर्गरीयसी' इति स्मृत्या अल्पभक्तिसाध्यमुक्त्यपेक्षया अधिकमुक्तिहेतुभक्तेरप्याधिक्यस्योक्तेः ।

'अन्ये त्वेवमजानन्तः श्रुत्वाऽन्येभ्य उपासते ।
तेऽपि चातितरन्त्येव मृत्युं श्रुतिपरायणाः[1] ।।'

इत्यत्रापिशब्देन

'स्त्रियो चोरास्तथा शूद्रास्तेऽपि यान्ति परां गतिम् ।
किंपुनर्ब्रह्मणाः पुण्या भक्ता राजर्षयस्तथा[2] ।।'

इत्यत्र कैमुत्येन च साधनतारतम्येन साध्येऽपि तत्सिद्धेः । न च साधनतारतम्यं न फलतारतम्ये प्रयोजकम् । दण्डतारतम्येऽपि घटे तददर्शनात् । दृष्टस्थळे तददर्शनेऽप्यदृष्टघटितसाधनस्थले साधनन्यूनत्वे

---

१. महा.भीष्म. ३५.२५
२. गी.ता. ९.३३.

अधिके च फले तदावश्यकत्वात् । अन्यथा शतगोदानैकगोदानयोः सहस्राश्वमेधैकाश्वमेधयोश्च तुल्यफलकत्वापत्तेः । 'अधिकं तव विज्ञानमधिका च गतिस्तव'[१] इति मोक्षधर्मे साधनतारतम्येन साध्ये तदुक्तेः ।

साधनस्योत्तमत्वेन साध्यं चोत्तममाप्नुयुः ।
ब्रह्मादयः क्रमेणैव यथाऽऽनन्दश्रुतौ...[२] ।। इति ब्राह्म्योक्तेश्च ।

न चान्यथाभावं विहायाविर्भूतनिजरूपेणावस्थानं मुक्तिः । स्वरूपाणां चैकाकारत्वात् कथं तारतम्यमिति वाच्यम् । 'यो यद्रूप स तद्रूपः निसर्गो ह्येष भवति'[३] इत्यादिश्रुत्या,

अवजानन्ति मां मूढा मानुषीं तनुमाश्रितम् ।
राक्षसीमासुरीं चैव प्रकृतिं मोहिनीं श्रिताः ।।

महात्मानस्तु मां पार्थ दैवीं प्रकृतिमाश्रिताः ।
भजन्त्यनन्यमनसो ज्ञात्वा भूतादिमव्ययम्[४] ।।

त्रिविधा भवति श्रद्धा देहिनां सा स्वभावजा ।
सात्विकी राजसी चैव तामसी चेति तां श्रुणु ।।

श्रद्धामयोऽयं पुरुषो यो यच्छ्रद्धः स एव सः[५] ।

१. महा.शान्ति. ३१३.४४.
२. ब्र.सू.भा. ३.२.२० इत्यत्रोदाहृतब्राह्मवचनम् ।
३. ब्र.सू.भा. ३.४.४० इत्यत्रोदाहृता श्रुतिः ।
४. भ.गी. ९.११-१३
५. भ.गी. १७.२,३

इत्यादिस्मृत्या चतुर्मुखादेरितरेभ्य उत्कर्षस्य दृष्टेनादृष्टेन वाऽगन्तुकहेतुना साध्यत्वे तत्रापि हेत्वन्तरान्वेषणेऽनवस्थापत्त्या अनादियोग्यतापरपर्यायः स्वाभावो हेतुर्वाच्य इत्यादियुक्त्या च तारतम्यस्य स्वभावत्वात् । 'तद्यथा पेशस्कारी पेशसो मात्रामुपादायान्यन्नवतरं रूपं तनुते । एवमेवायमात्मेदं शरीरं निहत्याविद्यां गमयित्वा अन्यं नवतरं कल्याणं रूपं कुरुते । पित्र्यं वा गान्धर्वं वा दैवं वा प्राजापत्यं वा ब्राह्मं वाऽन्येषां भूतानां'[१] इति श्रुतौ लिङ्गदेहाविद्यानिवृत्तेरूर्ध्वमपि पितृत्वाद्युक्तेश्च ।।

।। इति मुक्तौ तारतम्योपपत्तिः ।।

## २. अथ परमते जीवन्मुक्तिभङ्गः

स्वमते जीवन्मुक्त्युपपादनम्

ब्रह्मापरोक्षज्ञानिनोऽपि स्वयोग्यपरमानन्दहेतुपरमकाष्ठापन्नभक्त्यभावेन तत्साध्यस्य मोचकस्येश्वरप्रसादस्य जीवे संबन्धाभावेन प्रारब्धकर्मणा संसारानुवृत्त्या जीवन्मुक्तिः । भक्तेः सत्वे तु प्रसाद स्याविर्भावनिःशेषदुःखादिनिवृत्तिविशिष्टा स्वतोनीचाद्यभावा यत्र स्वरूपानन्दाविर्भावरूपमुक्तिर्युक्तेति ।।

परमते जीवन्मुक्त्यनुपपत्तप्रदर्शनम्

परमते तु जीवन्मुक्तिर्न युक्ता । अज्ञाननिवृत्तौ तदुपादेयस्य देहादेरवस्थानासंभवात् ।।

---

१.बृ.उ. ६.४.१४

### संस्कारानुवृत्त्या जीवन्मुक्तिरिति अद्वैतसिद्ध्युक्तपक्षखण्डनम्

एतेन निवृत्तसर्पभ्रमस्यापि संस्काराद्भयकंपानुवृत्तिवत् दण्डसंयोगनाशेऽपि चक्रभ्रमणवच्च संस्कारानुवृत्तेरविद्यानिवृत्तावपि तत्कार्यानुवृत्तिसंभव इति निरस्तम् । उपादाननाशे उपादेयस्थितेः क्वाप्यदर्शनात् । न च विनश्यदवस्थस्य समवायिहेतुं विना स्थितिर्दृष्टा । समवायिहेतुनाशे क्षणं कार्यावस्थितिरिति मतस्याप्रामाणिकत्वात् । द्वितीयादिक्षणावस्थानस्य क्वाप्यदर्शनाच्च । न चाविद्यालेशानुवृत्तिः स्वीक्रीयते । पूर्वज्ञानानिवृत्तस्यानधिकविषयकोत्तरज्ञानेन निवृत्त्यसंभवात् । ज्ञानानिवर्त्यस्य सत्त्वापत्तेश्च । ज्ञानेन स्वप्रागभावे निवृत्ताविवाज्ञाननिवृत्तौ प्रतिबन्धकाभावादेः सहकारिणोऽनपेक्षणाच्च ।।

### अर्थावभासजनिकायाः शक्तेरनुवृत्तिरिति मतखण्डनम्

एतेनानेकशक्तिमदविद्यायाः प्रपञ्चे पारमार्थिकत्वादिभ्रमहेतुशक्तेः प्रपञ्चे अर्थक्रियासमर्थत्वसंपादकशक्तेश्च प्रारब्धकर्मसमकालीनेन तत्त्वसाक्षात्कारेण निवृत्तावप्यपरोक्षप्रतिभासयोग्यार्थावभासजनिकायाः शक्तेरनुवृत्तिः, तद्वत् अविद्यापि तिष्ठत्येवेत्यपि निरस्तम् । पूर्वज्ञानेनानिवृत्तस्यानधिकविषयकेणोत्तरज्ञानेन निवृत्तेरसंभवात् । अविद्यानुवृत्तावपि जीवन्मुक्तिस्वीकारे विदेहमुक्तावप्यविद्यानुवृत्तिप्रसंगाच्च ।।

### जीवन्मुक्तिविषये परोक्तप्रमाणखण्डनम्, अविद्यालेशेन जीवन्मुक्तिरिति पक्षखण्डनम् च

न च 'तस्याभिध्यानाद्योजनात् तत्त्वभावात् । भूयश्चान्ते विश्वमायानिवृत्तिः'[1] इति श्रुतिस्तत्रमानम् । भूय इत्यस्य

१.ब्र.सू.भा. ३.२.२७ इत्यत्रोदाहृतवचनम् ।

योजनादित्यनेनान्वयात् । लेशानुवृत्तावस्याः श्रुतेरमानत्वात् । न च विशेषणान्वयापेक्षया विशेष्यान्वयोऽभ्यर्हितः । सकृन्निवृत्तस्य निवृत्त्ययोगेन तदन्वये बाधात् । न चान्त इति व्यर्थम् । परमात्मनो ध्यानात् भूय इन्द्रियवृत्तीनां योजनात् ध्यानपरिपाकरूपंते(?)[१] सति तत्त्वसाक्षात्कारोत्थभगवत्प्रसादाद्विश्वमायानिवृत्तिरित्यर्थोपपत्तेः । लेशस्थितौ कर्मानुवृत्तिस्तदनुवृत्तौ चाज्ञानप्रतिबन्धेन लेशस्थितिरित्यन्योन्याश्रयात् । न चैककालीनत्वेन स्थित्यादौ नान्योन्याश्रयः । अपेक्षायामेवान्योन्याश्रयदोषात् ।।

## मोक्षस्य प्रसादहेतुकत्वसमर्थनम्

यत्तु 'तस्य तावदेव चिरं'[२] इत्यादिश्रुत्या अस्योत्पन्नात्मसाक्षात्कारस्य प्रारब्धकर्मक्षयमात्रमपेक्षणीयं कैवल्यसंपत्त्यर्थमिति प्रतिपादनेन ईश्वरप्रसादो नापेक्षत इति चेन्न । 'बन्धको भवपाशेन भवपाशाच्च मोचकः[३]' 'मत्प्रसादादवाप्नोषि शाश्वतं पदमव्ययम्'[४] इत्यादिमानादीश्वरप्रसादस्य मोचकत्वसिद्धेः । न च 'दृष्ट्वैव तं मुच्यते'[५] इत्यादिश्रुतिविरोधात् स्मृतिरन्यथा नेया । अयोगव्यवच्छेदपरत्वेन श्रुतेर्व्याख्यातत्वात् ।।

।। इति परमते जीवन्मुक्तिभङ्गः ।।

---

१. 'रूपे' इति स्यादिति भाति ।

२. छा.उ. ६.१४.२.

३. वि.त.वि प्रथमपरिच्छेदे ।

४. भग.गी. १८.५६.

५. ब्र.सू.भा. ३.३.४९ इत्यत्रोदाहृता कौशिकश्रुतिः ।

## ३. अथ परमते अविद्यानिवृत्तिभङ्गः

अविद्यानिवृत्तेरात्मरूपत्वतद्भिन्नत्वपक्षयोः दोषकथनम्

परमतेऽविद्यानिवृत्तिरूपमुक्तिरनुपपन्ना । तथा हि सा किमात्मरूपा तद्भिन्ना वा । नाद्यः । असाध्यत्वापत्तेः । द्वितीयेऽपि किं सती मृषा वा । आद्येऽद्वैतहानिः । द्वितीयेऽविद्यादेः सत्यत्वापत्तिः । न च चरमवृत्त्युपलक्षितात्मरूपाऽऽज्ञानहानिः । तथा चोपलक्षणसाध्यतयैव साध्यतेति वाच्यम् । काकाद्युपस्थाप्योत्तृणत्वादेरिव वृत्त्युपस्थाप्यधर्मस्य ब्रह्मणि त्वयाऽनङ्गीकारेण तस्योपलक्षणत्वासंभवात् । वृत्त्युपलक्षणस्य पश्चादिव वृत्तेः प्रागपि सत्वेनाज्ञानकालेऽपि मोक्षापत्तेः । न च पूर्वमसिद्धं नोपलक्षणम् । एवं हि वृत्तावेव साध्यत्वं पर्यवसन्नम् । तच्चायुक्तमात्माश्रयापत्तेः । सिद्धस्यापि पाकादेरिच्छाकृतिविशेषोपलक्षितस्येष्टत्वकृतिसाध्यत्वापत्तेश्च ।।

वृत्त्युपलक्षितात्मनोऽज्ञानहानित्वपक्षे दोषकथनम्

किञ्चोपलक्षणापाये उपलक्ष्यस्य मोक्षस्याप्यपायः स्यात् । न च पाकापायेऽपि पाचकत्वापायो न दृष्टः । पाचकत्वं हि यदि पाककर्तृत्वं तदा अपचति चैत्रे तत्प्रयोगोऽभूतपूर्वन्यायेनौपचारिकः। यदि तु पाककर्तृतावच्छेदकावच्छिन्नत्वं तत्कर्तृत्वात्यन्ताभावानधिकरणत्वं वा तद्द्वयमपि पश्चादप्यस्ति । न चैवं मुक्तावात्मभिन्नयोग्यत्वादिकं तवास्ति । चिन्मात्रं तु प्रागप्यस्तीत्यसाध्यत्वमेव स्यात् । पाकोपलक्षितत्ववत् वृत्त्युपलक्षितत्वस्याधिक्ये सविशेषत्वापत्तिः । न चोपलक्ष्यस्यासाध्यत्वेऽप्युपलक्षणगतसाध्यत्वेनोपलक्षित साध्यत्वोपपत्तिर्घटाकाशोत्पत्तिवदिति वाच्यम् । वृत्तेः सुखदुःखाभावान्यतरभिन्नायाः स्वतः पुरुषार्थत्वाभावेन तदर्थं प्रवृत्तेरनुपपत्तेः ।।

### अद्वैतसिद्ध्युक्तपक्षखण्डनम्

यत्तु अविद्यानिवृत्तिस्तद्विरोधिवृत्तिरेव यावत्कार्योत्पत्तिविरोधिकार्यमेव हि ध्वंस इति मन्मतमिति । तन्न । वृत्तौ नष्टायां विरोधिकार्यान्तरानुदये द्वैतस्योज्जीवनापत्तेः । तदुदये हि तेनैवाद्वैतहानिः। न च चरमवृत्तिध्वंसोऽधिकरणमात्मा । प्रगुक्तदोषात्। सापेक्षनिरपेक्षयोरागन्तुकानागन्तुकयोश्चाभेदासंभवाच्च ।।

### चरमवृत्त्युपलक्षितात्मनः मोक्षत्वे दोषकथनम्

किञ्च वृत्त्युपलक्षित आत्मा जीवन्मुक्तावप्यस्तीति तदापि मोक्षापत्तिः । न च चरमवृत्त्युपलक्षित आत्मा मोक्षः । जीवन्मुक्तिप्रयोजकवृत्त्यपेक्षया परममुक्तिप्रयोजकवृत्तावानन्दाभिव्यक्तिगतविशेषाभावे चरमक्षणेन चरमश्वासेन वोपलक्षित आत्मा मुक्तिरित्यविगमनापत्तेः । न च प्रारब्धकर्मप्रयुक्तविक्षेपाविक्षेपाभ्यामभिव्यक्तिविशेषोऽङ्गीक्रियते । निर्विशेषे भाताभातविभागाभावेन तज्ज्ञाने विषयप्रयुक्तविशेषस्यालीकत्वात् । अविद्यानिवृत्तिर्वृत्तिरिति पक्षे मोक्षेऽनुभूयमानकृतिसाध्यत्वाद्यनुपपत्तेः । त्वया ज्ञानस्य कृतिसाध्यत्वादेर्निरासात् ।।

### अद्वैतसिद्ध्युक्तसमाधानखण्डनम्

यत्तु पुरुषार्थस्यानन्दप्रकाशस्यासाध्यत्वेऽपि तन्निरोधायकाज्ञाननिवर्तकवृत्तेः साध्यत्वमात्रेण साध्यत्वोपपत्तिः । कंठगतचामीकरादौ तथा दर्शनादिति । तन्न । निर्विशेषस्य तिरोधाने जगदान्ध्यापत्तेः।।

।। इति परमते अविद्यानिवृत्तिभङ्गः ।।

# ४. अथ परमतेऽविद्यानिवर्तकभङ्गः

### वृत्तिप्रतिबिम्बितचैतन्यस्य तत्प्रतिफलितचैतन्यस्य वा अज्ञाननिवर्तकत्वखण्डनम्

परमतेऽविद्यानिवर्तकमप्यसंभवि । न च वृत्तिप्रतिबिम्बितचैतन्येन चित्प्रतिबिम्बधारिण्या तया वा तन्निवर्त्यते । ब्रह्माविषयिण्यां चरमवृत्तौ त्वया ब्रह्मविषयकचित्प्रतिबिम्बनानङ्गीकारात् । आपाततो वेदान्तजन्याया जीवन्मुक्तिप्रयोजिकायाश्च वृत्तेः, परममुक्तिहेतुवृत्तौ विषयचित्प्रतिफलनाफलनाभ्यां विशेषाभावेनापातजन्यवृत्तित एव परममोक्षापत्तेश्च । चाक्षुषादिवृत्तेरपि तव ब्रह्मविषयकत्वचित्प्रतिबिम्बग्राहित्वयोः सत्वेन ततोऽपि मोक्षापत्तेः । निवर्तकतायां नियमोपगृहीतवेदान्तश्रवणादिजन्यत्व निवेशे तु द्वेषनिवर्त्येच्छावत् बन्धस्य सत्यत्वापत्तेः । अज्ञानोपादेयवृत्त्याऽज्ञाननिवृत्तेरसंभवाच्च । न हि तंत्वादिनाशस्य पटादिनहितन्त्वादेः पटादिना निवृत्तिर्दृष्टा उक्ता वा इति वा पटः निवृत्तिर्दृष्टा युक्ता वा ।[१]

### निवर्तकज्ञानविषयविकल्पपूर्वं अज्ञाननिवर्तकखण्डनम्

किञ्च निवर्तकज्ञानं न शुद्धविषयकम् । तस्यानाशेन दृश्यत्वात् । नापि विशिष्टविषयकम् । तस्याध्यस्तविषयकत्वेन भ्रमत्वात् । न चोपहितविषयत्वेऽप्युपाधेरविषयत्वादभ्रमत्वापत्तिः । उपाधिविषयतां विनोपहितविषयकत्वासंभवात् । अन्त्यज्ञानस्यापि नाशकमसंभवि । न च तन्तुनाशस्य पटनाशप्रयोजकत्वदर्शनेन स्वोपादानाविद्यानाशस्यैव तन्नाशकत्वम् । तन्तुपटयोर्युगपदेवाग्निना नाशेन क्रमिकनाशदर्शनस्य त्वदीयस्य त्वादृशान्यस्य चाप्रामाणिकत्वात् ॥

१. 'न हि पटादिना तन्त्वादेः निवृत्तिर्दृष्टा युक्ता वा' इति भाठेन भाव्यमिति भाति ।

साक्षात्क्रियमाणसुखस्य पुमर्थत्वनिषेधः

यत्तु अविद्यानिवृत्तेर्वृत्तिरूपतया न निवर्तकखण्डनावाकाशः । वृत्तिनिवृत्तेरात्मरूपतया न तज्जनकखण्डनावकाश इति । तन्न । अविद्यानिवृत्तेर्वृत्तिरूपाया वेदान्तजन्यत्वेनाविद्याया ज्ञाननिवर्त्यत्वाभावेन सत्यत्वापात्तेः । अनित्यायाः वृत्तिनिवृत्तेः नित्यात्मरूपत्वासंभवाच्च । अतः सत्यस्यैव बन्धस्यापरोक्षीकृतेशप्रसादादेव निवृत्तिः ।।

।। इति परमतेऽविद्यानिवर्तकभङ्गः ।।

## ९. अथ चिदभिन्नसुखरूपतायाः पुमर्थत्वभङ्गः

'अहं सुखी स्यां' इतीच्छाभावेन सुखित्वमेव पुरुषार्थः । नतु सुखरूपत्वम् । पुरुषार्थस्येच्छानियम्यत्वात् । अन्यथा बौद्धमतसिद्धात्मनाशादिरपि पुमर्थः स्यात् । न च साक्षात्क्रियमाणसुखमेव पुमर्थः । संबन्धस्त्वनित्यत्वपारतन्त्र्यादिवदवर्जनीयसन्निधिः । ईश्वरादेरस्मदादिसुखं हि पुमर्थः स्यात् । न च हेयतया अज्ञातत्वमपि तत्र प्रयोजकम् । इश्वरादिनाऽस्मदादिसुखस्य हेयतया ज्ञातत्वादिति वाच्यम् । सुखं हि स्वरूपत एव दुःखवन्न हेयं, किन्तु स्वाधिकसुखकारणविघटकत्वेन स्वाधिकदुःक्खप्रयोजकत्वेन वा ज्ञानम्। ईश्वरे जन्यसुखस्य दुःखस्य चासंभावितत्वेन तस्य तद्धेयत्वज्ञाने मानाभावात् । स्वासंबन्धित्वादेव हेयत्वसंभवेन स्वसबन्धितयैव साक्षात्क्रियमाणसुखस्य पुमर्थत्वोपपत्तेः । अत एव निषिद्धसुखं संबन्धितयाऽधिकदुःखादिप्रयोजकतया च ज्ञातमेव हेयम्। मोक्षेन वा साक्षात्क्रियमाणसुखत्वाभावाच्च । न हि मोक्षे स्वरूपविषयिणी वृत्तिरस्ति । नवा स्वस्य स्वविषयता तवास्ति।।

### परमते पुमर्थत्वानुपपत्तिप्रदर्शनम्

किञ्च अहमर्थस्यैव 'अहं मुक्तः स्यां' इतीच्छाऽनुभूयते । तस्य च तव मोक्षे नाशात् कथं मोक्षः पुमर्थः । न च विशेष्यांशो मोक्षेऽप्यस्ति । विशिष्टगतेच्छादेर्विशेष्यगतत्वङ्गीकारे विशिष्टगतदृश्यत्व-मिथ्यात्वादेर्विशेष्यगतत्वापत्तेः ।।

किञ्च सुखस्य दुःखाभावमात्रत्वे वैशेषिकमोक्षवदपुमर्थत्वापत्तिः । भिन्नत्वे सद्वितीयतापत्तिः । आत्मनः सुखमात्रत्वे सुखप्रकाशाभावे-नापुमर्थत्वं स्यात् । उभयात्मकत्वे चाखण्डार्थत्वहानिः । अर्थभेदा-भावे सुखप्रकाशपदयोः पर्यायता वा स्यात् । न चाविद्याकल्पित दुःखजडात्मकत्वरूपव्यावर्त्यभेदेन तदुपपत्तिः । अविद्याकल्पितस्य वेदेनाबोधनात् । तद्बोधितस्याविद्याकल्पितत्वासंभवाच्च ।।

।। इति चिदभिन्नसुखरूपतायाः पुमर्थत्वभङ्गः ।।

### अन्तिममङ्गलानि

अल्पज्ञात् जीवतो भिन्नो वस्तुतः सर्वविद्धरिः ।
विश्वोदयादिकर्ता हि स्वतन्त्रः स नियामकः ।।१।।

वाच्यः सर्वश्रुतीनां हि सत्यानन्तगुणालयः ।
गुणानन्त्येन हि ज्ञातो मुक्तिदो नान्यथा क्वचित् ।।२।।

सत्यमशेषविश्वं स्यादक्षानुमानशब्दतः ।
अर्थक्रियादिकं न स्यात् ततोऽन्यथा भृशम् ।।३।।

नेश्वरः सर्ववत् सिद्धेदपरोक्षो भवेद्विभुः ।
अनादिवास्तवं बन्धं स भिनत्ति प्रसादतः ।।४।।

हरिप्रसादतो ध्वंसोऽविद्यालिङ्गशरीरयोः ।
आविर्भावो निजस्य स्यात् पूर्णानन्दस्य सर्वथा ।।५।।

तारतम्यतया स स्यात् स्वरूपाणां तथात्वतः ।
स्वयोग्यत्वेन पूर्णत्वादीर्षादिकं न युज्यते ।।६।।

सेशान् स्वं भजतः श्रिया सुरगणात् मुक्त्वाऽऽवृतः स्वेच्छया
यो मुक्तिं स्मृतमात्र एव ददतं धर्मार्थकामांस्तथा ।
वेदान्तैर्विहितैर्गुणैस्सदमितैर्नित्यैः स्वतन्त्रोऽस्ति यः
स श्रीमद्धयकन्धरोऽवतु सदा भक्तप्रियो नो हरिः ।।७।।

भुक्त्वा श्यामकमुष्टिं विपदमदमदपदानबन्धुर्द्विजातेः
दत्वा भूतीः पराः स्वाः धृतकर इति मां देहि मांपमयायः ।
द्रीयाद्यौः शाकलेशा त्रिभुवनमयुघज्वनां दुःप्रसाद्यः
सिद्धान्तीनां प्रकाशाद्धि मम यदुवरः कारितात् प्रापतांसः[१] ।।८।।

भगवतोङ्घ्रिकंजस्य श्रीगोपालस्य रेणवः ।
क्रियासुर्वैभवं वामधराशेश्च शोधनम् ।।९।।

द्वेःसहस्राधाध्वंसो ध्वान्ताच्चैतस्य सर्वथा ।
सिद्धातानां प्रकाशेन सदावयंतु सूरयः ।।१०।।

यदस्ति समीचीनं गुरोरेव न मेऽस्ति वा ।
ततो गुणादिकं मेने वेशाधीनस्य सर्वदा ।।११।।

।। इति श्रुतिसिद्धान्ततत्त्वरत्नप्रकाशिकायां श्रीरामाचार्यविरचितायां चतुर्थः परिच्छेदः समाप्तः ।।

## ।। श्रीकृष्णार्पणमस्तु ।।

१. अस्य श्लोकस्य अभिप्रायः सम्यक् नावगम्यते । मातृकान्तरालाभाच्च यथावत् मुद्रितः ।

